चन्द्रशेखर चन्द्रशेखर चन्द्रशेखर पाहि माम्।
चन्द्रशेखर चन्द्रशेखर चन्द्रशेखर रक्ष माम्॥

श्रीशिवः शरणम्


[...]दश-वर्षं ] October, 1960 [ द्वितीया संख्या

SPECIAL DIPAVALI NUMBER


# मञ्जूषा


सम्पादकः—श्रीक्षितीशचन्द्र-चट्टोपाध्यायः




## निष्किञ्चनयशोधरम्


डक्टर-श्रीयतीन्द्रविमल-चतुर्धुरीण-


विरचितम्


*Office :* 8, Bhupendra Bose Avenue, Calcutta—4.
Minimum Annual Subscription : Rupees Six only.
Foreign—Twelve shillings.
Single copy : One Rupee.

# मञ्जूषाया नियमावली

मञ्जूषाया वार्षिकं मूल्यमवरतो रूपकषट्कम् । आश्विन (September)-मासतो वर्षारम्भः । ग्राहकैर्वर्षस्य प्रथमसंख्यात एव ग्रहीतव्यम् ।

२। प्रतिसौरमासं दशमदिने ( आङ्गलमासस्य चतुर्विंशे दिवसे ) 8, Bhupendra Bose Avenue, Calcutta 4 इत्यतो मञ्जूषा प्रकाश्यते ।

३। मञ्जूषायास्तावद् भागत्रितयं वर्तते । तत्र प्रथमे भागे देवभाषां प्रविविक्षूणां कृते सरलाः श्लोका आभाणका आख्यानानि नाटकानि च सन्निवेश्यन्ते । द्वितीये भागे दार्शनिका निबन्धा व्याकरणालङ्कारादीनां विमर्शः पाठविचारो जिज्ञासा मीमांसा च प्रकाश्यन्ते । तृतीये भागे सानुवादाः पारसीकानां गाथाः साङ्लानुवादं निरुक्तं च प्रकाश्यन्ते ।




श्रीविश्वनाथ-चट्टोपाध्यायः ।

Phone :—55-4049 ८, भूपेन्द्र वसु आभेन्यु, कलिकाता ४

ॐ नमो बुद्धाय

डक्टर-श्रीयतीन्द्रविमल-चतुर्धुरीण-विरचितं

# निष्किञ्चन-यशोधरं नाटकम् ।

ज्योतिर्मयं बहुसुखाकरपुण्यधाम
बुद्धं कषाय-हरणं पुलकं धरायाः ।
वन्दे तथागत-हितैकसुखां प्रगोपां
दुःखापहां कषितहेमविभां च गोपाम् ॥१॥

नान्द्यन्ते सूत्रधारः ।

नमो जगज्ज्योतिषे परममहसे भगवते बुद्धाय ।

अद्य खलु कलिकातास्थ-प्राच्यवाणीकर्तृपक्षीयैरादिष्टोऽस्मि जनन्या यशोधरा-गोपायाः पुण्यलीलामवलम्ब्य किञ्चन नाटकं प्रयोक्तव्यमिति । तदधुना पश्चिमवङ्ग-राजकीय-संस्कृत-शिक्षा-परिषदध्यक्षेण डक्टर-श्रीयतीन्द्रविमल-चतुर्धुरीणेन विरचितं निष्किञ्चन-यशोधरं नाम संस्कृत-नाटकं प्रयोक्ष्यामहे ।

अहो महामाहात्म्यं संस्कृतसाहित्यस्य ।

यद्यपि पुरा जैना बौद्धाश्च स्वस्वधर्मप्रचारणाय संस्कृतभाषां न स्वीकृतवन्तः, तथापि कालक्रमेण तेऽपि भारतीयत्वाद् भारतवर्षस्य शाश्वत-भाषां जननीं संस्कृतभाषां स्व-स्वसाहित्यपुष्टिसंवर्धनार्थं बाहुल्येन स्वधर्म-माहात्म्यसंप्रचारणार्थञ्च अङ्गीचक्रुः । ततः तयैव संस्कृतभाषया रचितं निष्किञ्चनयशोधरम् अस्माभिः अद्य भारतीय-स्वाधीनतालाभानन्तरं

जातीयशक्तेः प्रोद्बोधनार्थं जातीयमिलन-सूत्रस्य दृढीकरणार्थञ्च भारतीयवर्तमानशिक्षा-केन्द्र-भूमौ कलिकातानगर्यां प्रोत्साहेन अभिनेष्यते ।

नटी । भाव ! कथं भवता भारतीय-स्वाधीनता-लाभानन्तरमिति कथ्यते ? कथं वा जातीय-शक्तेः प्रोद्बोधनार्थमिति ?

सूत्रधारः । आर्ये ! विगतशताब्दीत्रयं देशोऽस्माकं गाढतमःपरिवृत आसीत् । घोरामावास्यानिशानन्तरं यथा क्रमेण चन्द्रकला स्फुरति, तथा क्रमेण अस्माकं जातीयशक्तिरपि सर्वथा पूर्णतां गमिष्यति । श्रीलस्वामि-विवेकानन्द-रवीन्द्रनाथारविन्द-तिलक-गान्धिप्रभृतीनां स्वप्नोऽपि सार्थकरूपं लप्स्यते । साधना हि नितरां फलप्रसूः ।

स्रोतोधारा साधना-सागरोत्था
संख्याशून्यैरूर्मिभिः संपरीता ।
स्फारीभावो ह्रस्वता वा कदाचित्
स्यात्तोयानामत्र कालप्रभावात् ॥२॥
सा चोद्वेला क्षुब्धसर्वाङ्गलीला
काले काले भीमवायुप्रसङ्गात् ।
देशे देशे साधनास्रोतसां स्याद्
एषाऽवस्था क्षीणमध्याधिमात्रा ॥३॥
गम्भीरोऽयं भारते साधनाब्धिः
स्रोतश्चास्य क्षेमधैर्याद्युपेतम् ।
वृत्तिं हृद्यामुन्नयन् मानवानां
प्राणस्फूर्तिं भूयसा संविधत्ते ॥४॥

देशप्रेमिकाणाम् अननुमेय-कठोर-साधनायाः फलमवश्यं भावि । तेषामेव साधनाप्रभावेण भारतवर्षस्य शृङ्खलमुक्तिर्यथा संघटिता, तथा तदनन्तरं तेषां पदाङ्कानुसारेण कृतेऽस्माभिः प्रयासे जातीयशक्तेः प्रवृद्धिरपि अवश्यमेव घटिष्यते ।

एकस्मिन् परिवारे यथा वृद्धा माता तथाऽस्माकं बृहत्परीवारीभूत-भारतवर्षस्य सेयं वाग्देवीस्वरूपिणी संस्कृत-वाणी जननी। दृश्यतां साम्प्रतिके कालेऽपि वङ्गभाषागौरवरक्षणार्थं वङ्गभाषासमुन्नत्यर्थञ्च पूर्वपाकिस्तानवासिभिः किं किं न कृतम्? भूयोऽपि पश्यतु भवान् क्षुद्र-दृष्टान्तद्वारा। यद्यपि साम्प्रतं चट्टग्राम-मण्डलस्थाः सर्वे देशविभागहेतो-रितस्ततः परिक्षिप्ताः, तथापि केवलं चट्टलभाषामुखेण चट्टलजननी-सुताः सर्वे कीदृङ् मिलनभाजः—वाक्योच्चारणमात्रम् एतेषां हृदि विना पूर्वपरिचयं भ्रातृप्रेम प्रसरति। भारतवर्षस्य विषयेऽपि बृहदाकारेण स एव व्यापारः।

इयं संस्कृतभाषा अस्माकं महाजननीरूपिणी चिरस्थायिनी। अस्या एव शाश्वतसम्पत् अस्माभिः प्रत्यहं प्रतिकार्यं प्रादेशिकभाषाद्वारेणापि उपयुज्यते। प्रतिशतम् अशीतिः शब्दा निखिले भारते सर्वासु भाषासु समाना एव। ते सर्वे संस्कृतशब्दाः। अस्या एव भाषाया गरिम्णा वयं सर्वे गौरवम् आवहामः। आसमुद्रहिमाचलं प्रायशो भारतवासिनो वेद-रामायण-महाभारत-गीतोपनिषच्छास्त्रानुगामिन इति ध्रुवमेव। अपि परिज्ञातम्?

नटी। सम्यग् बुद्धं मया।

सूत्रधारः। तथा चेत्, अपरस्य प्रश्नस्योत्तरं त्वं स्वयमेव देहि।

नटी। आर्य! भाषायामास्ते अद्भुता समभाषाभाषिणां मेलयित्री शक्तिः। अस्या माध्यमेन एषां सर्वेषां हृदयानि एकहृदयवत् प्रतिभान्ति। अत एव संस्कृतभाषासमुन्नयनेन जातीय-मूलसूत्रस्य दृढीकरणमिति भवद्भिरुच्यते।

सूत्रधारः। सुष्ठु भणितं भवत्या। आर्ये! महती ते वाणी स्वर-लय-तानैः समलङ्कृता सर्वलोकविनोदाय भवतु।

नटी। बाढम्। (गायति)

(संस्कृत भाषा-जननी-स्तुतिगीतम्)

वन्दे त्वां देववाणि जननि

संस्कृतभाषाजननि ब्रह्मेन्द्ररुद्रवरुणमनोहारिणि।
त्वं निखिलविश्वभाषाजननी सत्यरूपधारिणी ॥५॥
सत्ययुगप्रारम्भात् प्रकटयसि तनुमृग्वेदमयीं जननि।
ज्ञानोन्मेषे कथयसि चाहं रुद्रेभिर्वसुभिश्चरामि ॥६॥
नास्ति तव तनुगौरवे मानसवैभवे काचन च लघुता।
त्वामर्चयन्ति सततं जापानामेरिका मिलिताः ॥७॥
सत्यामपि त्वयि जनाः किं भाषार्थं विवदन्ते जननि।
अधिकं किमतो दुःखं भारते नः सुधाधारावाहिनि ॥८॥
विपन्नं भरतवर्षं त्वद्गौरवलाघवहेतोर्नु भरणि।
त्वदेकसूत्रग्रथितो देशो नात्मानं जानाति धरणि ॥९॥
निखिलभारतमिलनैकसूत्ररूपिणि संस्कृतभाषा-जननि।
जगज्जननि वाग्रूपिणि भूयो भूयस् त्वां वन्दे पावनि ॥१०॥
बुद्धिं नो देहि जननि पुत्रान् सततं शाधि त्रवर्णिनि।
"चरैवेति चरैवेति" परजननि कल्याणशत-संसाधिनि ॥११॥

सूत्रधारः। सहजा किल नारीणां गूढार्थग्राहिणी शक्तिः संरक्षण-तत्परता च। नारीणां कृते अस्माकं भारतीयसभ्यता चिरस्थिरा वर्तते। नारीणां जागृतिरपि स्वाधीने भारते भूयिष्ठा जायतामित्यस्मिन् विषयेऽपि "निष्किञ्चन-यशोधरम्" अस्माकं साहायकं करिष्यति। अहो! नारीमहिम्ना, विशेषतो मातृमहिम्ना सर्वमेव महत् प्रजायते।

पृथिव्यां प्राणिनो धन्यास्तेषु धन्या नृजातयः।
नार्यस्तत्र महाधन्या धन्यास्तासु च मातरः ॥१२॥

नटी। आर्य! भवान् सर्वथा मधुरभाषी। मधुरसंभाषया सर्वं कारयितुं शक्नोति।

सूत्रधारः। मधुरभाषित्वं नाम नारीणामेव सहजम् अलङ्करणम्। सौन्दर्य-माधुर्य-महत्त्वमपि तासामेव। देवि, पश्य—सनातनकालात्

ज्ञानविज्ञानसाम्राज्ये देवो सरस्वतीश्वरी।
मधुरोज्ज्वलभावा सा पूज्यते च महर्षिभिः॥१३॥

नटी। अधुना मया किं करणीयं तदादिशतु भवान्।

सूत्रधारः। कथम् आदेशः? कः कामादेक्ष्यति। भवती महामातुर्विश्वजनन्या अंशरूपिणी सर्वं नाट्य-कार्यं परिचालयिष्यति, यथेयं पुरोगता यशोधरा गोपा सिद्धार्थेन सह एकस्मिन् दिने समे क्षणे जन्म स्वीकृत्य तस्यैव जीवनं नियन्त्रयन्ती तस्यैव धर्मम् अभ्युन्नतिं प्रापयन्ती तस्य सङ्घं च मातृस्नेहसुधया चिरसंपुष्टं करोति।

शक्तिं प्रदेहि कल्याणि सर्वमङ्गलसाधिकाम्।
इयं यशोधरा दत्ते शाक्यसिंहहिता यथा॥१४॥

( इति प्रस्तावना )

———

## प्रथमोऽङ्कः

### प्रथम दृश्यम्

( समयः—सायं-सन्ध्या )

( स्थानम्—गृह-वाटिका )

( ततः प्रविशति सायमुद्यानपरिभ्रमणरता गोपा )

गोपा । महामहिमान्वितः परमलावण्यधरो भगवान् मरीचिमाली साम्प्रतं कुत्र गच्छति ? समन्ताल् लसति रक्तविभा, महाकाशमपि अनुरागवत् सञ्जातम् । पक्षिणः पुत्रकन्यानां स्नेहातुरा आरटन्तो यान्ति कुलायान् । भगवान् विभावसुर्विरहातुरः सहस्रबाहुभिः कामन्विष्यति ? किं नु जीवनम् ? केवलमन्वेषणं चरणं वा ? केवलमन्येषां हितसाधनं यस्य परमं व्रतं सोऽयं भगवान् सूर्यदेवः ।

अहो कुत्र मे जीवनस्य सूर्यो यस्य विभाराशिभिरहं नित्यपूता भविष्यामि ?

सन्ध्यायाः करसङ्गतं भगवतो नीराजनाभाजनं
गच्छत्येष विभावसुर्विधिवशाद् दिक्चक्रवाले लयम् ।
क्वासौ मे भगवान् यदीयचरणोपान्ते नितान्तेप्सिते
दत्त्वा जीवनदीपमद्य मुदिता स्यां गोपिका कन्यका ॥१५॥

भवतु मयाऽपि भगवदाराधनतत्परया भवितव्यम् । तद् यामि देवमन्दिरम् । किन्तु कथमद्य मे हृदयं करुणं विलपतीव । संस्मरामीव कतिपयान् वृत्तान्तान् जन्मजन्मान्तरीयान् । कोऽपि मामन्विष्यतीव । अथवात्मकामः खलु जनः कथमपि आप्तकामो न भवति ।

( सखीमुद्दिश्य ) वनलतिके क्वासि ! एहि । साम्प्रतम् आराधन-तत्परा गन्तुकामाऽस्मि ।

शुद्धोदनपुरोहितः। ( प्रविश्य स्वगतम् )

अहो! राजकीयोऽनुरोध आदेश एव। राजकीयव्यापारे प्रेषणाध्येषणयोः को भेदः? स्नेहाकुलितचित्तेन राज्ञा शुद्धोदनेन अनुरुद्धोऽस्मि—"अन्विष्यतां सिद्धार्थाभिमतगुणसम्पन्ना वधू" रिति। तस्मादहं संवत्सरं यावद् गृहाद् गृहान्तरं मण्डलान् मण्डलान्तरं च यामि, न कुत्रापि तादृशी कन्या लभ्यते। सर्वगुणोपेतः सिद्धार्थश्च न कथञ्चनान्यादृशीं कन्याम् उपयंस्यते। महाराजोऽपि नितरां निर्विण्ण इव जातः। किं करोमि? सन्ध्याकालः समागतः। साम्प्रतं कुत्रापि निशायापनं करणीयमेव। ( इति परिक्रामति )

गोपा। सखि वनलतिके! त्वरितम् आगच्छ। अतिक्रामति भजनकालः।

पुरोहितः। अहो! अदूरान् नारीकण्ठ इव श्रूयते। किन्तु अपि नाम मया विनाऽनुमतिम् उद्यानप्रवेशः करणीयः? ग्रामाद् ग्रामान्तरम् परिभ्रमतो मे पादविस्फोटको जातः, शिथिलश्च देहबन्धः। यथा तथा वा भवतु, प्रविशामि।

सखी। ( प्रविश्य ) भो विप्रवर! भवान् भृशं परिश्रान्त इव परिदृश्यते। सायंकाले कुतो वा गतो भवान्? किं काऽपि सेवा मया कर्तुं पार्यते आर्यस्य?

पुरोहितः ( स्वगतम् )। अहो!

जन्मना जननी नारी दयास्नेहप्रपूरिता।
मातॄणां स्नेहसम्पर्काद् अरण्यानी गृहायते ॥१६॥

( सखीमुद्दिश्य ) मातः! कार्यव्यपदेशेन भ्रमणकातरस्य मे यामिनीयापनं कुत्रापि करणीयमिति चिन्तापरवशोऽस्मि।

वनलतिका। न चेद् भवतामनभिमतम्, अदूरस्थितम् अस्मत्-प्रभोरुद्यानम् आगच्छतु भवान्। तत्रास्ते मे प्रियसखी दण्डपाणि-दुहिता

गोपा। सा सर्वथाऽतिथिदेव-सेवनतत्परा। भवन्तम् अतिथिब्राह्मणं दृष्ट्वा परमहृष्टा भविष्यति।

पुरोहितः। यथा भवती इच्छति। ( उभौ परिक्रामतः )

गोपा। ( सखीं दृष्ट्वा ) अहो घूर्णनपटुके चटुले वनलतिके! त्वदाह्वानपराया मे कण्ठो भग्नो जातः। कुत्रासीः त्वम्?

( पुरतो ब्राह्मणं दृष्ट्वा )। आर्य! प्रणमामि भवन्तम्। क्षमस्व माम्। भवन्तम् अनवेक्षमाणाया मे इयमुक्तिः। सायं दृष्टो भवान् ब्राह्मणवर्यः। तस्मात् कृतार्था अस्मि, समयोचितं कथयतु।

वनलतिका। प्रियसखि! सोऽयं ब्राह्मणो नितरां भ्रमणखिन्न आस्ते। महान् अवसरोऽयम् अस्माकम् अतिथिसेवायाः।

राजपुरोहितः। कस्य महामतेर्गृहवाटिका इयम्? अपि सन्निहितो गृहस्वामी?

वनलतिका। न हि। तात-दण्डपाणिः स्वकार्यानुरोधात् स्थानान्तरं गतः। इदानीं तस्येयं प्राणप्रियतरा कन्यका गोपैव कर्तृपदवाच्या आस्ते।

गोपा। वनलतिके! पाद्यार्घ्यादिकम् अस्य कृते आनय।

( निष्क्रान्ता वनलतिका )

राजपुरोहितः। कल्याणि! परमरमणीयमिदं स्थानम्।

गोपा। देव सुखमास्यताम्। क्षणेनैव मम सखी पुनरावर्तिष्यते।

[ स्वगतम् ] अहो! समय एव आगतः खलु भगवत्-प्रेषितो जनः। यद्यपि नारीजनसुलभलज्जा मां सातिशयं बाधते, तथापि कर्तव्यस्य अवश्यकरणीयत्वात् मया स्वयमेव सर्वम् अस्मै निवेदयितव्यम्। सखी-समक्षं पुनरेतद्विषयकं वचो न सम्यक् स्फूर्तिं लभेत प्रकटनीयं वा स्यात्। ( राजपुरोहितमुद्दिश्य ) देव! दुर्लङ्घ्या खलु नियतिः। महता आयासेन भवता देशाद् देशान्तरं परिभ्रम्यते किन्तु न सा

राजपुत्रोद्दिष्टगुणा कन्या दृश्यते। राजपुत्रस्तादृशीं वधूं वाञ्छति यस्याः प्राप्तिर्दुष्करा एव।

राजपुरोहितः। किन्तु कथं तद् भवती जानाति ?

गोपा। भवताम् आशीर्वादैः। राजपुत्रः पञ्चदशगुणान्वितां वधूं वाञ्छति। सदा सत्यवाक्या, जन्मगोत्रकुलसुशुद्धा, गुणार्थ-युक्त-गाथालेख-सुनिपुणा, मैत्रचित्ता, त्यागरक्ता, श्रमणब्राह्मणेभ्यो दानशीला, अगर्विता, अप्रगल्भा, अनुद्धता, अवगुण्ठनरहिता, सदा धर्मयुक्ता, कायमनोवाक्यैः शुद्धभावा, श्वश्रूश्वशुरयोर्यथोचितप्रेमा, शास्त्रविधिज्ञा, मातृभूता च काचन वधूर्मया ज्ञायते।

यदि भवता ममापराधः क्षम्यते, अहं किमपि वक्तुमिच्छामि।

पुरोहितः। मातः ! त्वल्लक्ष्मीमूर्ति-दर्शनानन्तरं कोऽपि अनाविलो हर्षो मां त्वदभिमुखीकरोति। अपराधस्य का कथा; यदेव तुभ्यं रोचते, तदेवाकपटं प्रकटीकुरु। परमं शुभं त्वत्तो राजकुलस्य भविष्यतीति न कश्चन सन्देहः।

गोपा। पितः ! सहजा किल नार्या लज्जा। मनसि जायतां नाम भावः; वदनेन न कदाचित् प्रकाश्यते। तथापि उपायराहित्यान् मया भवत्पादपद्मे निवेद्यते—भवन्तस्तथा विदधतु यथा भवदभीष्टविषये विलम्बो न क्रियत इति।

पुरोहितः। [ स्वगतम् ]

चिन्ताबाह्यं चमकघटनं गूहनं यत्स्वरूपे
किञ्चिल्लक्ष्यं बहुलसमये प्रावृतं गूढरङ्गैः।
संसाराब्धेरतलसलिले तारकः प्राणपोतो
धन्या कन्या सहजसुभगा राष्ट्रसौभाग्यलक्ष्मीः ॥१७॥

( गोपामुद्दिश्य ) किन्तु स्नेहमयि जननि ! कुत्र सा राजपुत्रवधूः ? का वा भवती ? कथं वा विलम्बो न करणीयः ?

गोपा। (सलज्जं) भवत्कृपाख्याता सा दीना कन्या भवतां पुरत एव आस्ते। साऽहं महात्मनो दण्डपाणेः सुता गोपा तं राजपुत्रम् अपेक्षे। कालविलम्बः सर्वं रसं पिबतीति भवतां सुविदितमेव।

पुरोहितः। (सानन्दं) अहो! अपगतो मे सर्वः क्लेशः। फलावाप्तौ प्राणान्तकोऽपि क्लेशराशिर्निमेषाल्लोपं याति। बहोः कालात् परिभ्रमता मयाद्य लब्धो मनोरथः। अचिरादेव राजा शुद्धोदनो विज्ञापयितव्यः। असौ भृशं चिन्तातुर आस्ते। तन्मातरनुमन्यस्व मे प्रतिगमनम्।

गोपा। क्षणं भवन्तः कृपया तिष्ठन्तु। भवतां पाद्यार्घोपहरणाय गृहाभ्यन्तरं गता मे प्रियसखी। शीघ्रमेव सा प्रत्यावर्तिष्यते।

पुरोहितः। मातर्गोपे! जानात्येव भवती एतादृशेषु विषयेषु न जायते क्लान्तिर्यतमानस्य, भूयो यत्र विलम्बे बाधा संभाव्यते। अहो—

एकतः प्रयात्यस्तं मरीचिमाली मच्चित्ताशाभानुरुदेति चान्यतः।
एतयोर्निर्गमाभ्यागमान्तराले सायन्तने हृदये म आयात्यूषा ॥१८॥
घनान्धकारोऽसौ सूर्येण सह गतो नवालोको विभाति साकं तमोभिः
चमत्कारित्वं हन्त मानवमनसो हर्षेण हर्षोच्चयात् स्फूर्जताज् जगत् ॥१६

कल्याणि राजकुललक्ष्मि! पवित्रस्य ज्योतिष्मतः शाक्यराजवंशस्य अक्षय्यान् आशीर्वादान् गृहाण—चिरायुष्मती भव।

गोपा। भवच्चरणारविन्दे स्नेहधन्यायाः कन्यायाः कोटिशः प्रणतयः। निवेदयन्तु भवन्तः पूज्यपादाय राज्ञे मे भक्तिप्रणतिम्।

पुरोहितः। दुहितः! स्वस्त्यस्तु ते। (पुरोहितो निर्गतः)

गोपा। [स्वगतम्] न जाने किं संघटिष्यते। सर्वथा चिन्ताकुलं मे मनः। अथवा काल एव बलवान्। क्व अस्माकं शक्तिर्भवितव्यताधीने। भवतु विजयतां करुणामयस्य भगवतो विधानम्।

# प्रथमोऽङ्कः

## द्वितीय दृश्यम्

स्थानं—कपिलवास्तुराजप्रासादः। समयः—पूर्वाह्णः

[ ततः प्रविशति सिद्धार्थो राजपुरोहितः शुद्धोदनश्च ]

शुद्धोदनः। वत्स ! श्रुतः कुलपुरोहितादधरोत्तरः सर्वो वृत्तान्तस्त्वया। त्वरितं विवाहसंघटनाय मे सर्वः प्रयत्नो व्यर्थीकृतस्तेन कन्यकापित्रा दण्डपाणिना। यतः

विलासशतलालिते नृपतिभोगसंपालिते
न शाक्यतनये भवेद् गुणगणो हि मत्प्रार्थितः।
ददे कथमतः सुतामिति विचिन्तयन्मन्दधीः—
प्रदित्सति यशोधरामधर-दण्डपाणिर्न ते ॥२०॥

अतोऽहं नितरां हतबुद्धिरस्मि।

सिद्धार्थः। पितः ! अस्मिन् मया किं वक्तव्यं स्यात्। पूज्यपादो राजपुरोहितोऽत्र सानुग्रहं समुपस्थितः। ममाभिप्रायं सकृपमसावेव भवतां गोचरीभूतं करिष्यति।

राजपुरोहितः। राजन् अत्र किमपि चिन्ताकारणं नाहं पश्यामि। एवं खलु विज्ञाप्यतां दण्डपाणिः—

त्वद्वाञ्छातोऽप्यतिसमधिकः शौर्यवीर्यप्रधानः
सिद्धार्थेऽस्मिन् सुगुणनिचयो वर्तते राजपुत्रे।
अस्मद्वाक्ये यदि न कुरुषे प्रत्ययं तर्हि शीघ्रं
सर्वाध्यक्षं भवतु भवतां तत्परीक्षासमीक्षा ॥२१॥

शुद्धोदनः। किन्तु भगवन् ! दण्डपाणिरसौ मम सुपरिज्ञात एव। असौ दृढप्रतिज्ञो न किमपि कारुण्यं प्रदर्शयिष्यति। सिद्धार्थस्य माता

मायादेवी तस्य जन्मतः सप्तमदिवस एव दिव्यं धाम गता। तस्मात् कालादारभ्य देवी महाप्रजापतिर्गौतमी मातृशतात् अभ्यधिका भूत्वा तं पालितवती। यदि चाहं कथमपि स्वीकरोमि सिद्धार्थस्य परीक्षादानादि, तथापि न सा कदापि स्वीकरिष्यति। तदा किं करोमि।

राजपुरोहितः। महाराज अस्मिन् विषये भवतां चिन्ता स्वाभाविकी एव। मातापितृहृदयं नाम नवनीतकोमलं सर्वथा द्रवतीव। किन्तु—

विस्मर्तव्या कथमपि न सा दण्डपाणेस्तनूजा
गोपा नारीकुलकमलिनी सद्गुणाढ्या सुशीला।
हित्वा लज्जां युवतिसुलभां मामभाणीत् पुरा या
वर्तेऽपेक्ष्य क्षितिपतिसुतं तद्भवन्तस्त्वरन्ताम्॥२२॥

भूयोऽपि मया स्मर्यते—इयमेव गोपा राजपुत्राय स्वयम् एकदा निवेदितवती। "न वयं राजपुत्रं व्यलंकरिष्यामः, परन्तु मारम्" इति। तेनैव वचसा सा स्वयमेव सिद्धार्थं पतित्वेन गृहीतवती। साम्प्रतं तस्याः सर्वजनसमक्षं विवाहसंघटनं तस्याः पितृकुलात् समुद्धरणमेव, नान्यथा। तामनुद्धार्य कथं वयं स्थिरा भवेम।

सिद्धार्थः। भगवन्! चिराय स्नेहशीलेन भवता यत् कथितं तत् चिरक्षेमङ्करम् अस्माकम्।

शुद्धोधनः। भगवन्! यथा भवता उच्यते—सर्वथा गोपाऽस्माकं पुत्रवधूरेव जाता। कथं सा पितृकुले चिरं स्थास्यति। भगवान् कल्याणं विदधातु। केवलं सिद्धार्थो मातुः सकाशं गत्वा स्वयमेव तां प्रबोधयतु। स्नेहातुरा सा स्थिरा भवतु।

## प्रथमोऽङ्कः

## तृतीय-दृश्यम्

स्थानं कपिलवास्तुनगरस्य राजपथः। समयः—पूर्वाह्नः।

[ ततः प्रविशति वयस्य-खण्डध्वजेन सह देवदत्तः ]

[ सिद्धार्थ-देवदत्तद्वन्द्वम् ]

देवदत्तः। खण्डध्वज! सत्यमेव अमात्यदण्डपाणिना उक्तम्—असौ यशोधरा नारीकुलललामभूता श्रेष्ठधनुर्धरेण विजेया इति, ततः परीक्षां विना शाक्यराजपुत्रः सिद्धार्थों यशोधरां न लप्स्यते इति तेन उद्घोषितम्। एतत्तु मे सौभाग्यप्रसूतम्। यशोधरा मयैव लब्धव्या, यतः अचिरादेव प्रदर्शयिष्यामि मे धनुर्विद्याकौशलं येन यशोधरा-पिता प्रमुग्धो भविष्यति।

न मया सदृशः कश्चिद् वर्त्तते धरणीतले।
धनुर्युद्धे मल्लयुद्धे शस्त्रयुद्धे च पौरुषे ॥२३॥

अहो सुन्दरीश्रेष्ठा यशोधरा! कस्य खलु असौ सौभाग्यं वर्धयेत्। अहो मे दुर्भाग्यम् - कदापि न सा मां प्रति सदयं दृष्टि-क्षेपं करोति, भृशं यतमानमपि मां सा भ्रूक्षेपेणापि न तोषयति। तथापि तत्पाणिं ग्रहीतुकामेषु श्रेष्ठोऽहम्, कथं सा मां विहाय अन्यमाश्रयिष्यते! बन्धो! किं त्वं मन्यसे?

खण्डध्वजः। वयस्य! सति त्वादृशे महात्मनि राजपुत्रवरिष्ठे कथं महानाम-दण्डपाणिदुहिता अन्यस्य कण्ठे शोभेत। निखिले भुवने तादृशं माल्यं केवलं त्वय्येव शोभते। तथापि सा परीक्षालभ्या इति न विस्मर्तव्यम्। अदृष्टानुबन्धिनी खलु परीक्षा नाम।

परीक्षा जनानां महादुःखहेतु-
रकाण्डं विशिष्टं विधानं परेषाम्।

शरीराद्यपेक्षा प्रमादः प्रहासः
परीक्षाविमोक्षे प्रसादः कथं स्यात् ? ।।२४।।

परीक्षाफलेन सिद्धार्थो विजयेत चेत् किं त्वया करणीयम् ?

देवदत्तः । [ स्वगतम् ]

सुखदं वरदं मधुरान्मधुरं
निखिलं सुगमं कुशलं परमम् ।
विहितं यदि हा सुगतस्य कृते
मम तर्हि भवेद् विफलं सकलम् ।।२५।।

कस्य नु भगवत एतद् विधानम् । देवदत्तः कदापि न तदनुसरिष्यति ।

( प्रकाशम् ) किं करणीयमिति ? अहं देवदत्तो यशोधरायाः पतिं खण्डशः कुट्टयामि । यशोधरामपि

उन्मूल्य हृदयादस्मात् कोमलां वृत्तिसन्ततिम् ।
घोरां वृत्तिं समाश्रित्य निग्रहीष्ये च तामपि ।।२६।।

[ ततः प्रविशतः कतमोरकतिष्यः सगरदत्तश्च ]

देवदत्तः । आगच्छत भ्रातरः ! यूयं सर्वे मम बन्धवः—युष्मान् विना अहम् एतावत्कालं तारकाविहीनश्चन्द्र इव आसम् । उल्लसन्तु भवन्तः यद् आबाल्यं यस्या रूपगुणमुग्धोऽस्मि सा भाग्यवशात् ममैव अङ्क-शायिनी भविष्यतीति । को नाम सिद्धार्थो मां पराजेतुम् । को नाम अन्यो वा कपिलवास्तुनगर्यां यो धनुर्विद्यादिषु मां पराजेतुं शक्ष्यति । तस्मात् यशोधरा ममैव इति निर्धार्यताम् ।

कतमोरकतिष्यः । सख्यसूत्रम् अस्माकम् आजीवनम् अविच्छेद्यं भविष्यति यदि त्वं सिद्धार्थं पराजेतुं शक्नुयाः । असौ महाराज-शुद्धोदनस्य पुत्र इति कारणात् कथं सर्वेषां नयनमणिर्भवेत् ? देवदत्तमेव राजपुत्रेषु गरिष्ठं वयमुद्घोषयामः ।

सगरदत्तः। अस्मिन् विषये कः सन्देहः ? अस्माकं बन्धुर्वा नेता वा राजवंश्यः शाक्यकुलसमुद्भूतो देवदत्तः। तस्य विजयं वयं प्रार्थयामहे। जयतु देवदत्तः।

( प्रविश्य ) कश्चन पुरुषः—

शृण्वन्तु भवन्तः सर्वे पौरा जानपदाश्च ! दण्डपाणिर्महानामा समुद्घोषयति यो वीरोऽनुष्ठितायां परीक्षायां सर्वान् पराजेष्यते तस्मै एव मत्कन्या सर्वसौभाग्या यशोधरा प्रदातव्येति।

[ इति डिण्डिमं ताडयति ]

सगरदत्तादयः। अहो सौभाग्यम्। देवदत्त ! अग्रेसरो भव। यशोधरामाल्यम् अचिरेणैव कालेन गले धारय धारय।

[ नेपथ्ये कलकलः ] अपसार्यन्तां सर्वे बालवृद्धादयः, अयं मत्तहस्ती शृङ्खलमुक्त इत एव आगच्छति।

देवदत्तः। तत् समग्रनगरपरित्राणार्थम् अहमेव तं हनिष्यामि।

[ इति निष्क्रान्तः ]

( नगरद्वारं रुद्धीकृत्य पतितो हस्तिदेहः )

राजपुरुषः। ( प्रविश्य ) धिक् कष्टं नगरद्वारं रुद्धं कृतम् अनेन देवदत्तहतेन हस्तिना। न चायं सहस्रजनैरपसारयितुं शक्यः। तत् किं भविता। भवतु, महानाम्ने निवेदयिष्यामि [ इति गत्वा पुनः प्रविश्य ] भो भोः पौराः ! शृण्वन्तु भवन्तः, महानामा उद्घोषयति—यो नाम मृतहस्तिदेहं नगरप्राकाराद् बहिर्निक्षेप्तुं शक्ष्यति स एव वीरश्रेष्ठतया गणितो भविष्यति।

[ ततः प्रविशन्ति देवदत्तादयः ]

देवदत्तः। भो भोः पौराः किमिति कोलाहलं कुर्वन्ति भवन्तः। अत्यल्पमिदमुच्यते हस्तिदेहापसारणमिति। तदेतन्मम वयस्येन तिष्येणैव कर्तुं शक्यम्। भोस्तिष्य ! अपसारय हस्तिदेहम्।

तिष्यः। (स्वगतम्) अहो महानयं हस्ती। अशक्यः खल्वसौ अपसारयितुम्। (प्रकाशम्) भो वयस्य! शक्नोम्येनमपसारयितुं यदि धनुर्लप्स्ये! किन्तु धनुर्मया नानीतम्।

देवदत्तः। नन्विदं मदीयं धनुर्गृह्यताम् (इति धनुरुपानयति)।

तिष्यः। (विविधं सन्नह्य धनुरादातुं चेष्टमानः) भो वयस्य, कथमेतावत् भारि धनुः कृतम्? मम धनुः पुनः पुष्पवल्लघु विना आयासेन ग्रहीतुं शक्यते। तद् गृहं गत्वा धनुरादाय आगच्छामि।

देवदत्तः। अलं गृहगमनक्लेशेन, सुखमिहैव तिष्ठ। भोः सगरदत्त! त्वमेनं हस्ति-देहमपसारय।

सगरदत्तः। (स्वगतम्) यथा दृश्यते तथा असाध्यमिदं ममापि। तथापि यतिष्ये। (प्रकाशं) भो देवदत्त! दीयतां तावत् तावकं धनुः।

(सगरदत्तो देवदत्तधनुरादाय हस्तिदेहमपसारयितुं प्रवृत्तोऽपि अकृतार्थः सन् निवृत्तः)

देवदत्तः। हन्त सर्वेऽपि भग्नाः। तदिदानीं मयव अयं हस्तिदेहः—

दण्डपाणेः प्रतीत्यर्थं नेष्यते शतयोजनम्।
सुग्रीवस्येव रामेण दुन्दुभेः पञ्जरं महत्॥२७॥

(इति बाणं क्षिपति)

हन्त कथं नासौ चलत्यपि।

सागरदत्ततिष्यादयः। देवदत्त देवदत्त! भूयोऽपि बाणसन्धानं कुरु।

(देवदत्तः पुनरपि बाणं क्षिपति)

(भूयोऽपि डिण्डिमघोषणम्)

को नाम वीरो वर्तते कपिलवास्तुनगर्यां य इमं हस्तिदेहं बाणेन अपसारयितुं समर्थः स्यात्, अग्रेसरो भवतु अचिरात्।

सगरदत्तादयः। देवदत्त देवदत्त! भूयोऽपि यतस्व।

देवदत्तः—अहो किं मे जातम्। न मे शराघातेन मृतहस्तिदेहो दूरं याति, केवलं सप्तपदपरिमितस्थानादपसृतः। किं नु करोमि ?

( ततः प्रविशति सिद्धार्थः )

सिद्धार्थः—नगरपरिभ्रमणसमये श्रुतं मया भयचकितस्य कस्यचित् मुखात् मत्तहस्ती एकः शृङ्खलमुक्तो भयं जनयतीति।

( उपसृत्य राजपुरुषं प्रति )

भो यामिक ! किमिति कोलाहलः क्रियते ?

राजपुरुषः। कुमार ! कोऽपि मत्तहस्ती देवदत्तेन मारितो नगरद्वारं रुद्ध्वा पतित आस्ते। किन्तु एतैर्भूयसा यतमानैरपि नायमपसारयितुं शक्यते, एतच्छ्रुत्वा कुमारः प्रमाणम्।

सिद्धार्थः। तद् अस्य अपसारणे प्रयत्नो मया क्रियते।

( तस्य शरक्षेपणाद् अपसृतो हस्तिदेहः )

जनाः सर्वे—

जयताद् राजपुत्रो नो येन धनुर्बलादयम्।
प्राकारसप्तकात् पुर्या बहिर्नीतो मृतः करी ॥२८॥
अहो भाग्यं प्रजानां नो यासामेष प्रपालकः।
सिद्धार्थो भूरिसिद्धिर्हि देवदत्तः पराङ्मुखः ॥२९॥

## प्रथमाङ्के चतुर्थं दृश्यम्

स्थानं—दण्डपाणिगृहम्। कालो रात्रिः॥

[ ततः प्रविशति देवदत्तः कामार्त उन्मत्त इव। ]

देवदत्तः। या यशोधरा मे चक्षुषोस्तारकाभ्यामपि प्रियतरा, यस्या दन्तमुकुलहासो मे प्राणानां श्रेष्ठा शान्तिः, यस्या भ्रमरकृष्णकुन्तल-दाम मे चेतोहरणं, देहपुष्पं जगत् सुरभितं करोति, सा मम शाश्वतशत्रोः

सिद्धार्थस्य पत्नी भवितेति न मे सहनीयं कदापि कथमपि भविष्यति। यथा तथा वा भवतु, अहं स्वयं गत्वा तस्या बुद्धिबलाया यशोधराया अन्तिके स्वीयं मनोरथं निवेदयिष्ये। न चेदनुनयेन, बलात्कारेण राक्षसविधिना वा सा मया लब्धव्यैव। तद् यामि।

[ यशोधरासदनमभिलक्ष्य ]

अहो कोऽपि अत्र नास्ति। अथवा भवितव्यमेव केनापि। कः कोऽत्र भोः।

स्थूलोदरः [ द्वारी ]—अयमहमस्मि। को भवान् ? कुत्र यास्यति ?

देवदत्तः। अयमहं राजकुलसम्भूतो देवदत्तो यशोधरासन्दर्शनार्थमुपागतः। त्वरितं द्रष्टुकामोऽस्मि।

स्थूलोदरः। किन्तु कथमनार्येऽस्मिन् समये देवसनाथो भवान् आगतवान् ? साम्प्रतं नास्माकं चन्द्रमाः कस्मायपि दीप्तिविकरणं करिष्यति। नाहम् अस्मिन् आसुर-क्षणे देवीसकाशं जिगमिषामि। दर्शनादद्य प्रतिनिवृत्तो भवतु भवान्।

देवदत्तः। भो ! द्वाररक्षक ! त्वादृशान् बहून् द्वाररक्षकान् अहं जानामि। त्वद्विधा बहवो द्वारिणो मम गृहद्वारि वर्तन्ते। मम नाम तस्याः सकाशे न कथयितव्यम्। केवलं ब्रूहि, तस्या महोपकारसाधनार्थं कश्चन राजपुत्रः समागत इति।

स्थूलोदरः। (उदरं करेण प्रलिप्य) महोपकारसाधनार्थम् ? अस्माकं परमादरिण्या भगिनीमर्योर्यशोधरायाः ? क एतादृश उपकारः ?

देवदत्तः। नारीणां जीवनस्य या शाश्वती कामना तद्विषये उपकार एव। याहि त्वरितम्।

स्थूलोदरः। तद्विषये न भवान् प्रभुः। नाहं भवतोऽस्मिन् विषये सहायो भवेयम्।

देवदत्तः। एष नामतः स्थूलोदरः किन्तु कार्यतः सूक्ष्मबुद्धिरेव। किं करोमि। ( मुद्राः प्रदाय ) द्वारिन् ! गृहाण ते प्राप्यम्। त्वरितं ब्रूहि।

स्थूलोदरः। भवान् कथं त्वरितं त्वरितमिति वक्ति, त्वरया न तत्र किमपि कार्यं भविष्यति। मुद्राभिः किम्? एताः स्ववस्त्राभ्यन्तरे स्थापय। भवानत्र तिष्ठतु, अहमभ्यन्तरं प्रविशामि।

देवदत्तः। तदेव महत्त्वं यत्सङ्गगुणेन अधस्तना जना अपि कलुषिता न भवन्ति। न कदापि एतादृशः साधुजनो मम सहायो भविष्यति। यशोधरापि मम नाम श्रुत्वैव माम् उत्सारयिष्यति। तत् मया गूढं स्थातव्यम्।

स्थूलोदरः। (गृहाद् बहिरागत्य) भो राजपुत्रोत्तम! कुत्रासि? अहो कुत्र गत एष जनः? एष लम्पटोऽत्रैव कुत्रापि निश्चितं तिष्ठेत्। तत् कुत्रासौ?

[ देवदत्तमनुसन्धाय धृत्वा च ]

स्थूलोदरस्य हस्ते तेऽद्य निधनमास्ते। तिष्ठ रे राजपुत्रापसद!

देवदत्तः। [ स्थूलोदरस्य नासिकाया उपरि वस्त्रं धृत्वा आघ्राप्य ] निश्चलं तिष्ठ रे मूर्ख! अन्तर्गच्छामि—को बाधां दद्यात्?

[ अभ्यन्तरं प्रविशति ]

[ अभ्यन्तरप्रकोष्ठः। प्रविशति यशोधरा। ]

यशोधरा। कथं मे हृदयं वेपते? कार्यव्यपदेशादद्याहमेकाकिनी एव वर्ते। कस्य पादध्वनिः श्रूयते?

देवदत्तः।

सोऽयं जनस्तव मनागपि तुष्टये यो
दातुं स्वजीवनमपि व्यथते न जातु।
वाञ्छामि ते सुतनु सेवितुमङ्घ्रियुग्मं
त्वं मे दयस्व करभोरु भव प्रसन्ना ॥३०॥

यशोधरा। नैष समय आलापस्य। कृपया भवान् बहिर्गच्छतु। अन्यथाऽहं द्वाररक्षिसाहाय्येन……

देवदत्तः। असौ मया निद्रापितः। त्वामनाघ्राय नाहं बहिर्गच्छामि [ इति धर्तुमुद्यतः ]।

यशोधरा। पादपनसं पादाघातं विना न परिपक्वं जायते। रे मूर्ख! अपेहि इतः। क्षत्त्रकुलसम्भवाऽहं न त्वां तृणाय मन्ये। न यास्यसि चेत्........

[ कुक्कुरवत् पलायते देवदत्तः ]

यशोधरा। [ स्मरणम् अभिनीय ] अहो! यदा सिद्धार्थः कृशो बभूव, तदाहमासम् अप्रतिमा। एष आसीत् प्रतिद्वन्द्वी नृपतिर्जठरः। एवं प्रतिजन्म एष एव दुरात्मा आवां दन्दह्यते। किन्तु एष एव क्रमो जगतः।

## प्रथमोऽङ्कः

## पञ्चम-दृश्यम्

( प्रविशतश्चन्द्रसूर्यौ )

चन्द्रः। भो भ्रातः सूर्य! पण्डिताः कथयन्ति "सफलं ज्योतिषं शास्त्रं चन्द्रार्कौ यत्र साक्षिणौ"। सत्यम् आवां सर्वकर्मसाक्षिणौ एव, यथा साक्षात् चन्द्रार्कौ, आवयोर्नाम्नो महिमा सुप्रकटः। त्वं दिवाकरः, दिवा भ्रमसि, सर्वं दिवसकृत्यं पश्यसि। दिवसेष्वेव संघटन्ते महावृत्तान्ताः; तस्मात् ते महासौभाग्यम्!

सूर्यः। भ्रातश्चन्द्र! न जाने सौभाग्यं दुर्भाग्यं वेति? त्वमेव महा-सुखी। त्वयि सर्वं रहस्यं निहितम्। अदृश्ये वस्तुजाते सौन्दर्याधिक्यम इति कृत्वा त्वयि स्वत एव जनैर्महामाहात्म्यम् आरोप्यते। किन्तु आवयोर्दुःखं तद् यद् आवां सन्धिक्षण एव आलोचनं

कर्तुं शक्नुवः। साम्प्रतं युगसन्धिक्षणः, तस्मात् आवयोः संदर्शनं नु संघटितम्।

चन्द्रः। कथं पुनर्युग-सन्धिक्षणो नाम ?

सूर्यः। अपि न जानासि—

सिद्धार्थो नवनीतकोमलतनुश्चक्षुर्मणिर्भूपते-
राश्चर्यं गुणजातमस्य बहुधा लोके प्रतिष्ठां गतम्।
सप्ताभिन्त महीरुहान् किल गुरूनेकेन बाणेन यो
नाभूदस्य समो न चापि भविता शस्त्रेषु शास्त्रेष्वपि ॥३१॥

ईदृशगुणोपेतोऽपि असौ सर्वदा उदासीन इव तिष्ठति।

चन्द्रः। अहो! सर्वातिशायिनी ते वाक्यश्रीः। अहं पृष्टवान् "कथं युगसन्धिक्षणं" वदसि। त्वं किमुत्तरं ददासि।

मत्प्रक्रान्तं हित्वा तदेवमप्रस्तुताभिधानेन।
नूनं क्रियते भवता "धान्ये कण्डयितव्ये शिवगीतिः" ॥३२॥

सूर्यः। भोः सख! मा उल्लम्फनं कार्षीः। मया तदेव स्पष्टीक्रियते। युगसन्धिक्षणो राजपुत्रो युगन्धररूपेण आगत इति मे वचनाभिप्रायः।

चन्द्रः। अहो सूर्य! रात्रिचरोऽहम् एतद्विषये रहस्यं किञ्चित् उद्घाटयामि। अपि न जानासि यशोधराप्रणयोन्मत्तो देवदत्तोऽन्येद्यू रात्रौ पादाक्षिप्त इव यशोधरासकाशातः प्रत्यावर्तत इति? सा एव राजपुत्रवधूरूपेण समागता राजपरिवारे–स्वयमेव सिद्धार्थं पतित्वे अवृणोदिति लोकाः कथयन्ति। नारीणां जागृतिरपि युगसन्धिव्यञ्जिका इति ध्रुवमेव।

सूर्यः। अत एव ब्रवीमि भ्रातः! समये समये आवयोर्मेलनं परमहितकरमेव। दिनरात्र्योः सूर्याचन्द्रमसोर्वा मेलनं कस्य न अभिप्रेतम्। सिद्धार्थस्तव सम्पत्, देवदत्तो मम इत्यत्रैव मम विपत्तिः। तथापि दिवसयामिन्यौ, आलोकान्धकारौ च युगपदेव प्रचरिष्यतः।

प्रथमोऽङ्कः

षष्ठ-दृश्यम्

[ ततः प्रविशतो गोपा सिद्धार्थश्च ]

यशोधरा । नाथ !

पापीयस्या मम परिणयं दुर्भगाया विधातुं
सोढं घोरं दयित भवता यत् परीक्षादिदुःखम् ।
तन्मे नित्यं दहति हृदयं यत् पलालाग्निकल्पं
पापान्मोक्षो न किल भविता हन्त तेनापि किं मे ॥३३॥

अपि च

यद् दुःखं वरवारणस्य निधने यत्तस्य निष्काशने
प्राकाराच्छतयोजने यदुत वा सप्तद्रुमच्छेदने ।
एवं दुःखशतं परञ्च यदपि प्राप्तं परीक्षाकृते
विस्मर्तव्यमशेषतस्तदिति मे प्राक्प्रार्थना प्रेयसि ॥३४॥

सिद्धार्थः । प्रिये यशोधरे गोपे ! कथं त्वं कातरासि ? क्षत्त्र-सन्तानोऽहम्, यदहं विधिविहिते क्षात्त्रे कर्मणि नियुक्तस्तत् कुलानुरोधादेव । त्वत्पित्रा अस्मत्परीक्षा तु त्वदर्थमेव कृता । जगति दुःखं विना सुखं न लभ्यते । सर्वबाधापसारणपूर्वकं त्वं मया लब्धेति इतः अभ्यधिकं न मे किञ्चन सुखमस्ति ।

अन्यत् किमपि प्रष्टव्यमास्ते । देव्या कथं परिज्ञाता आसन् भविष्यविषयाः ?

यशोधरा । देव ! सा तु बुद्धिः स्मृतिर्वा नारीणां स्वाभाविकी एव । न केवलम् आजन्म परन्तु पूर्वजन्मत एव वयं नार्यः पतिविषयेऽहर्निशं चिन्तयामः । पतिविषयकं सर्वञ्च स्मरामः । नारीणां स्थानान्तरे भ्रान्तिर्भवतु वा न वा, पतिविषये कदापि न भवति । पर्वपूर्वजन्मसु यत्

भवता कथितं कृतं वा तत् सर्वमेव मया स्मर्यते। नैतत् जातिस्मरत्वात् परन्तु स्वाभाविकनारीधर्मत एव सम्भवति।

सिद्धार्थः। एवं तर्हि अस्मिन् जन्मनि किं किं त्वया मया आवाभ्यां युगपत् वा करणीयम्—अपि तद् वक्तुं शक्यते ?

यशोधरा। अवधारयतु नाथः, यद् यद् संघटिष्यते तत्र नियतिरेव बलीयसी। किन्तु भविष्यत् अस्माकं कीदृक् स्यात् तद्विषये मे सन्देहः कश्चन नास्ति। भवान् केवलं तथा विदधातु यथाऽहं तव साहाय्यकं कर्तुं प्रभवेयम्।

सिद्धार्थः। त्वदभिलषितं सार्थकतां यातु।

गोपा। अत एव भवान् प्रियो मे।

# द्वितीयोऽङ्कः

## प्रथमं दृश्यम्

स्थानं—कपिलवास्तुनगरस्य विपणि-केन्द्रम्। कालो—मध्याह्नः।

[ ततः प्रविशतः क्षुद्रग्रीवो लम्बकूर्चश्च ]

क्षुद्रग्रीवः। काले काले लम्बकूर्च ? किं न संघटते। कालो हि केवलं बलम्। पश्य अस्माकं राजपुत्रवधूः स्मरणातीतकालागतां कुल-प्रथामवमत्य अवगुण्ठनं न धत्ते। सती सावित्री अन्याश्च सर्वा असूर्यम्पश्या आसन्। अहो नारीधर्म ! कुत्रासि ?

लम्बकूर्चः। भो भोः क्षुद्रग्रीव ! यथा ग्रीवा ते क्षुद्रा तथा बुद्धिरपि ह्रस्वा। जङ्गले वससि त्वं राजधर्मस्य वा राजकुलनीतेर्वा किं जानासि ?

मूर्तिः परा हि रमणी रमणीयताया-
स्तिष्ठेद् बहिर्नयनयोर्यदि सा गृहान्तः।
हा हन्त नेत्रजनुषो महती क्षतिः सा
किं वार्यते सुरभिणः कुसुमस्य गन्धः ? ॥३५॥

क्षुद्रग्रीवः। रे मूढ हतभाग्य लम्बकूर्च ! कूर्चास्ते यथा लम्बास्तथा ते चक्षुषी अपि लम्बे यत् राजपुत्रवधूमपि चक्षुर्भ्यां पातुम् इच्छसि। राज-कुलवधू राज्यस्य सर्वासां नारीणाम् आदर्शस्थानीया स्यात् न वा ?

लम्बकूर्चः। निश्चितमेव स्यात्।

क्षुद्रग्रीवः। तथा चेत् कथम् अस्माकं युवराजस्य पत्नी गोपा शाक्यवंशविरुद्धां शुद्धोदनकुलाचार-विगर्हितां रीतिम् अनुसरेत्। नारीणा-मवगुण्ठनधारणमेव शुद्धाचारः। पुरुषव्याघ्रेभ्यो नारीहरिण्यः सदा आत्मानं रक्षेयुः। तेन यथा नारीणाम् आत्मरक्षा भवेत् तथा देशरक्षा च नियमिता भवति।

लम्बकूर्चः। क्षुद्रग्रीव ! त्वमत्यन्तं सनातनमार्गी असि। इयं प्रथा

अत्र वर्तते, तस्मात् तत्रैव सा चिरं स्यात् इति का युक्तिः। अपि न जानासि—

"युक्तिहीनविचारे तु धर्महानिः प्रजायते ॥"

इति। तस्मात् सर्वथा विचारणीयमास्ते अवगुण्ठनं सर्वासां नारीणां सर्वासु अवस्थासु परिधेयं न वा ?

क्षुद्रग्रीवः। लम्बकूर्च ! कस्त्वं राजवंशस्य कुलवध्वा आचारप्रचार-विचारणे ? केवलं जानीहि नार्यः पुरुषेषु अधीना इति। तस्माद् यथा पुरुषाः शास्त्रनियमं कृतवन्तः, तथा नार्योऽनुसरणं कुर्युः। अत्र एक एव नियमः—शास्त्रकरणे पुरुषः, नियमपालने नारी इति।

लम्बकूर्चः। लम्बलम्बां कथां मा भण। अपि न श्रुतं त्वया क्षुद्रग्रीव ! यदियं गोपा एव सिद्धाथ पतित्वे स्वीचकार। तस्याः पिता दण्डपाणिस्तु राजकुल-सम्भूतोऽयं न यशोधराया अनुरूपो वर इति विघोषयन् विवाहकृत्यस्य परमं विरोधी आसीत्। ततश्च—

गोपासौ बहुकृच्छ्रसाध्यविषये व्यापारयन्ती पतिं
बुद्ध्या नीतवती परां सफलतामित्यस्य सा प्रेयसी।
प्राप्यैनां तनयोऽपि भोगरसिकः सन्न्यासितां न स्मरे-
दित्यस्यां कृतवेदितामनुभवत्येषोऽपि शुद्धोदनः ॥३६॥

क्षुद्रग्रीवः। किं भणसि ? किं गणकाः कथितवन्तः ? त्वं सवज्ञ इव भणसि। कथय सर्वं वृत्तान्तम्।

लम्बकूर्चः। क्षुद्रग्रीव ! राजपुत्रस्य जन्मग्रहणानन्तरं कोष्ठीगणनाव-सरे गणका अकथयन् यदेष राजपुत्रो राज्यसुखभोगपराङ्मुखो भूत्वा त्यागधर्ममेव वरणीयं कल्पयिष्यते। किन्तु आपाततो दृश्यते—परमलावण्यमयीं वधूं प्राप्य राजपुत्रो जगदेव सर्वस्वं मन्यते। तस्माद् राजपुत्रवध्वा राजकुलधर्मव्यतिक्रमाचरणविषये शुद्धोदनस्य औदासीन्यं स्वेच्छाप्रसूतं सिद्धार्थस्य च नीरवता कृतज्ञता-

प्रसूता। सिद्धार्थः प्रभूतकष्टार्जितां यशोधरां स्वयं जगज्जननीं महादेवीं महासुरीमिव मन्यते। तस्मात् राजपुत्रवधूर्यथासुखं विचरति, यथेच्छम् आचरति, स्वच्छन्दं खादति, सभ्रूभङ्गं वदति। कवितां विहाय न भाषते, पादयुगलं भूमौ न निधत्ते।

( ततः प्रविशति गुप्तसैनिकसहितो गुप्तचरः )

गुप्तचरः। सर्वं श्रुतम् आवाभ्यां यद् यद् युवाभ्यां मिथ आलपितम्। तत् किं साम्प्रतं करणीयं मे? राजानश्चारचक्षुषः। न ते कदापि अस्माभिर्वञ्चनीयाः। एतौ राजसविधेऽवश्यमेव नेतव्यौ।

( लम्बकूर्च-क्षुद्रग्रीवौ उद्दिश्य ) पश्यतम् आवां राजपुरुषौ। श्रुतम् आनुपूर्व्येण यद्यद् युवाभ्यामुक्तम्, तत् सर्वं राज्ञे निवेदयिष्यते। यावद् युवयो राजदर्शनं न भविष्यति, तावत् राजपुरुषतत्त्वावधाने तिष्ठतम्।

( राजपुरुषम् उद्दिश्य ) एताभ्यां सह त्वं सावधानं तिष्ठ। सत्वरमेव राजसंदर्शनं कृत्वा पुनरागमिष्यामि।

( गुप्तचरो घर्मोद्रेको निष्क्रान्तः )

( लम्बकूर्च-क्षुद्रग्रीवौ राजपुरुषपादयोः पतित्वा )—भो महाप्राण महाजन दीनशरण! आवां रक्ष रक्ष। राजसकाशं नीतौ स्याव चेत् क्षुद्रप्राणौ आवां तनुं तत्पूर्वमेव त्यजेव। भवान् एव अस्माकं रक्षणे केवलं समर्थः।

राजपुरुषः। अये कापटिकौ! अन्तरे विषं धारयित्वा वदने मधु स्रावयथः? दुष्टौ! राजवधूरपि समालोचनविषयो युवयोः। जिह्वा-संयमनं नाम कदापि न अभ्यस्तीकृतम्? तस्य फलम् अचिरेणैव लप्स्येथे।

लम्बकूर्च-क्षुद्रग्रीवौ। तत् किं नु भविता? भवतः पादयोः पतावः।

राजपुरुषः। क्षणं तिष्ठतम्। यथा महाराजः कथयिष्यति तथैव भविष्यति। अत्र मम किं करणीयमास्ते? भगवन्तं स्मरतं, यथा सर्वा विपत् लोपं यास्यति।

( लम्बकूर्चः क्षुद्रग्रीवश्च अन्योन्यं दूषयतः )

क्षुद्रग्रीवः। त्वम्, त्वमेव सर्वस्य अनर्थस्य मूलकारणम्। वाक्-चापल्यवशात् आत्मानं माञ्च नाशयसि। राजपुत्रवधूः सा शिरसि आस्तां कथं सा वर्णनविषयीभूता भवेत् ?

लम्बकूर्चः। किन्तु त्वमेव प्राथम्येन तस्याः कुत्सनं प्रारब्धवान्, अधुना मां दूषयसि ?

क्षुद्रग्रीवः। कदापि न। नाहं, त्वमेव एवं कृतवान्।

( इति अन्योन्यं प्रति रोषं नाटयतः )

[ गुप्तचरः प्रविशति ]

गुप्तचरः। आश्चर्यं नु एतत् ? राजपुत्रवधूः प्रकाश्य-सभायाम् आगत्य सर्वसमक्षम् आत्मकार्यकृते युक्तिपरम्परां कथयिष्यति ? महा-राजस्यापि सम्मतिरास्ते अस्मिन् विषये। अथवा गूढ एव राजव्यापारः।

( राजपुरुषम् आहूय )

भो एतयोः करपाशं मोचय। राज्ञा यशोधरया सार्धं समाल-पनानन्तरं तस्या एव अनुरोधक्रमेण सिद्धान्तितं यत् सा स्वयमेव अस्मिन् विषये सर्वप्रजासमक्षं युक्तीः प्रदर्शयिष्यति। किञ्च—एतौ द्वावपि मोचयितव्यौ इति।

राजपुरुषः। अहो भाग्यवन्तौ षण्डामर्कौ ! विगते जन्मनि बहु पुण्यं युवाभ्याम् अर्जितम्। अन्यथा कथमेतादृक् स्यात्। मया तु संकल्पितम् आसीत्—यत् अन्धकारागारे उदूखले पिष्ट्वा युवां मांसपिण्डमेकं करिष्यामि इति। किन्तु कोरके एव सङ्कल्पपुष्पम् एतन्मे वृन्तात् भ्रष्टम्। तस्मादुक्तम्—एकस्य सर्वनाशोऽन्यस्य तु पौषमास इति।

क्षुद्रग्रीवो लम्बकूर्चश्च। [ उभौ ] कथं दीर्घं निश्वसिषि ? वयं सममेव नन्दामः। सेयम् अस्माकं राजकुलवधूः विना पादकम्पनं विना

शारीरास्वस्थताच्छलम् अनर्गलं छन्दोबद्धया शिष्टगिरा विश्वविश्रुतमनीषि-समक्षं सर्वजनप्रत्ययार्थं प्रकाश्यराजसभायां भाषणं दास्यति। तेन अनया देव्या दुर्गया चण्ड्या वा भाव्यम्। अहो! किं नु सा वदिष्यति? दुरवगाहा खलु नारीबुद्धिः।

## द्वितीयाङ्के द्वितीय दृश्यम्

स्थानं—शुद्धोदनस्य सभा-रङ्गम्। समयः—पूर्वाह्णः।

शुद्धोदनः। ( सभाजनमुद्दिश्य ) बन्धवः प्रियपुत्रा दुहितरश्च! साम्प्रतं घटनापरम्परया मया ज्ञातमासीत् यत् मत्प्रजाग्रामस्य कतिचन राजपुत्रवध्वा अवगुण्ठनराहित्यमधिकृत्य विरूपवाक्यं व्याहरन्तीति। एतत् सर्वं विदित्वा मे कुलवधूः प्रार्थितवती यत् सा स्वयम् आत्माचरण-विषये भवतां वैमत्यं निराकर्तुं प्रयतिष्यत इति। सा कुललक्ष्मीः अस्मत्प्रजापुञ्जस्य भविष्यज्जननी, कथं वा न सा सर्वान् पश्येदिति मत्वा अहं पुत्रकन्यारूपप्रजापुञ्जम् आहूतवान्। कृपया सव शृण्वन्तु मे दुहितुः सिद्धार्थसहधर्मिण्या गोपायाः स्वावगुण्ठनराहित्यविषये वक्तव्यम्।

( यशोधरामाहूय )

मातः कल्याणमयि! त्वदिच्छानुसारेण मया मित्रराजन्याः सर्वाश्च प्रजा आहूताः। सर्वेषां समक्षं यथा त्वयाऽभिलषितं तव अवगुण्ठन-राहित्यविषये तत् सर्वं निवेदय।

यशोधरा। परमस्नेहमय पितः! राजन्! पितृतुल्यराजन्यमुख्याः! देशप्रेमविप्लावितहृदयप्रजापुञ्ज च! सर्वे भवन्तः सस्नेहं सकृपं मद्वचनं शृण्वन्तु।

प्राथम्येन, भारतीया सहधर्मिणी पत्युरभिलाषान् परिपूरयेदिति

अविसंवादी कल्पः। मम पतिः भवतां प्रियराजपुत्र ऐच्छत्—तस्य पत्नी अवगुण्ठनं न कदापि धारयेदिति।

शुद्धोदनः। सत्यम् एतत्, मत्पुत्रेण सिद्धार्थेन ये ये गुणा वध्वा आवश्यकरूपेण निर्धारिता आसन् तेषु प्रथमः खल्ववगुण्ठनराहित्यम्, द्वितीयश्च कवित्वशक्तिः। एवम् अन्ये च बहवो गुणा आसन्। महर्षिकपिलकृपया सर्वेऽपि गुणा अस्यां राजन्ते।

यशोधरा। पितः! भवतामाशीर्वादा एव वरिष्ठफलदातारः। (सर्वान् उद्दिश्य) तस्मात् पत्युरभिलषितपूरणप्रयत्ने को मे दोषः?

श्रोतृवृन्दम्। [अन्योन्यं प्रति] सत्यं तत्। किन्तु राजपुत्रः कथम् अभीप्सेत्? नैतद् देशाचारसम्मतम्।

यशोधरा। देशाचारो देशस्य हितकारणं स्यात्। देशहिताय देशाचारोऽपि परिवर्तेत। स्वभावेन नारी लज्जातुरा लज्जापटावृता तिष्ठतु नाम, किन्तु देशस्य विपदि सा गृहाद् बहिर्ध्रुवमेव आगच्छेत्, सत्यार्थं सर्वसन्निकटे प्रकाशयेच्च आत्मानम्। पश्यन्तु भवन्तः,

पक्षौ साधयतः खगस्य गगनक्रान्तिं यथोभौ सदा
स्त्रीपुंसौ मिलितौ तथैव कुरुतो नित्यं समाजस्थितिम्।
पक्षे चैकतमे सतीह विकले पक्षीव पातोन्मुखः
स्थातुं नोत्सहते स्त्रिया विकलया नूनं समाजस्तथा ॥३७॥

प्रचरणमेव जीवनम्। जीवनदाने यथा माता, लालनपालनयोरपि सा कर्त्री। जीवनाज्जीवनं, प्रचरणात् प्रचरणमभितोऽभिगच्छति।

शुद्धोदनः। अहो! सुष्ठु भणति मे दुहिता।

यशोधरा। कथं नारी पश्चात्तिष्ठेत्, तूष्णीं वा स्थित्वा कलङ्ककालिमानं स्वात्मनि लेपयेत्। भूयोऽपि भवन्तः पश्यन्तु, असुरनिधने रुद्रः, किन्तु महिषासुरनिधने रुद्राणी चण्डी एव प्रभवति। पञ्चकाषायपरिपूर्णोऽयं कालः। अस्मिन् काले सर्वस्य प्रजापुञ्जस्य मातृभूताऽहं

शाक्यराजपुत्रवधूः नेत्रे निमील्य न औदासीन्यं भजेयम्। अस्मिन् समये सर्वैः सम्मिल्य अहं देशसमुद्धरणसंरक्षणक्रियाः कुर्यामिति हेतोः मे पतिः इत्थम् अभिलषितवान्।

मित्रराजन्यानामेकः। अपि तेन शालीनता न विपद्येत ?

यशोधरा। कथम् ? का नाम शालीनता ? शालीनता मुख्यतः स्याद्राष्ट्रे; ततो मण्डलादिषु, ततः संस्थासु, ततो राज्यस्य सर्वत्र। धर्मविषये शालीनताऽद्य विपन्ना।

देशः पूर्णस्तैर्थिकैः कौतुकार्थैर्दुष्टाचारा धर्मनाम्ना क्रियन्ते।
भस्मालेपो वह्निमध्ये प्रवेशस्तापः कायस्यापि धर्मः प्रजासु ॥३८॥

तस्मात् धर्मशालीनतारक्षार्थमेव अवगुण्ठनराहित्यम् अनिवार्यं जातम्। धर्मद्वारा प्राणिनां सर्वसुखसंविधानं मम पत्युः मम च जीवनस्य प्रथमः संकल्पः। तदर्थं पतिर्मे सहधर्मिण्या अवगुण्ठनम् अनुचितं मन्यते।

अवगुण्ठनराहित्यं कुलाचारविरुद्धं भवद्भिरुच्यते चेत् मया पृच्छ्यते कोऽयं कुलाचारः ? धर्मादर्शविषयकालापकरणार्थं गार्गी वाचक्नवी मिथिलायां जनकराजसभामगच्छत्, किं तस्याः कुलाचारस्तेन भ्रष्टः ? कुलाचारः स एव यः कुलस्य हिताय। मम वंशस्तु साम्प्रतं राजवंशः; सौभाग्यवशात् अहं राजपुत्रवधूः। कथं मम पुत्रैः कन्यादिभिश्च सह प्राक् परिचयः साक्षाद्रूपेण गर्हितः स्यात्।

भूयोऽपि तारस्वरेण मया उद्घोष्यते—नारीणामवगुण्ठनराहित्यं युगोचितम्। युगसन्धिक्षणे वयं जाताः। सर्वत्र नानाविधो हाहाकारो दिग्दिगन्तं व्याप्नोति, अहर्निशं च वर्धत इव। तस्मात् कथं नार्यः केवलं भवनस्य अन्तस्तिष्ठेयुः। प्रयोजने समायाते नार्योऽपि देशहिताय प्राणांस्तथा उत्सृजेयुर्यथा पुरुषाः। निरन्तरकर्मसम्पादनतत्परा दिग्-दिगन्तप्रचारिण्यो नार्यः कथं वा अवगुण्ठनपरिहिताः स्युः ? साम्प्रतं घोरकलियुगं प्रचरति। अस्मिन् युगे नारीणां देशहितैषणमेव केवलं व्रतं, नान्यत्।

पुनश्च। या नाम कुलाङ्गनाः स्वभावपवित्राः, कथं तासाम् अन्येषु युगेषु अपि वा अवगुण्ठनम् आवश्यकम्।

शुद्धोदनः। (सर्वतो विलोक्य स्वगतम्) अहो! सर्वेऽपि प्रहृष्टा जाता इति मन्ये।

युक्त्या युक्तमपौनरुक्त्यघटितं श्रुत्वा स्नुषाभाषितं
निस्पन्दाः परितः सभासद इमे चित्रार्पिता आसते।
संस्कारं जननान्तरार्जितमृते पुंसापि यद् दुर्लभं
तादृग् भाषणपाटवं प्रमदया लब्धं कथं गोपया ॥३६॥

यशोधरा। मया पुनरपि कथ्यते—

मातृजातेश्च वा शोभा सुतानां हितसाधने।
सुतपतिहितार्थाय ह्रीवस्त्रं धारयेन्न वा ॥४०॥
चन्द्रार्कसन्निभविभा विवृतप्रकाशा
प्राणप्रियैकशरणा शुचिताप्रतिष्ठा।
या नाम धर्मपिहिता पतिपादलीना
किं साऽवगुण्ठितमुखी विफलेप्सिता स्यात्? ॥४१॥

सामन्तनृपः कश्चन—देवि! विरम्यतां विरम्यताम्, सर्वथापगतो हि अत्रत्यानां सर्वेषां भ्रमः। भवती हि स्वयं राज्यलक्ष्मीः साम्प्रतं राजपुत्रवधूरूपेण शाक्यकुले समागता। भवतीं दृष्ट्वा वयं सर्वे धन्याः स्मः।

प्रजापुञ्जस्य कश्चन। जननि! भवत्या वचनेन वयं सर्वे हृष्टा जाताः, सयुक्तिकेन वचसा अस्माकं हृदयं परितुष्टम्। सौभाग्यवति! कल्याणमयि! तव मङ्गलं देवसकाशे प्रार्थयामहे।

सर्वे। अथ किम्, अथ किम्।

शुद्धोदनः । (सहर्षम्) अहो धन्योऽस्मि, यत इयं मम कन्या—

गोपा विशुद्धगुणभूषणजातशोभा
पुत्रोऽपि मे न समतामनया प्रयाति ।
काले पुनः शमदमादिगुणैर्वरिष्ठा
भूयाद् वधूर्जगति शाश्वतपुण्यसेतुः ॥४२॥

[ सर्वे निष्क्रान्ताः ]

## द्वितीयोऽङ्कः

### तृतीय-दृश्यम्

स्थानं—राजपुत्र-प्रासादः । कालो मध्यरात्रः ।

( भाविविरह-सूचनम् )

यशोधरा । अहो ! कथमेतत् कस्य वा विधानं यन्नार्यः पतीनां पादशब्दान् अपेक्ष्य सकरुणं कालं यापयन्ति—

आश्चर्यं भोः सततसुगभीरावधानेन नार्यः
शुश्रूषन्ते कमनकमनान् पादशब्दान् प्रियाणाम् ।
मानोद्दृप्ता निखिलभुवने ये भ्रमन्ति स्वतन्त्रा
नारीजातेः सरलहृदयं ह्लादयित्वा वचोभिः ॥४३॥

घटिकाद्वयाभ्यन्तर एव प्रत्यावर्तिष्य इत्युक्त्वा बहिर्गतस्य पत्युर्मे घटिकाचतुष्टयाभ्यन्तरेऽपि अनागमनं स्वतः सिद्धमिव जातम् । प्रतिविधानं प्रति ध्रुवमेव मया मनो दातव्यम् । किन्तु हा कष्टं ! पत्युः प्रत्यागमनानन्तरं सर्वमेव विस्मरामि । आत्महृदयस्याधीश्वरी न भवामि चेत् कथमहं तस्मै प्रभवेयम् ?

[ प्रविशति सिद्धार्थः ]

सिद्धार्थः । गोपे प्रिये ! कथं दुर्मनायितेव लक्ष्यसे ? किं न

सुस्थाऽसि ? किं नु संघटितम् ? अपि काचन विपद् आपतिता ? अथवा –

यशोधरा। (साक्षेपम्) न ह्यार्यपुत्र ! किंत्वहं सातिशयं दुःखिताऽस्मि ! यतः प्रायश एव त्वं स्वल्पसमयमुद्दिश्य बहिर्गत्वा प्रत्यागमने विलम्बसे। अपि त्वया न स्मर्यते यदहमेकाकिन्यत्र तिष्ठामि ? विलम्बमाने त्वयि विपदाशङ्कया हृदयं मे भृशं कम्पते। दुःखं खल्वेतद् अहं त्वयि सर्वस्वमुत्सृज्य दत्तप्राणा तिष्ठामि, त्वं पुनः सर्वविजयीव मयि वर्तसे।

सिद्धार्थः। मा मैवम् ! न खलु विलम्बनेन मे त्वयोपेक्षाशङ्कनीया। किन्तु कियन्तंचित् कालं यावन्मया मनसि शान्तिर्न लभ्यते। कथं नाम जगत्येतादृक् दुःखं वर्तते ? जरामरणदुःखैर्लोकः सर्वः शीर्यते दीर्यते जीर्यति च। त्वम् अहम् अन्ये किमपि न कुर्मश्चेत् कथम् अस्यां गतानुगतिकव्यवस्थायां परिवर्तनं भवेत् ? तव शक्तौ मे महत्तमो विश्वासः ; तव शक्त्या सिद्धिं लप्स्ये सर्वेष्वेव विषयेष्विति मे ध्रुवा मतिर्जाता। ततो यदाऽहं बहिर्गत्वा शान्तस्निग्धमनोविमोहनस्तब्धपर्वतराजिं प्रति दृष्टिं निक्षिपामि, यदाऽहं चिरसुनीलम् आकाशं पश्यामि, यदाऽहं शान्तां सौम्यां जातिसंघटनपरंपरां वा विश्लेषयामि तदा मे चित्तम् अस्मिन् विषये शाश्वतोपायस्य कस्यचनोद्भावनाय विभ्रान्तमिव जायते। सर्वसमस्यानां समाधानमास्ते, चरमाया अस्याः समस्यायाः कथं वा समाधानं न वर्तेत !

यशोधरा। [स्वगतम्] अहो भाग्यम्। समये नु ज्ञातम् आर्यपुत्रस्य अभीष्टम्। सत्यं नाम कथं जगति सर्वे संसारदावदाहेन कायिकमानसबहुविधदुःखानलेन प्रज्वलेयुः ? कथं नावां यतावहे ? (सिद्धार्थं प्रति) प्रिय ! एषु विषयेष्वस्माकं पूर्वसंविधानानुसारेण संलपनमवश्यमेव करणीयम्। यत्त्वया चिन्त्यते तन्मयाऽपि चिन्तितपूर्वम्। किन्तु नारीणां हृदयं सर्वथा श्वश्रूश्वशुरपति-

पादसेवाप्रवणं प्रिय-परिवार-परिजन-सेवासुखि चेति हेतोः कथमपि मया विस्मृतमासीत्, अप्यस्मिन् विषय उपाय उद्भावितः ?' यथा त्वं प्रयतिष्यसे तथाऽहमपि करोमि। किन्तु पश्य देव! एक एव मेऽनुरोधो न द्वितीयः, स सर्वथा भवता परिपालनीयः स्यादेव। एषु विषयेषु सर्वे प्रयत्ना आवयोः सममेव प्रचरिष्यन्ति। नार्यपि नाहं बिभेमि। अहं महर्षिकपिलजातराजवंशकुलवधूः, ऋषिजनादिष्टकर्माणि मे आचरितव्यानि। अपि शास्त्रेषु किमपि उक्तम् ? अस्माकम् अभीष्टसिद्धिः केनोपायेन घटेत ? [ इति निश्वसिति। ]

सिद्धार्थः। देवि! एषु विषयेष्वात्मप्रयत्न एव गरिष्ठः। कृते प्रयत्ने सर्वमेव सिध्यति।

यशोधरा। तदेव भवतु। आवाम् अद्य प्रभृति प्रयतिष्यावहे।

सिद्धार्थः। देवि! त्वम् इदानीं सेवाक्लान्ताऽसि! सुखं शय्यासीना भव। अनागते व्यापारे न सातिशयं संक्लिष्टा स्याः।

यशोधरा। प्रियो भवान्। सर्वं शुभं भूयात्। नाथ! अन्तिके मे तिष्ठ!

( क्रमेण यशोधरा निद्राति। )

सिद्धार्थः। ( सानन्दं निर्वर्ण्य )

इयं यशोधरा गोपा देवलोकसुदुर्लभा।
स्वयं मूर्तिमती सेवा कृपया क्षितिमागता ॥ ४३

सिद्धार्थजीवितधनं नृपनेत्रदीप्ति-
गोपा धरासुखकरा प्रियशान्तिधाम।
पूता सदा स्मितधरा वरदा यशोदा
निद्राति सा स्फुटतरा स्थलपद्मरूपा ॥४४

अहो सर्वथाऽनिर्वचनीया खल्वियं यशोधरा।

यशोधरा। ( उत्स्वप्नायते ) अहो! किं नु खल्विदम् ? कथं पर्वत उत्पाटितः भीमप्रभञ्जनेन वृक्षाश्च सर्वे धराशायिनः कृताः ? नैव भाति

ज्योतिष्कमण्डली । कथं कथं नाम केशा दक्षिणे करे पतन्ति मुकुटश्चाधः स्खलति । करपादं छिन्नम् । विनम्रदेहस्य पत्युर्मे मुक्ताहारस्त्रुटितः, मणयश्च ततस्ततो लुठन्ति ।

सिद्धार्थः । कथं प्रिया मे स्वप्ने यातनामनुभवति । किन्तु व्यक्तार्थमिव श्रूयते स्वप्नभाषणमस्याः । तत् सावधानम् अहं शृणोमि ।

यशोधरा । कथं वा मे पत्युः पल्यङ्कस्य पादचतुष्टयं भूमौ विक्षिप्तम् । छत्रं दण्डश्चैतच्च सर्वमेतत् छिन्नम्; आभरणानि भूतले विकीर्णानि, वस्त्रमुकुटादीनि च शय्यायाम् अयत्नक्षिप्तानि रोरुद्यन्त इव ।

सिद्धार्थः । अहो ! प्रिया मे सातिशयं कातरा जाता । अपि नाम सा बोधयितव्या मया ? अथवा कथयतु सा स्वप्नदृष्टं यतोऽहमर्थ-ग्रहणतत्परो भवेयम् ।

यशोधरा । कथं वालोकवर्तिकाः सर्वा नगराद् बहिर्गच्छन्ति । गाढतमसाच्छन्नं नगरम् । कथं वा छिन्नो मुक्ताहारः ? क्षुब्धश्च महा-सागरः ? कम्पमानो मेरुः स्थानच्युत आस्ते ? ( सहसा निद्रोत्थिता प्रकम्पिता ) देव ! देव ! किं मे भविता ? कोऽर्थः स्वप्नस्यास्य ?

सिद्धार्थः । ( सहासम् ) प्रिये ! सर्वं मया त्वत्-स्वप्न-भाषितं यत्नतः श्रुतम् । स्थाने खलु परमशुभव्यञ्जकोऽयं स्वप्नस्त्वया दृष्टः । मया व्याख्यायते, शृणु ।

यशोधरा । ( किञ्चिद् आश्वस्य ) नाथ ! द्रुतं ब्रूहि । भृशं कम्पते मे देहः । सत्यं किमप्यमङ्गलं तव न भविता ?

सिद्धार्थः । नहि नहि देवि ! त्वयि जीवन्त्यां कथं तद् भवितु-मर्हति । दूरे आस्तामशुभं, सर्वं शुभशंसि त्वया दृष्टम् । संक्षेपेण ब्रवीमि—भूमावापतिताः पर्वताग्रादयस्त्वां पूज्यश्रेष्ठां मन्यन्ते ; अतस्त्वत्-पादयोः पतन्ति ।

छिन्नमूलस्तरुः केशराशिश्च दक्षिणबाहुं चुम्बति। अनेन सूच्यते, शीघ्रमेव ते क्लेशजालं छेत्स्यते दृष्टिजालं च ते सम्यक् प्रसरिष्यति।

किं बहुना, देवि! अस्मात् स्वप्नाद् इदं सुव्यक्तं जातं यत् त्वं प्राणपतिं तेऽचिरेण कालेन विश्ववन्द्यं द्रक्ष्यसि! त्वमपि च सर्वथा सुखिनी भविष्यसि यशोधरे!

हर्षं लभस्व न च खेदमवाप्नुहि त्वं
तुष्टिं च विन्द जनयाद्य ममापि हर्षम्।
तूर्णं भविष्यति धराऽखिलमोहमुक्ता
गोपे प्रिये सकलमेव शुभं निमित्तम्॥ ४५

———

# तृतीयोऽङ्कः

## प्रथम दृश्यम्

[ सिद्धार्थस्य सन्न्यास-ग्रहणम् ]

( ततः प्रविशति किसा-गौतमी गायन्ती )

"निव्वुत्ता नून सा माता निव्वुत्तो नून सो पिता ।
निव्वुत्ता नून सा नारी यस्साय ईदिशो पती" ति ।।

( निदानकथा )

सिद्धार्थः । अहो का नु गायति ? कमपि वीक्ष्य तस्य माता पिता सहधर्मिणी सर्वे प्रियपरिजनाश्च परं सुखिन इति गीतमर्म । किन्तु हा ! अद्यैव मया दृष्टो जरातुरो वृद्धः कश्चित्, व्याधिग्रस्त एकः, मृतश्च कश्चन —अशेषं खलु संसार-वासिनां कष्टम् ।

अन्यतो दृष्टोऽद्यैव मया सन्न्यासी च कश्चन । अपि सन्न्यासधर्म-परिग्रहेण सर्वं दुःखं —न केवलमात्मनः, परन्तु निखिलस्य विश्वस्य— नाशयितुं शक्यते । किन्तु भारतवर्षे धर्मस्थाने, न भोगभूमौ, अद्य शोचनीयावस्था सञ्जाता । वेदवादिनो यज्ञनाम्नाऽजस्रपशु-वधं कुर्वन्ति । श्रीपार्श्वनाथानुयायिनः परस्परं विवदन्ते । केचन क्रियावादिनः, केचन वाऽक्रियावादिनः ; केचन च विनयवादिनः । पश्य । हिंसां निन्दन्तोऽपि ते त्रिषष्ठ्युत्तर-त्रिशतशाखासु संविभक्ता धर्मनाम्ना एव विवदन्ते । आजीवकाः पुनर्नग्नतां कायकार्श्यं च धर्मं मन्यन्ते । तत्र न विद्यते शान्तिर्गृहत्यागिनां न तु गृहिणाम् । यथा गृहे तथा बहिः सर्वत्र कोलाहलो वादविसंवादः केशाकेशि यष्टायष्टि । अनेन विधिना न कदापि शान्तिर्लम्भनीया । यथेयं गायिका प्रार्थयते, कथं न मया तादृशेन भवितव्यम् । येन निखिलं जगत् परां शान्तिं लप्स्यते । तत्र पुनः कः पन्थाः ।

( ततः प्रविशति शुद्धोदनः )

शुद्धोदनः। ( स्वगतम् ) कथम् अद्य मे हृदयं भृशं दूयते। किं नु मे दुहितुर्यशोधरायाः केनाप्यनिष्टं न भवितव्यम्। ( सिद्धार्थमवलोक्य ) कीदृश्यास्ते मे स्नेहशीला गोपा ?

सिद्धार्थः। सुष्ठु सा वर्तताम्।

शुद्धोदनः। कथं "वर्तताम्" ? त्वं जानीयास्तद्विषयकं सर्वम्। सेयं यशोधरा या बहुधा माता-पित्रादिभिर्निरन्तरमनुरुद्धापि त्रयोदश-वर्षाभ्यन्तरे दिनमात्रम् अपि न पित्रालयं गता। मम महाप्रजापतिगौतम्या-स्तव च शुश्रूषणमेव सा श्रेष्ठं साधनं मन्यते। अहो पूर्णस्नेह-ममत्व-भक्तिश्रद्धापरिपूतं हृदयं यशोधरायाः ! सत्यमेव त्वत्तोऽप्यहमेतां मे दुहितरं यशोधरां परमप्रियतरामेव मन्ये। सेवा, दाक्षिण्यं, परोपकारः—सर्वैरेभिर्गुणैर्विभूषिता गोपा सत्यं महागोपिका—आनन्द-स्वरूपिणीव।

सिद्धार्थः। पितः ! भवताम् आशिषः प्रार्थये—यथा सा कदापि दुःखिनी न भवेत्।

शुद्धोदनः। कथं सा दुःखं प्राप्नुयात्। सा स्वयं मद्वंशराजलक्ष्मीः, स्वर्गलक्ष्मीः, गृहलक्ष्मीश्च। तस्या दुःखभागित्वे वयं सर्वे शीर्यामहे। परमकल्याणमय ! दुहितुर्मे किमप्यमङ्गलं मा भूत्। यथा तस्याः किमप्यमङ्गलं न स्यात्, तथाहं देवमन्दिरे परमेष्टदेवसकाशं प्रार्थयितुं यामि।

( इति निष्क्रान्तः )

सिद्धार्थः। अहो स्नेहान्धता पितुः ! यशोधरा यशोधरेति पुनः पुनरुदीरयन्नुन्मत्त इव सञ्जातः। वेदेषु श्रूयते—"सम्राज्ञी श्वशुरे भव इति।" इयं तु गोपा न केवलं सम्राज्ञी ; परन्तु सर्वथा पितुर्मे सर्वस्वमेव जाता। अहो स्नेहः पितुः ! अस्मान् सुखिनः कर्तुं पित्रा मे किं नाम न कृतम् !

विभिन्नऋतूपयोगिनः प्रासादाः,—एको नवतलः, द्वितीयः सप्ततलः, तृतीयश्च पञ्चतलः—पित्रा मे निर्मिताः। केवलं यशोधरापरिचर्यार्थमेव तेन पञ्चचत्वारिंशत्सहस्रसंख्याकाः परिचारिका नियोजिताः। इत्थमन्येषु सर्वष्वेव विषयेषु।

किन्तु दुर्भाग्यं नामैतत्, यदि पारमार्थिकशान्तेः स्वरूपं केनापि न ज्ञातं स्यात्, तर्हि कथम् इयं यशोधरा अन्यः अन्या वा शान्तिं प्राप्नुयात्? अज्ञातं चेद् वस्तुस्वरूपं कथं तदन्वेषणं सम्भवपरं भवेत्?

पितः! तथा भवतु यथा त्वद्दुहितुर्यशोधरायाः सहायतया सत्य-स्वरूपं निर्णतुं शक्नुयाम्। नाहं राज्यं कामये स्वर्गादिकं वा। भवदाशीर्वादैः केवलम् इदं भवतु—अहं जगतो दुःखस्य निराकरणाय उपायं निर्णेतुं शक्नुयाम्।

( ततः प्रविशति काचन राजान्तःपुरपरिचारिका। )

वनलतिका ( परिचारिका )। ( स्वगतम् ) तत्र तत्राटन्त्यपि कुत्रापि राजपुत्रं न पश्यामि। अहो अदूर एव राजपुत्र आत्मानं विस्मृत्य इव राजते। ( सिद्धार्थसमीपं गत्वा )

देव! आस्ते भवदर्थं सुमहाञ्छुभसन्देशः। कपिलर्षेः कृपया राजकुले समागतो नवराजपुत्रः—भवतां नन्दन इति।

सिद्धार्थः। ( परमविषण्णः ) सव विज्ञातम्। त्वं याहि।

परिचारिका। (स्वगतम्) अहो! कथं युवराज ईदृश आनन्दकारणे सञ्जाते विषण्णतां भजते। अथवा विचित्रं खलु जगत्! ( सिद्धार्थमुद्दिश्य ) यथासम्भवं शीघ्रमागच्छतु देवः।

सिद्धार्थः। किन्तु मयाधुना कर्तव्यम्? अतः परमपि गृहे तिष्ठामि चेद् बन्धनं शृङ्खलमिव मां भन्त्स्यति। तदद्यैव यामिन्यां मया राजप्रासादाद् बहिर्गन्तव्यम्। पित्रा मे सहस्रशो नियोजिता द्वाररक्षकाः, निर्मापितञ्च प्रायेण गगनस्पर्शि प्राचीरम्। तत्रापि सुमहत् कवाटद्वयं, यस्यार्गलीकरणाय प्रत्येकशः सहस्रं जना नियोजिताः।

यथा तथा भवतु. जगतो दुःखनिराकरणमेव मे जीवनव्रतम्। यशोधरा सुखं तिष्ठतु। अद्य "पुत्रो जातः बन्धनं जातम्"। अवश्यमेव मया झटित्येव गन्तव्यम्।

सर्वथाऽनुपमा मे यशोधरा गोपा; गमनात् प्राग् वारमात्रं तामवलोकयिष्यामि।

छन्दक! छन्दक! आगच्छ, साम्प्रतं मया गन्तव्यमेव।

( सिद्धार्थो निष्क्रान्तः )

## तृतीयोऽङ्कः

## द्वितीय दृश्यम्

[ भगवतो बुद्धस्य महानिष्क्रमणम् : अनोमातीरे छन्दकेन सारथिना सह संलापः। ]

सिद्धार्थः। प्रियच्छन्दक! वैशाखपूर्णिमायाम् ऊनत्रिंशद्वर्षेभ्यः पूर्वम् अदूरस्थितः प्रियाश्वः कण्टकः त्वम् अहञ्च समे दिने समे क्षणे यशोधरादिभिः सह समागताः। ततः पश्चात् न कदापि वयं विच्छेदवेदनाम् अन्वभवाम।

अद्य कठोरप्रयासेन स्वल्पेन समयेन निपुणं रथं परिचाल्य पुण्यसलिलानोमानदी-तीरपर्यन्तं माम् आनीतवान्। कठोरकर्तव्य-परायणस्त्वं यावज्जीवन-बन्धुत्वगौरवम् उच्चतरकोट्यां स्थापितवान्।

छन्दकः। राजपुत्र! भूतले नाहं त्वां विना किमपि जानामि। तथैवैष कण्टकः। अदूरे पश्य। जगद्विजयी वीरः कण्टको दरविगलितधारयाश्रुनिषेकं करोति। एवम् इन्द्रनीलमणिकान्तिमेघोऽपि धारासारैर्वर्षति, फलेन पृथूर्मि-विभूषणानोमा सरिद् उत्तालाङ्गभङ्गरङ्गैर्धावतितराम्। भीमप्रभञ्जननिर्घोषास्तटिन्या आर्तनादैर्बहुलीभवन्ति।

अहो ! एष एव सर्वदा सुहृद्दुःखे सतां नियमः । पश्य पश्य प्रणयिनी-हृदय-व्यथेव प्रोल्लसच्चकितं प्रसरति विद्युद्दाम ।

आषाढस्य पूर्णिमाऽद्य तिरोहितश्चन्द्रमाः
सुधाधारो नीरदजालाच्छादितः ।
सिद्धार्थं पूर्णकलं संनिरीक्ष्य पुण्यफलं
दैन्यपरो रोदिति जलदो जगद्धितः ॥ ४६
केयमनोमा तटिनी गोपिका श्रीरूपिणी
कोटिबाहुवितानैराह्वयति हि त्वाम् ।
प्रिय त्वरितं गृहमेहि मा कदापि मां जहीहि
पुरा लक्षशः समाश्वासयन् गोपाम् ॥ ४७

तस्मादुपेक्षाभाजनमस्मि चेत् माम् उपेक्षितुमर्हसि—किन्तु येयं रसघना रमा मधुमयी माधवी कामकान्तिः कमला तां यशोधरां कथमुपेक्षसे ?

सिद्धार्थः । जन्मजन्मान्तरप्रियसख ! कथं रोरुद्यमानो मां व्यथयसि ? एतत् खलु विधानं यद् युष्माकं वेदनोपादानेन जगतो भविष्योपादानं निर्मीयते ।

यद्यपि हृदयं मे त्वच्चक्षुर्वारिदर्शनेन दुःखशल्यघट्टितं जायते, तथापि सुखदुःखातीतां प्रज्ञां लब्धुं बहिरागतस्य मे चित्तं स्थैर्यं धैर्यञ्चा-पद्यतां नाम ।

प्राणाधिक बन्धो ! दुःखाभिभूतो मा भूः । जगच्छक्तिर्हि यशोधरा न कस्यापि वचः समपेक्षते ।

छन्दकः । राजपुत्र प्रियसख ! अन्या तावद् युक्तिरन्यच्च मित्रत्वम् । प्रथमा मस्तिष्कात् प्रसूता, द्वितीयं हृदयाज् जातम् । मस्तिष्क-हृदययोर्महत् पार्थक्यम्, तथापि महद्बुद्धयोरिव नैकट्यम् आस्ते च । सत्यमेवैतद् यद् अद्य प्रभृति प्राणान् अनोमातीरे संरक्ष्य संसारकानने उन्मत्त इव कियन्तंचित् कालं परिभ्रमामि ( इति रोदिति ) ।

सिद्धार्थः। छन्दक ! स्थितधीमु निरध्यत्यागसहनस्य बन्धोश्चत्तुर्वारि द्रष्टुं न पारयति। तद् बाल्यबन्धोर्मे एकान्तानुरोधाच्चत्तुर्वारिसंयमनम् अचिरादेव कुरु !

छन्दकः। तथा यतिष्ये। किन्तु समाश्वासनं प्रार्थये यत् त्वं विश्वकल्याणसाधनकुशलोऽस्मत्सकाशं पुनः प्रत्यावर्तिष्यसे। वयं तत्कालपर्यन्तं निमेष-होरा-दिन-मास- वर्ष-गणनाक्रमेण कथमपि जीवितं धारयिष्यामः।

त्वदुपदेश एव मे संबलम्। सार्थकता मम जीवनस्य त्वदाराधने।

(दीर्घं निश्वस्य स्वगतम्) कथम् ईदृशेन सुहृदा विनाकृतो जीविष्यामि। यत् सत्यं—

पुरुषकारकृतो धनसञ्चयो
विधिकृतौ पितरावपि तौ नृणाम्।
असुलभा न च सा सहधर्मिणी
सहृदयः सुहृदेव सुदुर्लभः ॥४८

हन्त भोः !

सन्तापदग्धहृदयस्य सुधाप्रलेपः
कर्पूरपूररचिता नयनस्य वर्तिः।
पुंस्कोकिलः श्रुतियुगस्य च रक्तकण्ठः
सृष्टोऽस्ति केन मधुना विधिनष बन्धुः ॥ ४९

बन्धुत्वं नाम तद्द्रव्यं धरायां साम्यवर्जितम्।
सर्वप्रेमातिशायीदं स्वार्थलेशविवर्जनात् ॥ ५०

सिद्धार्थः। अहो दुःखं जनानाम् ! सर्वे तप्तकटाह इव सर्वदा दन्दह्यन्ते। समुद्धरणोपायो निश्चितं निर्णेष्यते।

(ध्यानं नाटयन्)

राजपुत्रो नु सन्न्यासी मम विश्वं निकेतनम् ।
कामये दुःखतप्तानां सर्वेषां तापनाशनम् ॥ ५१

साम्प्रतं मया सन्न्यासवसनादिकं परिधातव्यम् ।

( पुनर्ध्यायति । )

( कस्यचिद् देवस्य प्रवेशः । )

छन्दकः । अहो ! को नु खल्वेष देवो यो बन्धवे मे काषायवस्त्रं ददाति ?

अहो ! अद्भुतसत्त्वोऽयं मे बन्धुः । यद्यपि जानाम्यस्य सन्न्यासो जगतो महोपकाराय, तथापि मे हृदयग्रन्थिश्छिद्यत इव ।

सिद्धार्थः । मित्र ! गात्राभरणानि मे पित्रे नय । मातापितरौ च मे समाश्वासय ।

## तृतीयोऽङ्कः

### तृतीय-दृश्यम्

[ यशोधरा-विलापः ]

अदूरेऽश्वस्य कण्टकस्यातिकरुणह्रेषारवः ।

( प्रविशन्ति कतिपयाः शाक्यकन्या मूर्च्छिता गोपा च )

शाक्यकन्या । देवि ! धैर्यमवलम्बस्व । विपन्न चिरं तिष्ठति । विरहानलो यथार्थ-प्रियप्रियाहृदयं समानमेव दहति ।

गोपा । ( शक्तिं संगृह्य ) भो नरश्रेष्ठ ! हे हृदयमनोविमोहन, विमल-जगज्ज्योतिः, गुणगण-पूर्णाकर, नारायण-पूर्णलीलाधर, कलविङ्क-विहगकलभाषिन् , सुमधुर-ब्रह्मवाणीधर, अस्मत्कोटिकोटिजन्मजन्मान्तर-पुण्यसमुच्चयफल, राजर्षि- महर्षि-देवर्षि-परमप्रीतिकर, अलिदलभङ्कृत-लुम्बिनीवनमध्यमणे, त्रिभुवनपूजित-निर्मलज्ञानद्रुम, अमलकमललोचन, वृत्तकटिधर ! कुत्र गतोऽसि ?

( नाट्येन नाटयित्वा ) जीवनवसन्तपूर्णसमागम ! दूरं याहि ; गीत-वादित्रवीणादिकानन्दकारणानि ! दूरम् अपसरत। पुण्यगन्धपुष्प ! निष्काम, गन्धानुलेपने ! युवामपि दूरे गच्छतम्।

यं सन्तर्पितुमिष्टदेवविधिना सोत्साहया सन्ततं
स्वोत्सङ्गे विनिधाय सादरमहो वीणे त्वमास्फालिता।
नास्ते सोऽद्य गृहे न चापि नगरे यातः सुदूरे दृशो-
स्तस्मात्त्वामहमुत्सृजामि सखि ते स्वस्त्यस्तु मां विस्मर ॥ ५२

हस्तौ कलङ्कयति कङ्कणयुग्ममेतत्
कर्णावतंसयुगलं श्रवणे दुनोति।
पाशायते सपदि हारलताऽपि कण्ठे
पत्युज्झिता च विधवा च समे हि लोके ॥ ५३

शाक्यकन्या। देवि ! मा भवती विलपतु, मा च प्रसाधनानि दूरे करोतु। करुणावरुणालयोऽस्माकं राजपुत्रोऽचिरेणैवागमिष्यति।

गोपा। सखि ! नहि, नहि। न खल्वार्यपुत्रो मे तादृशो राजकुमारः। मनसि कृते स्थिरे न विश्वभुवनमपि प्रियं मे चालयितुं शक्ष्यति।

सौम्य कण्टक, पतिचिरसुहृत्, वयं समे काले समे दिने समे क्षणे, भूतलं समागताः, कथं चिरबन्धुं विहाय जीवितं धारयिष्यसि। अथवा, कथं वा तं परित्यज्य पुनरागतोऽसि। कथं वा न त्वं मन्नाथं गमनात् प्रतिनिवर्तितवान् ? सर्वगर्वखर्वकः सच्चिदानन्दः पुरुषोऽसौ बहिश्चिराय याति, कथं त्वं न मां हेषारवेण आकृष्टवान् ? कुत्रासौ गतः ; अहमपि तत्र गमिष्यामि ( इति गमनोद्यता )।

शाक्यकन्या। स्वामिनि ! दारुणहृदयक्षोभसमये किं करोति भवती ? त्वमसि शाक्यकुलराजवधूः। अगणितास्ते पुत्रकन्याः। महाराजः शुद्धोदनस्त्वय्येव प्राणान् आधाय श्वसिति निःश्वसिति च। जननी महाप्रजापतिगौतमी चाचिरादेव मरिष्यति। सर्वाग्रेऽस्माकं महाराजो देहं त्यक्ष्यति—यतो दुहितरं विना नासौ जगति किमपि जानाति।

गोपा। सखि! सर्वं सत्यं भणसि। किन्तु नाथं विनाहमपि कथमत्र स्थास्यामि? विवाहादनन्तरं त्रयोदशवर्षाभ्यन्तरे नाहं पितरं महाराजं विहाय स्थानान्तरं गता, परमद्य किं नु भविता!

(आकाशे) छन्दक! त्वमप्यस्माभिः सममेव भूतलमवतीर्णवान्। किमिति त्वमपि मे नाथं राज्यपरित्यागसमये न केवलं न प्रतिनिवर्तितवान्, परन्तु सहायतामपि कृतवान्?

अथवा धिक् प्रेम! रङ्गमञ्चस्थनटानां चरित्ररूपायणमिव क्षणिकमेतत्। भवनामरूपप्रपञ्चादि सर्वमेवालीकं बालकोचितदृष्टिविभ्रम एव।

शाक्यकन्या। सखि! मा रुदिहि। महासती भवती रोदिति चेत् सर्वमेव विश्वं ध्वंसमुखे प्राग्रसरीभविष्यति।

---

## तृतीयोऽङ्कः

### चतुर्थ-दृश्यम्

[ततः प्रविशतो यशोधरा छन्दकश्च]

छन्दकः। (यशोधरां विलोक्य) देवि! स्थिरा भव।

यशोधरा। अये छन्दक! भृशं मयि निष्करुणोऽसि।

छन्दकः। धन्यासि देवि! धन्या भवती। यदा राजपुत्रो मां कण्टकानयनाय समादिदेश तदा त्वं सुषुप्तौ मग्नासीः। भवतीमुद्दिश्य तारस्वरेणारुदम्—'गोपिके! उत्तिष्ठ, उत्तिष्ठ। शृणु मे वचः, प्रियस्ते रहसि त्रियामामध्यभागे नगरं परित्यजतीति!' किन्तु करुणतमं वचो मे न त्वच्छ्रुतिगोचरं जातम्। निखिलायां राजपुर्यां न कोऽपि जागरित आसीत्। महान् असौ कण्टकः, यस्य पादशब्दः क्रोशं

व्याप्य ध्वनति नाम—तस्य तीक्ष्णतमटापाः कठोर-हेषारवाश्च न कमपि भग्नसुप्तिकं कर्तुं प्राभवन्।

यशोधरा। किन्तु केनोपायेन परमसुरक्षितं नगरद्वारमुद्घाटितम्?

छन्दकः। देवताः सर्वा निश्चितं राजपुत्रस्य सहाया आसन्। तस्य निर्गमनसमये राजपुरी तमःपिच्छिला जाता। भीम-कठोर-प्राचीरसन्निबद्ध-महासंरक्षणद्वाराणि स्वत एवोद्घाटितानि। सङ्केतमात्रेण यथाऽहम् अचलं तथा कण्टकोऽपि। हृतचेतनावावां कायमग्रेसरीकृत्य कथमपि न चलनात् परिभ्रष्टौ।

यशोधरा। छन्दक! यत्र गतो मे प्रियस्तत्र मामपि नय। देवः स्वयमेव मां कथितवान् बहूनि जन्म-जन्मान्तराण्यावां समं समे पथि परिभ्रान्तवन्तौ। अद्य कथं स एकाकी परिभ्रमतु।

छन्दकः। देवि! कुत्र यास्यसि। नाहं जानामि कुत्र स गत इति।

यशोधरा। (दीर्घं निःश्वस्य) अहो एवं तर्हि बहिर्गच्छामि चेत् अहमितो नष्टा ततो भ्रष्टा भविष्यामि।

आर्यपुत्रेणारोपितेषु वधूगुणेषु "श्वश्रू-श्वशुर-यथाशक्तिप्रेमा"-ख्य-गुणोऽन्यतम आसीत्। अहो! तस्याभीप्सितं नाहं जीवनविनिमयेनाप्यन्यथा करोमि। अहम् अत्रैव स्थास्यामि। अन्यथा पितुर्मे महाराजस्य जनन्या गौतम्याश्च किं भविष्यति? मामदृष्ट्वा नैतौ जीविष्यतः।

तद् भवतु—यथार्यपुत्रो मे वन आचरिष्यति, तथाऽहमपि ततोऽप्यभ्यधिकां तपश्चर्यां करिष्यामि। तपश्चर्या मे गुरुजनाशीर्वादैः प्रसरतु। सन्नासिनः सहधर्मिण्याः केवलो धर्मः सन्न्यास एव। अहम् इमं राजप्रासादमेव तपोवनपदवीं नेष्यामि। सोऽयं मे प्रियपल्यङ्क एव विविधपूजासामग्री-संभार-परिवृता पूजावेदी भविष्यति।

गभीरान्तःसत्त्वसंयोगाद् नियतमेवाहं मम जन्मजन्मान्तरनाथेन संयुक्ता भविष्यामि ।

छन्दक ! सत्यमहं विश्वसिमि—देवाः सर्वे तदा तस्य सहायका अभवन् । अहो नु भाग्यम् ! अपि मम नाथेन सन्देशः कोऽपि प्रेषितः ?

छन्दकः । देवि ! कोऽपि सन्देशो न प्रेषितः । केवलं महाराजाय सर्वाणि गात्राभरणानि संप्रेषितानि समाश्वासनवाक्यञ्च ।

यशोधरा । हन्त, नाहं कथञ्चन तस्य समाश्वासनयोग्यापि ( इति रोदिति ) ।

तथापि मया सर्वं तद्वद् अनुष्ठातव्यम् । [ ध्यानं नाटयित्वा ] प्रिय ! साम्प्रतं किं करोषि ? किं किं सन्न्यासाचरितं त्वयानुष्ठितम् ? ब्रूहि सत्वरम् । अहमप्यचिरेण तत्तद्व्रतं तत्तदाचरणञ्च पालयिष्यामि ।

भारतीया नार्यहं, त्वद्धर्म एव मे धर्मः । सर्वाणि करणीयानि मयैव चानुष्ठातव्यानि । केवलम् अनुष्ठानविषयान् मे निर्दिश, न कदापि किञ्चन लङ्घनं कुत्रापि भूयात् ।

छन्दक ! कुत्र मे पिता माता च ?

छन्दकः । देवि ! राजपुत्रस्य किमप्यमङ्गलमाशङ्क्य तौ देवमन्दिरं यामिन्यां प्रविष्टौ नाधुनाऽपि बहिरागतौ । को वा ताभ्याम् इमां मर्मच्छेदिनीं वार्तां दास्यति ? तद् यथा तथा वा भवतु, अहमेव यामि ।

( इति निष्क्रान्तः । )

यशोधरा । देव ! नाहं भीताऽस्मि ! कुत्र त्वं गमिष्यसि ? स्वर्गमर्त्यपातालेषु सर्वेष्वेव स्थानेषु त्वमेव मया सह गच्छसि, अहमपि ते चिरसहगामिनीति ।

( यशोधरा निष्क्रान्ता )

---

## चतुर्थोऽङ्कः

### विष्कम्भकः

[ सर्पजिह्वमर्कटमुखसंवादः ]

( प्रविशतो भिन्नदिग्भ्यां मर्कटमुखः सर्पजिह्वश्च )

सर्पजिह्वः। भो मर्कटप्रभो महामर्कट! साम्प्रतं कस्य भवने प्लवङ्गायिष्यसे? झम्पी ते कलिप्रियो रामदूतः साम्प्रतं कीदृशं साहायकं विधत्ते?

मर्कटमुखः। भो व्यालग्राहिन् विषवैद्यक, मन्त्रैस्तन्त्रैः कस्य जीवनप्राङ्गणं विधातुः सृष्टेः श्रेष्ठप्राणिभिरलङ्करिष्यसि? मम झम्पारुर्लाङ्गूलिको लाङ्गूलेन जगद् वर्तुलीकर्तुमिच्छति, तवाशीविषस्तु साक्षात् सर्वनाशी। साम्प्रतं कस्याशु कैवल्यवैपुल्यसंविधानार्थं वैद्यायसे?

सर्पजिह्वः। किं त्वं मम विशुद्धजीविकां सकटाक्षमीक्षसे?

मर्कटमुखः। नहि नहि बन्धो! कथम् आवां समपथविचारिणौ परस्परं दूषयावः? वयं वात्याविक्षुब्धस्यातलान्तक-महासमुद्रस्य कल्लोलतल्लजाः पोतच्छिद्राण्यन्विष्यार्णवयानानि रसातलातलतलं प्रेषयामः। गोपनगभीरसलिलविहारि-महासमुद्रयानस्य देवदत्तस्य वा का वार्ता? राजनीतिमहासमुद्रस्य कस्यां दिशि वर्ततेऽसौ?

सर्पजिह्वः। अहो बन्धो! तस्मादावां समे हट्टे पण्यं क्रीणीवः। सत्यं नु!

मर्कटमुखः। [ कर्णे एवम् एवम् ] तस्माद् गुप्तचरावावां शाक्यराज-महामन्त्रिणः। बन्धो! अपि मन्यसे स्वाभिमतेन सप्तवर्षवयस्कस्यैकमात्रराजपुत्रस्य विशेषत एकमात्रसन्तानस्य सन्न्यासविधात्री यशोधरा राज्यभारं ग्रहीष्यति? अहो चिन्ताभारो महामन्त्रिणो देवदत्तस्य हेतोः।

सख ! आवां तत्र किं करिष्यावः ? अस्मादृशानां नियोगः खलु वार्तासंग्रहार्थम्, तदर्थमेव यतिष्ये । तस्मादिदं साम्प्रतं युज्यते। आवां स्व-स्व-जीविकाजालं विस्तारयावः, यथानवहिता जनास्तत्र धृता भवेयुः।

सर्पजिह्वः । त्वमेव प्राथम्येन स्वीय-विद्या- बुद्धी प्रकाशय ।

मर्कटमुखः । बाढम्— ( गायति )

अहो जीव वृक्षचर कलिप्रिय ।
विक्रमं ते प्रकाशय झम्पे झम्पे हासय
धीमतो दर्शय वदनश्रियः ॥१॥ ५४
विचित्राण्यहो जगन्ति सुखं सर्वत्र वसन्ति
बलीमुखाः समविदग्धतुण्डाः ।
स्वमुखानि यथा दहन्ति राज्यसुखं तथा घ्नन्ति
विधानपर्षदि भाषणषण्डाः ॥२॥ ५५
नृत्य नृत्य कपे नर्तनप्रिय ॥
वानर कस्ते दोषो झम्पे तव सन्तोषः
बृहन्तो हनुमन्तो लोमशाः ।
परद्रुमकाण्डनाशाः खीचिरमिचिराभ्यासा
राजन्ते शतोत्कोचदासाः ॥३॥ ५६
कपे मे गुरुपादेषु झम्पय ॥
नृत्यं कुरु झम्पारो दर्शय ते कपिशमुरो
मिथ्या न जानासि कथय कथय !
जगति नरकुलपुङ्गवा मृषाभाषणपाटवा
नाशयन्ति धर्मं मलिनधियः ॥
याहि विषवैद्यं संभाषय ॥४॥५७

( ततः प्रविशतो धीरं सगरदत्त-तिष्यौ )

सगरदत्तः। कः कोऽत्र भोः! अहे तिष्य! अपि जानास्येनं मर्कटजीविकम्। को वाऽसावाहितुण्डिकः? देवदत्त आभ्यां नितरां बिभेति।

तिष्यः। एतौ द्वौ जानाम्येव। एतौ राज्ञः शुद्धोदनस्य गुप्तचरौ। सर्पजिह्व-मर्कटमुखौ।

सगर-तिष्यनामानौ देवदत्तमहासखौ।
राजपुत्ररिपुश्रेष्ठौ षण्डामर्कौ समागतौ ॥५८

[ पलायेते सर्पजिह्व-मर्कटमुखौ ]

## चतुर्थोऽङ्कः

### प्रथम-दृश्यम्

[ बुद्धदेवसकाशे शुद्धोदनस्य वार्तासंप्रेषणम् ]

( ततः प्रविशति कालोदायी )

कालोदायी। ( स्वगतम् ) पुत्रस्नेहातुरेण महाराज-शुद्धोदनेनानुरुद्धोऽस्मि—"अद्य यावत् प्रेषिता बहवो राजदूता अन्ये च। ते पुनः सर्वे बुद्धसकाशं गत्वा किमपि मनोऽभिरामं संलभ्येव न पुनरागच्छन्ति। बहोः कालात् पुत्र-विरहितस्य मे दुःखिन्या जनन्या महाप्रजापतिगौतम्याश्च कालो न यातीव। यतस्त्वं सिद्धार्थस्य बाल्यबन्धुरसि मम च परमविश्वासभाजनम्, अतः साम्प्रतं त्वयैव गन्तव्यम्। न केवलं राजपरिवारः सहजराजानुरागपरायणो मे प्रजापुञ्जोऽपि राजपुत्रदर्शनलोलुप आस्ते। येन केनाप्युपायेन स प्राणाधिको राजपुत्रः सिद्धार्थः—साम्प्रतं बुद्धनाम्ना ख्यातोऽत्रानेतव्यः।" इति, तदत्रागतोऽस्मि।

( ततः प्रविशति शिष्यपरिवृत आसनस्थो बुद्धदेवः। )

शिष्याः। प्रणमामो भगवन्तम्।

शिष्येषु कश्चन। ( कालोदायिनं दृष्ट्वा ) चक्षुर्भ्यामापिबन्निव नः कोऽप्यागन्तुको विस्मृतनिखिलजगद्दण्डायमानो दृश्यते।

कालोदायी। ( स्वगतम् ) अहो अदूरे दृश्यते धृतकाषायवस्त्रो भक्तजनपरिवृतः सन्न्यासिमण्डलमण्डनं बाल्यबन्धुर्मे बुद्धदेवः। एतेन सह वयं सप्त सहजाताः। सन्न्यासो नाम शान्तिस्थानं प्राणिनाम्—

दुःखैरध्यात्माधिभूताधिदैवैः
सन्तप्तानां घोरसंसारमार्गे।
वानप्रस्थादप्यनिर्वाणभाजां
सन्न्यासोऽयं शान्तिनीडः समेषाम्॥ ५६

अहो सुष्ठु खलु निरूपितं स्थानं वयस्येन तपस्यायाः ।

संसारकोलाहललेशशून्या पुण्या तपस्योचितभूमिरेषा ।
यस्यां प्रविष्टस्य ममापि चित्त उदेति संसारविरोधिभावः ।। ६०

यत् सत्यं सुनिर्धारितः खलु पन्थाः सुहृदा मे सिद्धार्थेन ।

मन्दं मन्दं वाति पवनः, सर्वत्र चतसृषु दिक्षु पूर्वो मधुमयो गन्धो नासापुटौ संलोभयति । हन्त ! सद्यः सन्न्यासिनोऽस्य—

सा हैमकान्तिर्मलिना न जाता, त्वचोऽपि सा कोमलता न लीना ।
काषायवासा अपि भासते मे, पुरेव कौषेयमसौ वसानः ।। ६१

अस्य भागवती अपूर्वा विभा सूर्यदेवस्य प्रभामपि मलिनीकरोति । करुणावरुणालयो बन्धुर्मे कोटिमणि-माणिक्यधृग् रत्नाकर इव नीलवर्णं परिहाय गौरवर्णधरः शाश्वतशिवः शुभङ्करो राजते ।

अहो वयस्यो मे वनेऽपि राजेव राजते । तथाहि—

पदं श्वापदानामरण्यं हि राज्यं प्रजा हिंस्रहिंस्रा मृगेन्द्रप्रधानाः ।
त एते विनीतास्तथाऽनेन राज्ञा बभूवुर्यथैते मुनीनां सगोत्राः ।।६२

भवतु, यथा कथञ्चित् समीपं गमिष्यामि । ( इत्यग्रे सरति ) ।

बुद्धशिष्यः । कुत आगतो भवान् ? किमिच्छति ? केनोपायेन भवत्-सेवां करोमि ?

कालोदायी । अहं कालोदायि-नामधेयो महाराज-शुद्धोदनेन कपिलवास्तुनगरात् संप्रेषितोऽस्मि । भगवद्बुद्धसंदर्शनमहं याचे ।

शिष्यः । मुहूर्तमपेक्षतां भवान् । अहं भगवते निवेदयामि ! ( गत्वा पुनः प्रतिनिवृत्य ) आगच्छतु भवान् । ( इति तं बुद्धसकाशं नयति ) ।

बुद्धदेवः । ( बाल्यबन्धुं मधुरं वीक्ष्य )

अपि कुशली त्वम् ? अपि स्वास्थ्यं भजेते अम्बा महाराजः पिता च मे ? अपि कुशलिनः कपिलवास्तुनिवासिनः सर्वे ?

कालोदायी । ( स्वगतम् ) अहो कथमयं परमसन्न्यासी प्रेम-विमोहनो बन्धुरिव भाषते ?

( प्रकाशम् ) भगवन् ! कपुषभल्लिशमुखाद् यदा प्रभृति महाराज-शुद्धोदनो भवद्वृत्तान्तं श्रुतवान्, तदा प्रभृति भवत्सन्दर्शनार्थमसौ परमसमुत्सुको मुहुर्मुहुर्दीर्घं श्वसन् कालं यापयति। ये केचनापीतः पूर्वं भगवत्सकाशं प्रेषिता आसन्, ते सर्वेऽत्रैव सुस्थिरा आसते। तस्मादादिष्टोऽस्मि महाराजेन शुद्धोदनेन, निश्चितमेव यथा भवान् गच्छति कपिलवास्तुं तथा मया विधातव्यम् इति। यद्यपि महामहिममयं परिवेशं दृष्ट्वा मयापि न स्थानान्तरगमनमिष्यते, तथापि भवता साकं महाराजसकाशं गन्तव्यम्।

बुद्धदेवः। ( ध्यानं नाटयन् ) तद् भविष्यति। अनाकुलं मोदस्व।
( सर्वे निष्क्रान्ताः। )

( चारण कवेः सङ्गीतम् )

दूरीकुरु तथागत तमो निरञ्जन
सद्धर्म-दुन्दुभि-नाद-प्रसूत-पर-प्रसाद-
मधुदानैः प्रसादय जगत् प्रेमघन ॥१॥ ६३
प्रज्ञान-बलीवर्द-धृत-धर्म-लाङ्गल-कर्षित-
हृदय-क्षेत्र-रोपित-विश्वास-बीजम्।
लसतु शाखापल्लवैः प्रवृद्ध-हर्ष-संप्लवैः
जनयतां निर्वाण-परमशस्यं निजम् ॥२॥ ६४
नित्यं प्रमोदय जगच्छाक्यनन्दन
पारण-तारण-धारण-कारण
यशोधरा-प्राणधन कपिलकुलपावन
सर्वजन-समाश्रय पतितपावन
आर्तजनस्नेह-दृष्टिकृत-नीराजन
सर्वं दुःखं दूरीकुरु महाजिन
दूरीकुरु तथागत तमो निरञ्जन ॥३॥ ६५

# चतुर्थोऽङ्कः

## द्वितीय दृश्यम्

[ सिद्धार्थस्य कपिलवास्तुनगरे प्रत्यावर्तनम् ]

( प्रविशन्ति सशिष्यः सिद्धार्थो महाराजः शुद्धोदनो माता गौतमी प्रजावृन्दश्च )

प्रजावृन्दम् । वन्दामहेऽस्मद्राजपुत्रं सिद्धार्थं परमसिद्धिदम् ।

शुद्धोदनः । वर्धतां तपो राजपुत्रस्य । हन्त !

यश्चन्दनोशीरविलेपनानां चीनांशुकानाञ्च चिरादभिज्ञः ।
तस्याङ्गरागो भसितेन वासस्तरुत्वचा हा किमिदं कृतं विधे ॥६६

गौतमी । वत्स ! परमकल्याणं ते भूयात् ।

अहो ते शरीरस्य समवस्था !

कषितकनकवर्णा देहकान्तिर्विवर्णा
सुघनकुटिलनीलः कर्कशः केशपाशः ।
वपुरपि तव तात प्राप्तभोगं पुरस्ताद्
अशन-वसन दैन्यादन्यदेवाद्य जातम् ॥६७

( करुणं गण्डस्थलं स्पृष्ट्वा ) यदा प्रभृति त्वं बहिर्गतोऽसि तदा प्रभृति मम जगज्जीर्णारण्यमिव जातम् । नाहं कुत्रापि शान्तिं लभे ।

बुद्धदेवः । जननि ! शान्तिस्वरूपिणी भवती, तव शान्तिं विना निखिलमेव राज्यं शान्तिहीनं जनिष्यते । मा कार्षीद् भवती परिदेवनम् । मातुः प्रसादादेव पुत्रस्य सिद्धिः । संबोधमालभ्याहं वाराणस्यां पञ्चवर्गशिष्यं प्राथम्येन दीक्षयित्वा तत्परम्परया निखिलं विश्वं सत्यधर्म-पथे चालयितुं वाञ्छामि । एतत् सर्वं भवत्या आशीर्वादम् अपेक्षते ।

गौतमी । तत् सर्वं भवतु । तव प्रयत्नेन निखिलं जगच्चिराय निष्कलुषं निरामयञ्च भविष्यति । किन्तु तद्विनिमयेन त्वयाऽपि मत्सकाशे दीर्घकालं स्थातव्यम् ।

बुद्धदेवः । तत् कथं भवितुम् अर्हति ? अहं बुद्धवंशजातः । साम्प्रतं सन्न्यासाश्रममवलम्ब्य कथं राजपरिवारे स्थास्यामि ?

गौतमी । पुत्र ! जगत्समुद्धरणार्थं बहिर्गतस्य ते नाहं बाधा भवेयम् । तथापि स्मरसि किं यदा द्वापरयुगे भगवान् श्रीकृष्णो विश्व-कल्मषध्वंसनार्थं प्रादुर्बभूव, तदा यशोदाजननी तदर्थं किं किं कृतवती । श्रीकृष्णोऽपि तां सर्वथा तोषयामासेति ।

बुद्धदेवः । जननि ! सर्वं स्मरामि किल । यदाऽहं श्रीकृष्ण आसं, तदा पिता शुद्धोदनो नन्दराज आसीत्, त्वमेव यशोदा माता, तव दुहिता यशोधरा च श्रीराधिका ।

मातः ! तथाप्यस्माभिः सर्वथा स्मर्तव्यम्, कालोपयोग्येवास्माकमव-तारः । अस्मिन् पञ्चकाषायसमये सर्वथाऽस्माभिर्दूरावस्थानपरै-र्भवितव्यम् ।

महाजननि ! कथं पुत्रा जनन्या दूरं गच्छेयुः । भवती मां संचिन्तयिष्यति चेदहं पर्वतकान्तारसागरान् उल्लङ्घ्य मुहूर्तेनैव त्वद्हृद्देशे राजिष्ये, कायेन चाचिरादेव सन्निकर्षमागमिष्यामि । मातरं विहाय पुत्रस्य धर्मसाधनं न कदापि संसिध्यति ।

मातः ! कथं त्वं दृष्टिहीनेवावलोकयसि । किं वृत्तम् ?

शुद्धोदनः । तव वनवासगमनाद् अनन्तरं तव जननी महाप्रजापति-गौतमी सर्वासां प्रजानां जननी भूत्वाऽपि त्वदभावेन भृशं करुणं रुदितवती, तेन च सा कालक्रमेणान्धीभूता । नितान्तं स्थैर्यवती बुद्धिमत्यपि ते जनन्यात्मसंयमनापटुरिव दृष्टिशक्तिविहीना । अहो मातुर्हृदयं नवनीतकोमलं न प्रबोधयोग्यं भवति ।

बुद्धदेवः । अतुलनीयं हि मातृहृदयं मायाममतादरसम्भारपारावारः —अत्र हि जगतः सर्वस्नेहनिष्कर्षः । तत् एकमेव भाजनं यत्र स्नेहप्रवृत्तेः कदापि ह्रासो न दृश्यते । महत्सु दोषेष्वपि ममताधिक्य-

मेव प्रजायते। केन केन वस्तुसमन्वयेन सत्यं नु विनिर्मितमेतदनुपमं वस्तु मातृहृदयमिति।

अमृतं मथितं सागरजननं
मातरि निहितं तुलनाहीनम्।
"मा"त्तरकथनं कल्मषदहनं
"तृ" सदा भवाब्धि-तरणे तरणम्॥ ६८

जननि! सर्वं दुःखं त्वया जगन्मङ्गलायैव सोढम्। जगति सत्यं वस्तु न नश्यति। तव दुःखसहनं सुचिरफलदायि जगति भविष्यति।

गौतमी। वत्स! यथा तथा वा भवतु, किन्तु चिरलीलासङ्गिनी सनातनधर्ममूर्तिर्यशोधरा—कथं वा सा चिरविरहजं दुःखं सहेत।

बुद्धदेवः। (सर्वतो विलोक्य स्वगतम्) अहो यशोधरा नागता। आत्मसम्मानज्ञानसम्पन्ना खलु सा।

शुद्धोदनः। पुत्र! अपूर्वसत्त्वधरा मम दुहिता यशोधरा। तव महाभिनिष्क्रमणकालात् कठोरं तप आचरितवती। यस्मिन् यस्मिन् समये त्वया यद् यद् आचरितम् अनुष्ठितं वा, तदा तदा तयापि तदनुरूपमनुष्ठितम्। यदा त्वया मुण्डनं कृतं, तयाऽपि केशवापः कृतः, त्वया काषायवस्त्रे परिहिते, साऽप्यस्मिन् राजप्रासादस्थकठोरसाधनवेदीमूले आत्मसमाहिता काषायं परिदधे; यदा त्वयान्नं परित्यज्य फलमूलादिकं परिगृहीतं साऽपि तथा कृतवती। त्वया परित्यक्तायां शय्यायां सापि तां परिजहार; स्वकक्षवेदीमूलमेव तस्याः शयनस्थानम्।

बुद्धदेवः। महाराज! कथं सा जानाति स्म कदा कदा मया किं किं कृतमासीत्।

शुद्धोदनः। तत् सैव जानाति। अहं मन्ये—तत् खलु साध्वीनां महारमणीनां शक्तिः, स्मरणेन चिन्तनेन वाऽनायासेन ता जानन्ति किल जन्मानुबन्धिवृत्तान्तम्। नाम यथा प्रेम समये स्मारयति, तथा वर्तमानजीवनसंवलितविषयानपि। अथवा सा शक्तिस्तस्याः साधनलब्धा।

शृणु। अप्रियमपि सत्यं किञ्चिद् वदामि। त्वया यादृशी तपश्चर्यानुष्ठिता, ततोऽपि समभ्यधिका तपस्या मद्दुहित्रा कृता। तस्याः शक्त्यैव त्वं शक्तिमान्। तव साधनया निखिलं जगदस्मिन् युगे परित्रायते चेत् मद्दुहितुर्यशोधरायाः साधनया सर्वेषु युगेषु सर्वे विश्ववासिनश्चरमां शान्तिं श्रेष्ठं सुखं वा लप्स्यन्ते। सामान्येन तपःसाधनरता कुलरमणी न केवलं स्वकुलस्य परन्तु स्वदेशस्य भूषणं परित्राणकारणं च। इयं तु यशोधरा युग-युगपावनी महाजननी जगतां सर्वशान्तिकारणमिति न कश्चन सन्देहः।

बुद्धदेवः। कथं सा नात्रागतवती? सर्वेषु मद्दर्शनार्थम् आगतेषु कथं साऽन्तःपुरे तिष्ठति?

गौतमी। यदास्मद्राजपुरवासिभिर्भवद्दर्शनार्थं बहिरागमनाय साऽनुरुद्धा, तदा सा कथयामास—वर्तते चेन्मयि शुद्धसत्त्वं किमपि, पुण्यबलं वा, राजपुत्र एव मत्सकाशमागच्छेत्। अभिनिष्क्रमणसमये न सा पृष्टा; भूयोऽपि च्छन्दकप्रत्यावर्तनसमये न तस्यै सन्देशोऽपि प्रेषितः। स्वभावेन मातुलबुद्धिः, साधनप्राखर्येण तस्याः प्रतिभाऽपि नितरां भास्वरतां गता। तस्याः कार्यं महता कारणेन भवितव्यम्।

बुद्धदेवः। भवतु तदहमेव तस्याः स्वकक्षस्थसाधनवेदीमूले गमिष्यामि। सारिपुत्तमौग्गलायनौ! युवामपि मया सार्धम् आगच्छतम्। यथा तथा साचरतु, मां वा स्पृशतु तथा अन्येनोपायेन वाप्यात्मनिवेदनं करोतु, न युवाभ्यां कश्चन विघ्न आचरणीयः। करुणामयी सा स्वाचरणेन करुणामैत्रीभावनादिकमेव संप्रसारयिष्यति। पितरौ बान्धवा! भवन्तः सर्वे निरामया भवन्तु। मयाऽपि यशोधरासकाशे गम्यते। ( सर्वे निष्क्रान्ताः )

# चतुर्थोऽङ्कः

## तृतीय-दृश्यम्

[ राहुलस्य सन्न्यासः ]

( कपिलवास्तु-राजोद्यानम् )

( ततः प्रविशतो राहुलो यशोधरा च । )

( दूरे सारिपुत्त-मोग्गलायनाभ्यां सह बुद्धदेवश्च । )

यशोधरा । ( साश्रुमुखी स्वगतम् )

धर्मः सर्ववरेण्य एष जनको दीक्षागुरुर्गौतमः
काम्येयं मणिहेमयोग्यरचना भाग्याद् घटेत क्वचित् ।
किन्त्वेकस्य सुतस्य राजपदवीमारोहतः साम्प्रतं
वात्सल्यान्मृदुला सहेत जननी सन्न्यासदीक्षां कथम् ॥ ६६

अथवा स्वसुखाय कथमहं पुत्रस्य हितादनवहिता भवेयम् ।

राहुलः । ( बुद्धदेवं निर्दिश्य ) मातः ! कोऽयमदूरे याति श्रमण-श्रावक-परिवृतः ? तस्य दर्शनमात्रेण मे मनसि महान् हर्षो जातः ।

अस्मिन् मे मनो मातः ! परं स्निह्यति । तत्त्वतो ज्ञातुमिच्छामि कोऽसाविति ।

राहुलमाता । शृणु पुत्र ! असावेव ते पिता ।

शाक्यकुमारो वरसुकुमारो
लक्षणसंयुतपुण्यशरीरः ।
जनकल्याणमधुरसर्वेश्वर
एष पिता ते वरनरवीरः ॥१॥ ७०

शीलसमाधौ निष्ठितचित्तो
बोधितरुतले सम्यग् बुद्धः।
देवमनुजादिजीवविवन्दित
एष पिता ते पर-नरसिंहः ॥२॥ ७१

राकेशगञ्जिमोहनवदनः
प्रमत्तगजेन्द्रविलसितगमनः।
प्रतप्तकाञ्चनवर्णविमोहन
एष पिता ते वंशपावनः ॥३॥ ७२

चामरच्छत्र-राजितचरणो
गोपद्मशोभि-सुनीलनयनः।
भ्रूयुगसुरेन्द्रधनुर्वररमण
एष पिता ते शाक्यनन्दनः ॥४॥ ७३

तारापाण्डुर-शुद्धमहोर्ण-
श्चत्वारिंशद्दशनसुवदनः।
बन्धुजीवनिभसुरक्तरसन
एष पिता ते पतितपावनः ॥५॥ ७४

नीलपथगतः सतार-चन्द्रः
श्रमणश्रावकविनुतमुनीन्द्रः।
याहि त्वरितं ब्रूहि च तातं
सुताय दायं देहि शाक्येन्द्र" ॥६॥ ७५

यशोधरा। पुत्र! याहि याहि साम्प्रतम्। त्वम् आत्मनो भागधेयम् अनुसर। अहं तावदन्तरिता तिष्ठामि।

राहुलः। [भगवन्तं बुद्धदेवमुपसृत्य] पूज्यपाद पितः! माता मे ब्रूते—यत् पुत्र एव पितृदायाधिकारी, अहमपि भवतो दायाधिकारमचिरणैव प्राप्स्यामीति। तद् देहि मे दायं पितः!

बुद्धदेवः। (पुत्रमुद्दिश्य)। भूयोऽपि मातरं पृच्छ। दायाधिकारः पुत्रस्य ध्रुव एव। अहन्तु सन्न्यासी विरक्तः, न मे किमपि जागतधनं वर्तते यत् तुभ्यं प्रदातव्यम्। किञ्च दायाधिकारप्राप्तये कथं त्वरसे ?

राहुलः। आ जन्मनो मात्रा शिक्षितोऽस्मि कर्तव्यकरणविषये न विलम्बः करणीय इति। किञ्च यतो भवान् सन्न्यासी, ततः सन्न्यासधन एव ममाधिकारः। जननी मे वदति - सन्न्यासधनमेव मह्यं प्रदातव्यमिति।

पुत्रो भूत्वा न्यासिनस्त्वादृशस्य
किं स्यामर्थी जागतानां धनानाम् ?
यस्ते दायो न्यासधर्मः स किञ्चिद्
देयो मह्यं मातुरप्येष कामः ॥७६॥

[ करुणं विलपन् महाराजः शुद्धोदनः प्रविशति। ]

शुद्धोदनः। अयि कठोर पुत्र! किं खलु त्वया क्रियते। त्वया किल मदेकवंशधरः सप्तवर्षीयो राहुलः सन्न्यासधर्मे प्रवर्तयिष्यते ? एतादृशः कुसुमकोमलो बालो न कदापि सन्न्यासधर्मे प्रवर्तनीयः स्यात्। यद्यपि त्वदभावे यशोधरा मे उत्तराधिकारिणी राजसिंहासनस्य, तथापि कठोरपतिधर्मपालिनी सा न कदापि संसारधर्मं राजधर्मं वा परिपालयिष्यति। ततो मे राज्योत्तराधिकारी केवलो राहुल एव। सोऽपि दीक्ष्यते चेन्मम राजवंशस्य समुच्छेदो नियत एव। अप्येतत् ते कर्तव्यम् ?

बुद्धदेवः। महाराज! किमत्र मे करणीयमास्ते? माता यस्य स्वयं यशोधरा, स आ जन्मदिवसादस्मिन्नेव पथि परिचालित आस्ते। अन्यथा कथमेष बालोऽन्यत् सर्वं परिहाय सन्न्यासधर्ममेव वरणीयं मन्यते। भवान् खलु मत्तोऽपि यशोधरां सुष्ठुतरां जानाति। तस्या मनोऽस्मिन् विषये सन्निबद्धं चेत्, न सा कदाचन स्वमतं परित्यक्ष्यति।

माता पुत्रस्य सन्न्यासमिच्छति, पुत्रः स्वयमपि सन्न्यासं कामयते—सति चैवं कथमहं तत्प्रतिरोधं कुर्याम् ?

शुद्धोदनः। किमत्र करिष्यामि ? भवतु यद्विधेर्मनसि स्थितम्--

माता यस्य स्वयं गोपा पिता यस्य तथागतः ।
स सप्तवर्षकल्पोऽपि सन्न्यासी नियतं भवेत् ।। ७७ ।।

अस्तु तत्, किन्तु तात, मया प्रार्थ्यते—अतः परं कदापि तव सद्धर्मे एतादृशः स्वल्पवयस्को बालो न दीक्षयितव्य इति ।

बुद्धदेवः। तदेव भविष्यति। किन्तु यशोधरा तस्याः पुत्रश्च भिन्नसत्त्वात्मकौ। तस्मात् सोऽद्यैव दीक्षितो भवतु।

सारिपुत्त-मौग्गालयनावेतस्य सद्धर्मे दीक्षादानं करिष्यतः।

[ बुद्धदेवो निष्क्रान्तः। ]

सारिपुत्तः। वत्स राहुल ! अद्य भगवता शास्त्रा योऽयं गुरुभारो मयि न्यस्तः, तेनात्मजीवनं परम-सार्थकं मन्ये। गुरुरपि भारोऽयं तदा कुसुमकमनीयत्वं लघुत्वं चापद्यते यदा चिन्तयामि यस्मिन्नमलाभयारुण-धर्मपथे वयं प्रचरामः, यस्मिन् सहजसुभगनियमानुग-प्रचरणमस्माकं जीवनस्य मुख्यं लक्ष्यं, तस्मिन् त्वं सप्तवर्ष-वयस्क एव समायात इति। धर्मस्फुरणी शक्तिस्त्वयि बाहुल्येन विराजते। तस्माद् धन्योऽहं तव दीक्षादाता, धन्यस्त्वं दीक्षाग्रहीता भगवतो बुद्धदेवस्याशीर्वादैर्धन्यञ्चेदं दीक्षानुष्ठानम्।

मौग्गलायनः।

धन्य आलोकदानेन दिनकरः किरणदानस्वभावो
धन्यो मेघो हि वारिवर्षणेन यस्माद् जलदोऽस्य नाम। ७८
धन्यो नु गन्धवाहः सुवासेन यस्मिन्नस्य विकाशो
धन्यश्च विहङ्गः कलकूजनेन यत्रास्य परदीपनम् ।। ७९ ।।
यथा सूर्यादयो धन्याः स्वस्व-पूर्णविकाशनात्।
धन्या च निखिला पृथ्वी तृप्तिसाधनपोषणात् ।। ८० ।।

धर्मो मधुस्तथा द्वेधा पूर्णमधुप्रपोषणात् ।
विश्वस्य पालनाच्चैव धर्मराज्यसुशासकैः ॥८१॥

किञ्च धर्मविषये वक्ता यथा धन्यस्तथा श्रोताऽपि, उभयोरेव परमशान्तेरास्वादनात् ।

( प्रविशन्तीं यशोधरामालोक्य )

नवीनं धर्मजन्मेदं लभमानस्त्वमुत्तमम् ।
वन्दस्व चरणद्वन्द्वं मातुरस्या महागुरोः ॥८२॥

राहुलः । नमो मात्रे नमो गुरवे । नमोऽन्येभ्यो गुरुजनेभ्यः । भवतामाशीर्वादैः कृतार्थो भवेयम् ।

यशोधरा । वत्स,

तापत्रयसमाकीर्णे विमार्गे भ्रमता त्वया ।
पितुरद्य समालब्धः सद्धर्मो नाम सत्पथः ॥८३॥

सर्वथा ते मङ्गलं भूयात् । ( सारिपुत्तमुद्दिश्य ) पुत्राय मे आशिषो ददातु भवान् ।

सारिपुत्तः । जननि यशोधरे ! स्वयं विश्वजननीस्वरूपिणी भवती यस्य प्रसूतिः लक्ष्मीर्यथा सौभाग्यस्य, किञ्च भवती स्वयमेव यस्मा आशिषो दत्तवती, तस्याशीर्वादान्तरैः किम् ? केवलम् प्रार्थये एष चिरायुर्भवतु, धर्मसङ्घयोः परमं कल्याणं साधयतु, चरमां शान्तिं चाधिगच्छत्विति । सत्यं नाम्नैवैतस्य मनुजरत्नस्य गुरुरहमस्मि, भवती पुनरस्याद्वितीयः शाश्वतजीवनदीपो नित्यभास्वरः—येन सर्वं भुवनं देदीप्यते । जनन्याः शुभाशीर्वादा अस्य चिर-कल्याणाय भूयासुः ।

राहुलः । जननि ! त्वां भूयो भूयो वन्दे । पादारविन्दरजांसि शिरसि मे स्थापय ।

यशोधरा । शाश्वतविश्वदीपभगवत्सुगतपथस्ते नितरां कुसुमाकीर्ण-सुरभिमोदित आस्ताम् । ( सर्वे निष्क्रान्ताः ) ॥

## पञ्चमोऽङ्कः

### प्रथमं दृश्यम्

[ ततः प्रविशति चिन्ताक्लिष्टः शुद्धोदनः प्रधानामात्यश्च ]

शुद्धोदनः। प्रधानामात्य ! देवबलेनैव राज्यधनं ग्राहयितुम् अहर्निशमहं देवसकाशं संप्रार्थ्य यशोधरां राज्यभारग्रहणाया-भ्यर्थितवान्। किन्तु तस्या उत्तरेण हताशोऽस्मि। सा खलु सस्मितं कथितवती—

अमिताभः पतिर्यस्या भिक्षुश्च केवलः सुतः।
तस्या जीवनसार्थक्यं बुद्धमार्गानुवर्तने ॥८४
शुद्धोदनो महासत्त्वो गौतमी च पराम्बिका।
यस्याः पूजास्पदं नित्यं तस्या धर्मधनं बलम् ॥८५

जानात्येव भवान्—निर्बन्धसहस्रेणापि यशोधरा कदापि स्वाभिमतं पन्थानं न त्यजतीति।

प्रधानामात्यः। तथापि निखिलराज्यवासिपक्षतः पुनरप्यहम् अनुरोत्स्यामि। एतन्मे महत् कर्तव्यम्।

शुद्धोदनः। भवान् अनुरोधं करोतु नाम। अहं तामत्राह्वयामि ! मातर्यशोधरे ! महामन्त्री त्वद्दर्शनं याचते।

( प्रविश्य ) यशोधरा। पितः ! आगताऽस्मि। महामन्त्रिन् ! कि मया कर्तव्यं – भवान् उपदिशतु। अहो सौभाग्यं कुलक्रमेण भवान् राजवंशस्य रक्षितेति।

महामन्त्री। मातः ! अहं याचे

त्वमुद्वहन्ती गुरुराज्यभारं क्लान्ताय राज्ञेऽवसरं प्रदेहि।
वयोऽनुकूलां कुलधर्मचर्चां कुर्वन्नयं येन नयेद्दिनानि ॥८६

भवादृशी पालिकाऽस्माकं भवेच्चेद् राज्यवासिनां सर्वेषामानन्दस्यावधिन स्यात्।

यशोधरा। पितृतुल्य महामात्य! भवानेत्रोपदिशतु वंशरक्षणमेव कर्तव्यं कुलधर्मरक्षणं वा? कुलधर्मरक्षणमेव नारीणां कर्तव्यं चेन्मम बुद्धवंशस्य रक्षिता को भविष्यति? बुद्धसहधर्मिण्यहम्, तस्यैव धर्मपरिपालनं, तस्यैव वंशधर्मसङ्घसंरक्षणं मे जीवनस्य ध्रुवं लक्ष्यम्। कथमहं परमधर्मोल्लङ्घने समर्था भवेयम्?

महामात्यः। तथापि देवि! महाराज-शुद्धोदनाभिलषितं भाविनृपं राहुलं भिक्षुपदवीं प्रापय्य राज्यसंरक्षणविषयेऽपि त्वम् अनाकुला न स्याः। क इदानीं राज्यभारं गृह्णीयात्?

शुद्धोदनः। महामात्य! यथा मे माता यशोधरा भणति भारतीया सहधर्मिणी सा. तस्याः श्रेष्ठं कर्तव्यं पतिमार्गावलम्बनं पतिधर्मसंरक्षण-तत्परता च। न वयं तस्या धर्मपथे बाधा भवेम। मातः! न त्वं क्लेशमनुभूयाः। शुक्लोदनोऽमृतोदनो द्रोणोदनश्च भ्रातरो मे वर्तन्ते। तेष्वेकतम एव राजा स्यात्।

महामात्यः। किन्तु महाराज! यशोधरायाश्चारित्र-प्रकर्षो नियम-निष्ठाप्रभृतयो गुणाश्च न तेषु दृश्यन्ते।

शुद्धोदनः। तथापि मङ्गलपथे माता यशोधरा मे न बाधां लभतां नाम।

मातर्यशोधरे! स्वमन्दिरं गच्छ। मा खलु लेशतोऽपि दुःखिता भूः।

[ यशोधरा निष्क्रान्ता। ]

महामात्यः। भवतः सर्वेऽपि भ्रातरः साम्प्रतं बुद्धोपदिष्टधर्मपथं वरं मन्यन्ते। भिक्षुमार्गे तेषां रतिः। देवदत्तः परं कलुषितचारित्रः। तस्य हस्ताद् राज्यं परित्रातुं को वा समर्थो भवेत्।

शुद्धोदनः। मम वंशे कोऽपि राजपदवीं न वाञ्छति चेत्, अन्यतरः शाक्यराजो भद्रिक एव मम राज्यभारमपि गृह्णीयात्। अहो

मद्भ्रातरोऽपि धर्ममार्गं बहुमन्यन्त इति जयति खल्ववतारो बुद्धस्य। यतः,

यदालोककणा लुप्ता धरित्री क्लेदपूरिता।
तदायाति जगज्ज्योतिः संसार-स्थितिकारणम् ॥८७॥

( निष्क्रान्तौ शुद्धोदनमहामात्यौ )

## पञ्चमोऽङ्कः

### द्वितीयं दृश्यम्

[ यशोधराप्रभावेण गौतम्या दृष्टिशक्तेर्लाभः ]

स्थानम् :—न्यग्रोधवनम्।

( प्रविशतो यशोधरा बुद्धदेवश्च फलाहरणप्रवृत्तौ )

यशोधरा। कच्चित् स्मर्यते भवता मम प्रार्थितं यज्जनन्या गौतम्या दृष्टिशक्तिः पुनरानेतव्येति ?

बुद्धदेवः। तत् खलु त्वयैव करणीयम्।

यशोधरा। देव! किन्तु तव वनवासगमनाद् अनन्तरं जननी मे त्वदर्थं भृशं रुदितवती, तेन च कालक्रमेण तस्या दृष्टिहानिर्जाता। अतस्त्वयैवैतद् दुःखमवश्यमेव निराकरणीयम्।

बुद्धदेवः। [ संचिन्त्य ] सुष्ठु कथयसि देवि! किन्त्वेतत्करणे सामर्थ्यं तवैव। शक्तिरूपिणी त्वं स्वशक्तिप्रभावेणैतत् कर्तुं शक्ताऽपि कथं मामनुरुणत्सि।

यशोधरा। देव! नहि नहि। भवानेव सर्वत्र प्रभवति, भवत्कृपैव जगत् पुनाति परित्रायते च। वयन्तु ते स्नेहपात्रं समादरस्थानञ्च।

बुद्धदेवः। देवि, सर्वे वयं सर्वेषां स्नेहादरास्पदम्। धर्म-सङ्घ-संरक्षणार्थं सर्वे वयं परस्परं कल्याणध्यानतत्परा भवेम। तथापि शृणु

यशोधरे ! सत्यगोपनं न मे स्वभावः। यथाऽहं वेणुवन-जेतवन-न्यग्रोधवनप्रभृतिषु विहारेषु शिष्यान् उपदेशक्रमेण प्रश्नोत्तरमुखेण वा वदामि, त्वामपि तद्वद् वदामि—

यदा त्रेतायुगेऽहं रामचन्द्र आसं तदा महामाया माता कौशल्यासीत्, भरत आनन्दः, लक्ष्मणः शारिपुत्तः, त्वं तदा सीतासीः। बोधिसत्त्वदशायां दुःखिजनानां दुःखमपनेतुं यदाहं षष्ठभूमिम् अतिक्रम्य सप्तमभूमिमगमं तदा कुशनाम्नाहं परिचित आसम्। तव नामासीत् तदानीम् अप्रतिमेति, देवदत्तश्च जठरो नाम प्रबलप्रतिद्वन्द्वी नृपतिः। तदा दैवक्रमेणाहमेव त्वत्सकाशं जठरस्य प्राणभिक्षामकरवम्।

प्रतियुगं प्रतिजन्म चेत्थं मह्यं परमां शक्तिं दत्त्वा त्वं परमा शक्तिर्मां शक्तिमन्तं कृतवती। तत एवाहं शक्तिमांस्त्वच्छक्त्यैवास्मिञ्च जन्मनि बुद्धः संबोधिं प्राप्तः।

सा यशोधरा त्वं जनन्या गौतम्या दृष्टिशक्तेः पुनःप्रापणं वाञ्छसि चेत् स्वशक्तिप्रभावेण कल्याणि तथा कुरु।

यशोधरा। यदीदृश एव तेऽभिप्रायस्तर्हि तथैव भवतु।

[ सहसा न्यग्रोधवने भगवान् अलौकिकीं शक्तिं प्रकटयन् परितो भ्रमति। तस्य शरीरतः सहस्रशो ज्योतिः प्रसरति। ]

यशोधरा। [ जननीम् आहूय तां हस्ते धृत्वानीय ] जननि ! पश्य पश्य नाथस्याश्चर्यं कृत्यं, पूर्वाकाशतः पश्चिमाकाशमिव गच्छति उत्तरतो वा दक्षिणम्। प्रदर्शयति च लीला बहुधा। कति कति जना नु पश्यन्ति भगवन्तं—भीतभीता विस्मयविमूढाश्चित्रार्पिता इव। जननि ! पश्य पश्याश्चर्यं यन्न कदापि दृष्टपूर्वम्।

गौतमी। दुहितः ! किं मामुपहससि ? अन्धाहं कथं पश्येयम् ?

यशोधरा। मातः, भृशं दुःखितास्मि यत्त्वं मामेवं मन्यसे। किन्तु,

आश्चर्यं तव पुत्रस्य सिद्धार्थस्य विचेष्टितम्।
दृष्ट्वा विस्मयमूढाहं तवोपालम्भनं गता ॥८८॥

तत् त्वां प्रणिपातेन क्षमये। (बुद्धमुद्दिश्य स्वगतम्)

त्वया विनीयापि तमो जनानाम्
आन्ध्यं दृशोर्यन्न हृतं जनन्याः।
चिकित्सितुं तन्मम साहसिक्यं
क्षमस्व, मानं परिरक्ष देव ॥८९॥

(गौतमीं प्रति) मातः! भवच्चक्षुषोर्जलं ददामि।

(इति चक्षुषोर्जलं ददाति, गौतमी च प्रसन्नदृष्टिर्जाता)

गौतमी। हन्त वत्से! किं नाम त्वया कृतम्?

कृष्णा जवनिका काचित् किं नेत्राभ्यामपासरत्।
चिरात् पश्यामि विश्वं यद् रम्यं सूर्यकरोज्ज्वलम् ॥९०॥

अहमदूरे सिद्धार्थं नानाविध-क्रीडाकौतुकरतं पश्यामि। कथं जलप्रयोगेण ममान्धत्वं त्वं दूरे कृतवती? ईदृक्प्रभावहेतोर्हि महाराजः सर्वदा कथयति—पुत्रान्मे कन्या गरीयसीति।

यशोधरा। नहि नहि। अहं भगवतो बुद्धस्य केवलं कृपादासी। साम्प्रतमावां तत्सकाशं गच्छावः। एहि, मातः। [बुद्धदेवमुपसृत्य] —(आनन्दोत्फुल्ला) नाथ! पश्य पश्य किं तावत् संघटितम्। पश्य चिराद् दृष्टिशक्तिं लब्ध्वा माता मे परमाश्चर्यान्विता प्रत्यक्षेऽप्यश्रद्दधानेव चतसृषु दिक्ष्ववलोकयति, भगवन्तं च प्रकटितमाहात्म्यं पश्यति। मया ससम्भ्रमं जनन्याश्चक्षुषोर्जलं प्रदत्तम्, तस्याश्चान्धता सुदूरमपसृता।

गौतमी। कथं नु सिद्धार्थ! संघटितम् एतत्?

बुद्धदेवः। महादेवि! एतस्या यशोधरायाः साधनायाः प्रभावेण भवत्या दृष्टिशक्तिः पुनर्लब्धा।

यशोधरा। नाथो मे किं भणति! (पादयोः पतित्वा) मातः! नहि नहि भगवतो बुद्धस्यैव करुणयैतत् सर्वं संघटितम्।

सन्न्यासिनः प्रियसुतस्य वियोगशोकात्
प्रादुर्बभूव तव लोचनयोर्यदान्ध्यम्।

तेनैव तत् प्रतिकृतं सुतया मया ते
मातः प्रसीद तनये भव वीतमन्युः ॥६१॥

बुद्धदेवः । यशोधरे ! सर्वे मां सर्वाश्चर्याणां कर्तारं तर्कयन्ति, किन्तु त्वमेव तत्र कारणम् । तत् त्वं सुखिनी भव ।

[ सर्वे निष्क्रान्ताः । ]

## षष्ठोऽङ्कः

[ यशोधरा-प्रयत्नेन नारीणां बौद्धधर्मे प्रवेशनम् ]

[ ततः प्रविशतो महाप्रजापतिर्गौतमी यशोधरा च ]

यशोधरा । मातः ! प्रभुप्रवर्तित-धर्मप्रभावेण दस्युश्रेष्ठोऽङ्गुलिमालोऽविकलकीर्तिरम्बपाली अन्ये च कति वा देशाहितसाधनकारिणो न मुक्ताः । सर्वं प्रभोः कृपाबलम् । किन्तु प्रभोर्जीवनसमये यदि "भिक्षुणी" सङ्घो न प्रतिष्ठितः स्यात्, तदा जननि ! किं नु भवेन्नारीसमाजस्य ? जननीं विहाय काऽन्या प्रभुमत्रोद्युक्तं करिष्यति ।

गौतमी । कथम् ? मम दुहिता यशोधरेमं महोपकारं नारीणां संसाधयिष्यति ।

यशोधरा । जननि ! मातरि वर्तमानायां कथं दुहिता प्रगल्भेत । किञ्च पित्रोर्महिम्नैव दुहिता महिममयी । भवतां पादाङ्क एव मयाऽनुसर्तव्यः । तस्मात् प्रार्थये—भवती भगवन्तं ब्रवीत्विति ।

गौतमी । किमिति वत्सेऽत्र तवाग्रहातिशयः परिलक्ष्यते ? नारीणां मृदुला गतिः, धीरपदक्षेपेण वयं विचरिष्यामः । किन्त्वभ्रान्तं स्यादस्माकं लक्ष्यं, यथा पथि वयं न परित्यक्ताः स्याम ।

यशोधरा । यन् माता वदति, नूनं तद् ध्रुवं सत्यम् । किन्तु मातः ! काले कार्यं न क्रियते चेत् कालगर्भेऽन्धकारे तत्स्वरूपं लुप्यते,

न कदापि तत् सार्थकतां भजते। तस्मादत्रास्माभिः प्रयत्नः साम्प्रत-मेवास्थेयः। नैतद् विलम्बं सहते।

गौतमी। [स्वगतम्] मम स्वल्पभाषिणी कन्या विषयेऽस्मिन् मुखरा जाता। अहो! अस्या मनोरथोऽवश्यमेव मया पूरणीयः। [गोपामुद्दिश्य] वत्से! यतोऽत्र ते महती आकूतिर्जाता, ततो नाहं विलम्बं करिष्ये। किन्तु वत्से! सिद्धार्थो वितर्क-सङ्करे प्रवर्तेत चेन्नाहं तेन सार्धं योद्धुं पारयिष्यामि। तस्मान्मया साकं त्वमप्यागच्छ।

यशोधरा। भवत्या आदेशानुसारेणाहं यास्यामि। किन्तु त्वयैव पुरोवर्तिन्या भवितव्यम्। भारतीयधर्मशास्त्रेषु जनन्यास्तुलनं नास्ति। माता सर्वधर्माणां मूर्धनि वर्तते। निखिल-नारीसमाजस्य प्रभूतं हितं त्वया विधास्यते।

गौतमी। यदि पुत्रो मे पृच्छेद् मातः! न कदापि नारीणां सङ्घभुक्ते-रधिकार आसीदस्मिन् भारतवर्षे, किं नु तदा मया वक्तव्यम्? नासौ मे तादृशः पुत्रो यो मदनुरोधक्रमेणैव स्वविवेकाननुकूलं कर्म करिष्यति। त्वं पुनः कविरसि, पण्डिताऽसि, एषु विषयेषु तवैवाधिकारः।

यशोधरा। जननि! तव स्नेहप्रकर्ष एव त्वाम् ईदृशं भाषयति। नाहं तव पदधूलेरपि योग्या। [इति पदरजांसि गृह्णाति।]

गौतमी। [स्वगतम्] यथा मे पुत्रस्तथैव दुहिता, एतयोस्तुलनं कुतः?

यशोधरा। (गभीरं विचिन्त्य) मातः! भवत्या सहाहं भवदादेशानुसारेण यास्यामि; किन्तु प्रभुणा सह तदैव साक्षात्कारः करणीयः, यदा प्रभोर्निज-सेवकम् आनन्दं विनान्यः कोऽपि न तत्र स्थास्यति। तत्र कारणद्वयम्—प्रथमतः, बहुजनाः कार्यं नाशयन्ति। द्वितीयतः—आनन्दः स्वभावत एव नारीं प्रति समवेदनां सम्माननं च पोषयति। आनन्दस्य साहाय्यम् अस्माकं प्रभूतहिताय भविष्यति।

गौतमी। तत् त्वमेव जानासि। अस्मिन्नेव समये तादृशः सुयोगो भविता। तदेहि आवां गच्छावः। (इति परिक्रामतः)

(प्रविशत्यानन्देन सहितो बुद्धः)

अहो अयमागच्छत्यानन्देन सह मम पुत्रः, तत् समय एषोऽस्मदभिलाषं तस्मै ज्ञापयितुम्।

यशोधरा। तस्माद् भवती वदतु।

गौतमी। (बुद्धदेवमुपसृत्य) धीमन्! इयमहं तव जननी अद्य साभिप्रायमागता। बौद्धधर्मसंप्रचारणेन जगतः कलङ्ककालिमा बाहुल्येनापसृतः। किन्तु नारीणां कृतेऽपि ते करणीयमास्ते। यथा ता अपि सर्वदुःखेभ्यो विमुक्ता भवेयुः, निर्वाणार्हाश्च स्युस्तथा कुरु।

बौद्धो धर्मः सुप्रतिष्ठो धरायां
पुंसां यद्वत् तापशान्तिं विधत्ते।
एवं स्त्रीणां तापशान्त्यै त्वयाद्य
स्थाप्यो नूनं "भिक्षुणी"सङ्घ एकः ॥६२॥

बुद्धदेवः। मातः, कथं वा तद् भवितुम् अर्हति? नायः सर्वथा महिममय्य इत्यत्र न मे कश्चन सन्देहः। किन्तु स्थापिते "भिक्षुणी"-सङ्घे मम धर्मः स्वल्पायुर्भविष्यतीति मयाशङ्क्यते।

गौतमी। तत् कथम्?

बुद्धदेवः। स्थापिते भिक्षुणीसङ्घे परिणामे कालुष्यं धम समाश्रयेत् चेत् क इमं धर्मं संरक्षिष्यति? "भिक्षुणी"-सङ्घपरिचालनाऽपि भविष्यति द्वितीयं शिरःशूलकारणम्। तृतीयतः, अपि नार्यो निर्वाणार्हा भवेयुः?

आनन्दः। प्रभो, ममात्र किमपि वक्तव्यमास्ते।

बुद्धदेवः। निर्भयं ब्रूहि।

आनन्दः। यतो भगवती महाजननी स्वयमेव समागता, ततोऽस्माभिरिदं विशेषेण विवेचनीयम्। अहं सहजसारल्येन विश्वसिमि नार्य एव धर्मसंरक्षणे चिरं तत्परा इति।

बुद्धदेवः। आनन्द ! एतत् सर्वथाऽप्रस्तुतम्। प्रश्नत्रयस्य उत्तरं मे को दास्यति ?

यशोधरा। भगवान् अनुमन्यते चेद् अहं किञ्चिद् वक्तुमिच्छामि।

बुद्धदेवः। [ स्वगतम् ] अस्याः सकाशादेव मे उत्तराणां प्रत्याशा। [ यशोधरामुद्दिश्य ] बाढम्। निःसङ्कोचमुच्यताम्। युक्तयः सन्ति चेन् निश्चितमहं "भिक्षुणी"सङ्घं स्थापयिष्यामि ! किन्तु—

सङ्घः स्याद् भिक्षुकाणामिव यदि घटितो 'भिक्षुणी' नाम्न कश्चित्
कालुष्यं कालधर्मात् तमथ च कलयेत् तत्र किं कौशलं स्यात्।
के वैनं चालयेयुः शमदमनिगृहीतेन्द्रियाश्वप्रचाराः
पुंवन्निर्वाणमेता दधतु किमु नवेत्यस्ति शङ्कात्रयं मे ॥६३॥

यशोधरा। देव ! कालुष्यविषये यद् भवान् वदति, तत्रेद-मस्माभिरुच्यते कालुष्यं नाम तेनैव अपनेतव्यं, यो भविष्यति सद्धर्म-रक्षणभारं ग्रहीष्यति। कालुष्यापनयनसमये सद्धर्मरक्षायां च नारीणामेव साहायकमवश्यमेव ग्रहणीयम्। नायं धर्मपक्षी एकेन पक्षेणोड्डयितुं शक्नोति। पटुतरोऽपि पक्षो द्वितीयस्य पक्षस्य साहाय्यं विना पक्षिण उड्डयनविषये सहायो न भवति। पुरुषाः कथं नारीणां बलिष्ठसहायतां विना धर्मपक्षिणश्चिरायोड्डयनसाहायकं कुर्युः। तस्मात् नारीणां शिक्षादीक्षा-प्रभृति-सर्व-सौकर्यसाधनमवश्यमेव विधातव्य-मस्माभिः।

बुद्धदेवः। अस्त्वेतत्। सङ्घपरिचालनायां यदि पुरुषा अधिक्रियेरं-स्तदा कालुष्य-सम्भावना दुष्परिहरैव।

यशोधरा। परिचालनाविषयेऽपि नार्य एव अग्रण्यः स्युः। दत्तोऽधिकारे यदि तास्तं रक्षितुं न शक्नुवन्ति, सोऽधिकारो नश्यतु नाम। परम् अधिकारदानात् प्रागेव कथं वक्तुं शक्यते नार्योऽनधिकारिण्य एवेति। नारीणां हृदयं नाम तादृग्वस्तु यत् पतिपुत्रसमादृत-संरक्षितपरिपूजितं सर्वं प्राणदानेनापि संरक्षति। देव ! पुरुषः करोति, नारी रक्षति ;

पुरुषश्चिन्तयति, नारी सार्थकरूपं सृजति ; पुरुषः पादक्षेपेण प्रचरति, नारी पथिमध्यात् कण्टकान् दूरे क्षिपति ; पुरुषः सङ्गरमाह्वयति, नारी सेवाधर्ममाहात्म्येन जयमाहरति ; पुरुषो राजहर्म्यस्य बहिर्द्वारे हुङ्कारं करोति, नारी स्नेह-ममत्व-माधुर्यरसेन सर्वं विश्वं वशीकरोति। ततः प्रभो ! कथं नारीविषये भवतः संशयः।

तृतीयं यच्च पृष्टम् अपि नार्यो निर्वाणार्हा भवेयुरिति तत्रोच्यते, कथं ता न निर्वाणार्हाः स्युः। आत्मैव भवता भगवतोऽप्यूर्ध्वं स्थापितः। सोऽयमात्मा अणोरणीयान् महतो महीयान् न पुरुषशरीरे नारीशरीरे च भिन्नस्वरूपेण वर्तते। भवदुपदिष्टाष्टमार्गानुसरणादिकं नार्योऽपि यथायथं कर्तुं शक्नुयुः। यथा पुरुषास्तथा नार्योऽभीष्टलाभविषये सिद्धिमधिगच्छेयुः। भूयोऽपि पश्यतु देवः। अस्माकं देशस्येतिहासे नारीणां धर्माधिकारो भूयिष्ठो दरीदृश्यते। यथा ऋग्वेदे सप्तविंशतिर्नारीऋषयः ; गार्गी - वाचक्नवी - मैत्रेयी - सुलभा-वडवा - प्रातिथेयी-पालकाप्यपत्नीप्रभृतयो महामहीयस्यो ब्रह्मवादिन्यः। यजुर्वेदस्य बहुष्वंशेषु नारीणामत्युदात्तधर्माधिकाराः प्रपञ्चिता आसते। एवं कति नामोदाहरणानि दातव्यानि ? तत् सर्वं ज्ञातमेव। अतः प्रार्थये धर्मसङ्घबल-दृढीकरणार्थं धर्मस्य दीर्घ-जीवनलाभार्थमपि नारीसङ्घस्थापनमचिरेणैव करणीयम्। किञ्च, अम्बाहञ्च "भिक्षुणी"धर्मम् अवलम्बिष्यावहे ॥

बुद्धदेवः। भवत्या युक्तयो निराकर्तुं न शक्यन्ते। अतो "भिक्षुणी"सङ्घो मया संस्थापयिष्यते। जननी त्वञ्च तदन्तगते भविष्यथः। विश्वस्य शं भवतात्।

गौतमी। वत्स, सुतरां प्रीतास्मि ते। महदिदं कर्म त्वया कृतम्—

अन्याराधित-पुण्यसादित-कषायाशेषबीजाश्चिरं
या: स्वाधीनतया बभूवुरबलाः शक्ता न पुण्यार्जने।
तासामैहिक-पारलौकिक महाश्रेयोनिदानं परं
तातायं घटितस्त्वया करुणया स्त्रीभिक्षुसङ्घः शुभः ॥६४॥

# सप्तमोऽङ्कः

[ यशोधरापरिनिर्वाणम् ]

[ शिष्यपरिवृतो ध्यानमग्नो भगवान् बुद्धः ]

[ प्रविशति 'भिक्षुणी'भिः सह यशोधरा ]

स्थानम्—वेणुवन-विहारः।

समयः—रात्रिः; तिथिः—वैशाखी पूर्णिमा।

यशोधरा। अहो! स्निग्ध-कोमलेयं वैशाखी पूर्णिमारजनी। स्मितवदनो भगवांश्चन्द्रमाः पीयूषधारां वर्षन् महामधुरतया शोभते। किन्तु मम हृदयचन्द्रः शान्त-स्निग्ध-शुचि-शुभ्ररूपप्रभया पराजयते देवं चन्द्रमसम्। करुणा-कोमलो मैत्रीमूर्तिश्चिरशान्तिधाम कोटि-सुधाकरसुशीतल-तनुरहो राजते सम्मुखे मे श्रीभगवान् अमिताभः।

(बुद्धदेवमुद्दिश्य)—अमृत निर्झर! विश्वचन्द्र! इयं तव श्रीपादारविन्द-रेणुका दीना यशोधरा त्वां वन्दते।

बुद्धदेवः। अपि सर्वं कुशलम्?

यशोधरा। भगवदाशीर्वादैः कुशलं निखिले विश्वे। देव! अद्य महन्मेऽस्त्यभिलषितम्। अस्यां पूर्ण-पूर्णिमा-यामिन्यां तद् भगवच्छ्रीपाद-पद्मे निवेदयितुमिच्छामि।

बुद्धदेवः। अयमहम् अवहितोऽस्मि।

यशोधरा। नाथ!

अष्टसप्ततिवर्षाहं परिपक्वं वयो मम।
अद्य रात्रौ गमिष्यामि परिनिर्वाणमुत्तमम्॥६५॥
आर्यपुत्रो महाप्राज्ञः संप्रबुद्धो महामुनिः।
अहमुपासिका दीना त्राता त्वं जगतां प्रभो॥६६॥

सर्वेषां मङ्गलं भूयात् पश्चादायातु मे भवान् ।
अद्य मे गमनं श्रेयो याच्यते तव सम्मतिः ॥९७॥
संसारे संसरन्त्या मे यत्किञ्चित् स्खलितं त्वयि ।
देव क्षमस्व तत् सर्वं नासीत् पारं सुखस्य मे ॥९८॥
समचित्ता समाचारा नितरां सहगामिनी ।
आसमस्मि भविष्यामि प्रिया ते सर्वरूपिणी ॥९९॥
त्वमेव मे विमोक्षोऽसि निर्वाणञ्च त्वमेव मे ।
त्वयि तुष्टे जगत्तुष्टं त्वं हि मे शरणं परम् ॥१००॥
मधुमयं जगत् सर्वं त्वयि मत्सम्मुखे स्थिते ।
शास्ता पाता महाप्राज्ञो विदायमनुमोदताम् ॥१०१॥

बुद्धदेवः । ममतामयि ! कथमद्य तवैतादृशोऽभिलाषः ? चिरमुक्तायाः शाश्वत-निर्वाणप्राप्तायास्ते किं महापरिनिर्वाणेन ? वरं स्यात्ते धरायां दीर्घकालव्यापिनी स्थितिर्धर्म-सङ्घयोः परमपुष्टिसाधनाय, स्नेहसुधादानेन धरित्र्याश्चिर-पिपासानिवारणाय च ।

यशोधरा । करुणा-वरुणालय ! भवतः स्निग्ध-मधुर-वचोभिः परमं संतृप्तं मे मनः । किन्तु प्रज्ञानिधे जगत्पते ! भवतो निर्देशक्रमेण सुदीर्घकालं मया संसारे स्थितम् । परन्त्वहं भारतीया रमणी, मम हृदयस्य चरमाभिलाषो भवतः प्रागेव जागतलीलासंवरणम् । तस्मात् सानन्दानुमोदनं मया रचितकरसंपुटं याच्यते ।

बुद्धदेवः । परमसुभगे ! सिद्धिं लभतां तेऽभीष्टम् । ममापि त्वत्-सकाशेऽद्यायमेवानुरोधः—महातिरोभावात् प्रागेव प्राणप्रतिमसन्तानेभ्य-स्तवान्तिमवाणी मातुराशीर्वादाश्च प्रदेयाः ।

[ भिक्षून् 'भिक्षुणी' श्चोद्दिश्य ]

भोस्त्यागव्रतावलम्बिनः साधकाः साधिकाश्च । जगन्मातुर्निष्किञ्च-नाया धरायशोरूपिण्या यशोधरायाः गो-पालिकाया गोपाया अमृत-निष्यन्दिनी महावाणी युष्माभिश्चित्तमन्दिरे निधेया ।

आनन्दः। "भिक्षुण्यो" भिक्षवश्च! एत, वयं मिलिताः—कुसुम-कोमलां सर्व-मङ्गलां स्नेह-विमलां पूर्ण-मञ्जुलां जननीं वन्दामहे जगज्ज्योतिर्भगवन्तं च वन्दामहे। (यशोधरामुद्दिश्य) मातः, भवत्याः स्नेहविमण्डितं भाषणम् अस्माकं परमसम्पद्-रूपेण राजताम्।

वस्तुत :— जननी हि मानवजीवन-सर्वस्वम्।
धमनी-वहने प्राणेऽपाने
जागरणेऽम्बा किं वा स्वपने।
ज्योतिर्जननी विश्व-लोकने
योग-क्षेमौ नित्य-साधने ॥१०२॥

मदीयजननी मूर्तसाधना
धारणैषणा भजन-कामना।
आसु सर्वासु नित्य-प्रधाना
परात्परा सा विश्वातुलना ॥१०३॥

भूयोऽपि वन्दामहे जननीं निष्किञ्चन-यशोधरां या जगतो हिताय न केवलमात्मानं स्वामिनञ्च एकमात्रं पुत्रं राज्यं च, यत् सत्यं नारीजीवनस्य मानव-जीवनस्य च काम्यं सर्वमेव वस्तु—निर्मायम् उदसृजत्। किञ्च, स्वीय-साधनप्रभावेण या न केवलं बुद्धशक्तिं वर्धितवती, परं स्वीयानवद्य-मातृस्नेहदानेन धर्मं सङ्घं च चिरसंपुष्टौ कृतवती। विश्वजननि! भवत्या धाराकारा आशिषो धरित्रीं प्रवृद्धफलां कुर्वन्तु।

( नेपथ्ये )

राज्यं परित्यज्य पतिञ्च तादृशं
पुत्रं परिव्राज्य च सप्तहायनम्।
प्राप्तापि निष्किञ्चनतां यशोधरा
धरातलेऽनीयत सर्वपूज्यताम् ॥१०४॥

यशोधरा। भगवन्!

दुःखं दुःखं क्षणिकं क्षणिकं
तव हि भाषितं—सर्वं शून्यम्।
आत्मिकं जगत् दृश्यादन्यद्
दुःखैर्हीनं शाश्वतं पूर्णम्।
तव हेतोर्मयि जातं तूर्णम् ॥१०५॥

का स्यान्मम वाणी सा तव प्रतिध्वनिः
सत्त्वं तत्त्वं तव मम सर्वम्।
तवाज्ञापालनं मम पुण्यसाधनं
जनयति जीवन-मादन-गवम् ॥१०६॥

भगवंस्त्वद्धर्मानुसरणम् एव मे परम् आनन्दः, परमा सिद्धिः, चरमा ऋद्धिः, परमा पूर्णता, चरमा सार्थकता च।

निर्वाणं परिलब्धं त्रुटितं हि प्रारब्धं
तवैव शास्तः! सकृपपोषणम्।
निर्वाणं वा मुक्तिस्तत्र का मेऽनुरक्ति-
र्वाञ्छामि तु तव पादे स्थानम् ॥१०७॥

त्वदाज्ञानुसारेण सन्तानेभ्योऽपि किमपि मया वक्तव्यम्। मया सन्तानसकाशं केवलमुच्यते—

भवत बुद्धशरणा धर्मसङ्घप्राणा
विकिरत जगति ज्योतिर्धाराः।
मत्र्यादिभाविता प्रज्ञापारमिता
प्रोल्लसतु विश्वे पूर्णसारा ॥ १०८॥

बुद्धदेवः। कल्याणि! त्वमेव मे शक्तिस्तृप्तिः शान्तिमुक्तिश्च! मम सेवा-प्रेमत्यागधर्मः—यस्यादौ कल्याणं मध्ये कल्याणमन्ते च कल्याणं स तव कल्याणमूर्तावेव प्रमूर्तो जातः।

यशोधरा। नाथ! कृतार्थोऽस्मि। सूर्ये यथा दीप्तिः, पुष्पे यथा सौरभम्, सागरे यथार्द्रता, सज्जने यथा सूक्तिः, भक्ते यथा सेवा, मुक्ते यथा दुःखविरतिः—तद्वत् त्वय्येवाहं राजे। अद्य न दुःखमयो विच्छेदः किन्त्वावयोर्महामङ्गलमयं महामिलनम्। सेयं वैशाखी पूर्णिमा आवयो-राविर्भावमिलन-शाश्वतात्मिकमिलनतिथिः। शाश्वती कौमुदी विश्वे नितरां भातु।

बुद्धः। अतः परं किं ते प्रियं करोमि?

यशोधरा। अतः परमपि किं प्रियमस्ति?

संसारात्तापसाराज्जनि-मरण-रुजामाकरादुत्तितीर्षु-
स्त्वामाप्ता कर्णधारं प्लवमपि यदिमं बौद्धधर्मं विशुद्धम्।
नारी दीनापि पुण्यां यदहमुपगता बौद्धसन्न्यासदीक्षां
प्रेयः किं स्यादतोऽन्यन्मरणकवलिता प्रार्थये यद् भवन्तम् ॥१०६॥

अपि च—

पुत्रो राहुल एष एष च भवान् मायासुतः सा ह्यहं
गोपा संयममात्रभिन्नमिह मे गार्हस्थ्यमेव स्थितम्।
शीर्षं न्यस्य पदाब्जयोस्तव मुखे संस्थाप्य नेत्रे स्थिरं
मुञ्चन्त्या वपुराधिभौतिकमिदं याच्यं किमन्यन्मया ॥११०॥

तथापीदमस्तु—सुगतानुगता पृथ्वी धर्मबललब्धसिद्धि-
मुञ्चतु जरामृत्युरोगशोकपाशम्।
तथागतप्रेमधर्मो विश्ववासि-हृदयमर्मं
विभया करोतु पुनर्गततमोलेशम् ॥१११॥
राजतां भ्रातृसङ्घो वर्धतां प्रेमसङ्गो
हिंसाद्वेषविमुक्ता भवतु धरित्री।
अमितार्भ-भक्तिनम्रे विश्वे हि प्रेमकम्रे
प्रज्ञापारमिता विलसतु सुखदात्री ॥११२॥

ॐ शान्तिः शान्तिः शान्तिः ॥

## उपसंहार-सङ्गीतम्

ज्ञान-भानु-बुद्ध-शास्त्र-कौमुदी-गोपिका-मातृ-
निरुपम-विमोहन-महाशान्ति-मेलनम् ।
प्रज्ञोज्ज्वल-दिवा-विभा-प्रीति-स्निग्ध-निशाप्रभा
धराधाम-युगपत्-फुल्लप्रकाशनम् ।।११३।।
अहो अद्य विश्वे किं नवघटन-घटनम् ।
भल्लिकैपुष-कोण्डन्य-सारिपुत्तमोग्गलायन-
इगानन्द-कालोदायि-शिष्यगणम् ।
प्रणौमि च किसा-चन्दा-धम्मा-सोमानन्दा-
सुजाता-सुक्का-तिसा-शिष्याजनम् ।।
सुखं लसतु च जगति धर्मज्ञानम् ।।११४।।

जय जय जय जय बुद्धदेव जय
जय जय जय जय यशोधरे जय
जय जय महाराज धर्माशोक जय
जय जय गौडातीश दीपङ्कर जय
जय जय लक्ष्मींकरे चिन्तामातजंय
जय युग-युगान्तरसत्यधर्म जय ।।११५।।

———

यशोधराविषये

डक्टर-श्रीयतीन्द्रविमल-चतुर्धुरीणेन विरचिता

# सङ्गीतमालिका

तत्र प्रथमं सङ्गीतम्

## श्रीश्रीयशोधरा-स्तुतिः

१

जननि जगदाधार-भक्तचित्त-प्रसादिके ।
अवगुण्ठनहारिके पुत्रसन्न्यासकारिके ।
तुभ्यं नमः ॥१ ।११६॥

२

जननि यशोधरे सुयशोविशाले
पापतापहारिणि काञ्चनप्रोज्ज्वले
सुगतमोहिनि प्रसूनसुकोमले
देहि ते पदं मातर्यतिपतिभाले ॥२ ।११७॥

विफले श्रुतिफले आगता भूतले
प्रेमपथविहारिणि पुण्यविमले
कवित्वसुमधुरे शास्त्रसमुज्ज्वले
यतिर्नौति पुनस्तव पदकमले ॥३ ।११८॥

३

विम्बसुन्दरि गोपेऽम्ब भद्दकच्चे(1) सुभद्दके ।
नमस्तुभ्यं दयासारे फिम्पे(2) राहुलमातृके ॥
तुभ्यं नमः ॥४ ।११९॥

---

1. Bhadra-Kañcanā or Bhadra-Kaccā, so called on account of the golden colour of her body.

2. Prabably, an abbreviation of Bimba. Yaśodharā is lovingly called Phimpā by her Siamese children.

द्वितीय-सङ्गीतम्

## यशोधरा-जन्म

"नमो भगवतोरहतो सम्मा संबुद्धस्स"

कपिलवास्तुनगरे चन्द्रकरधारासारे

समागतो यदा तथागतः ।

वैशाखपूर्णिमातिथौ पापतापौ चिरधौतौ

देवगीति "जातो रणञ्जहः" ॥

तदा त्वमपि जननि भवदुःखनिवारिणि

गोपा विषमविरहभीता ।

यशोधरा यशोभागा विश्वजन-मनोलोभा

संजाता मनोरमा-दुहिता ॥

[ आसीस्त्वं रामावतारे जगज्जननी सीता वसुन्धरासुता

गोपारूपा पुनरपि त्वमागता

युगे युगे पापहरण-मानसा माता । ]

छन्दकश्चिरसारथिः जातो हयो मनोगतिः

कण्टको जन्मान्तरानुचरः ।

अन्ये लीलासहचरा धरित्रीपवित्रीकरा

( अहो ) महोल्लासश्चिरशुभकरः ॥

सममेव आगताः सर्वे ते प्रियपरिकराः ॥

(सद्यः) लीलाप्रकीर्तने मातराशीर्वादान् ददस्व नः ।

तथागतं त्वया साकं यतिर्नौति पुनः पुनः ॥

तृतीयं सङ्गीतम्

## विवाहवासरे यशोधरा

श्रीबुद्धैक-जीविते जननि नमोऽस्तु ते ।
विवाहवासरसज्जिते सुस्मिते नमोऽस्तु ते ॥१॥१२४॥

विधातुः परमा सृष्टिर्बुद्धैकशरणा परा ।
"व्यलंकरोमि मारं न त्वामिति" भाषणतत्परा ॥ २॥१२५॥

हताश-सुन्दरानन्द-देवदत्तविमानिके ।
बद्धवंशमहाभूतिमैत्रेयागमसूचिके ॥३॥१२६॥

धर्मसङ्घ-महाशक्ति-महोन्मेषणकारिके ।
दण्डपाणि-महामाया-परमानन्द-दायिके ॥४॥१२७॥

यन्त्रनिष्पेषिते मर्त्ये हिंसाद्वेषप्रपूरिते ।
सद्बुद्धिं देहि पुत्रेभ्यो मातर्गोपे धराहिते ॥५॥१२८॥
कलियुगपावनि महाजननि नमस्तुभ्यं नमोऽस्तु ते ।
सुताधमस्य यतीन्द्रस्य सुगोपायै नमोऽस्तु ते ॥६॥१२९॥

---

## चतुर्थं सङ्गीतम्

सुखदो जननी-नियत-विकाशः ।
क्लिष्टे भुवने सत्य-प्रकाशः ॥१॥१३०॥
अहो धरित्र्या गुरु-सन्त्रासः ॥२॥१३१॥
आणवकचूर्णाहासो दानवेयसमुल्लासो
रुस-स्फुटनिको (१) ऽन्तक-विलासः ॥३॥१३२॥
जनन्या भवतु परमोल्लासः ।
कषाय-भुवने हितप्रकाशः ॥४॥१३३॥
प्रपञ्चित-पञ्चशीलं जगज्जनपुण्यमूलं
वर्धयतु दिशि वरसौभ्रात्रम् ।
पञ्चस्कन्धनिवारकं चतुरार्यसत्यादिकं
करोतु विश्वं सततपवित्रम् ॥५॥१३४॥
सिंहलब्रह्मश्याम— चीनकम्बोजनीपन—
भूमिपुञ्जं सत्यधर्मजितम् ।
विलसतु मातृगानैः पुत्रजागरणतानैः
भवतु भारतं दुहितृ-नन्दितम् ॥६॥१३५॥
प्रसरतु पुण्यं ध्यानबृंहितम् ।
कर्मभुवि लसतु पुण्यमविरतम् ॥१३६॥
वरदेऽयि जननीमणे देशे मम पुण्यधने
घटतां भ्रातृद्रोहविनाशः ।
मातर्विश्वस्य पराश्वासः ॥७॥१३७॥

---

(१) Russian sputnik.

# Alphabetica' Index of Verses of Niski:.cana-Y. sodharam

*The first figure in the Index refers to pages and the second figure to the serial number of Verses.*

A Supplementary List of the index of verses of the Sangīta-mālikā on Yaśodharā

# LIST OF METRES

( Used in the Niṣkiñcana-Yaśodharam )

[ Metres of the Supplement Sangīta-mālikā on Yaśodharā not given here. ]

अनुष्टुप्—१२, १३, १४, १६. २३, २६, २७, २८, २९, ४०, ५०,
५१, ५८, ७७, ८०, ८१, ८२, ८३, ८४, ८५, ८७, ८८,
९०, ९५, ९६, ९७, ९८, ९९, १००, १०१।

आर्या—५, ७।

उपजाति—६०, ६१, ६६, ८६, ८९, १०४।

गीति—६, ८, ९, १०, ११, ३२, ७८, ७९, ।

तोटक—२५।

द्रुतविलम्बित—४८।

पृथ्वी—२०।

भुजङ्गप्रयात—२४, ६२।

मन्दाक्रान्ता—१७, २१, २२, ३३, ४३।

मात्रा—१८, १९, ४६, ४७, ५४, ५५, ५६, ५७, ६३, ६४, ६५,
६८, ७०, ७१, ७२, ७३, ७४, ७५, १०२, १०३, १०५, १०६,
१०७, १०८, १११, ११२, ११३, ११४, ११५।

मालिनी—६७।

वसन्ततिलक—१, ३०, ३५, ४१, ४२, ४४, ४५. ४९, ५३ ९१।

शार्दूलविक्रीडित—१५, ३१, ३४, ३६, ३७, ३९, ५२, ६९, ९४, ११०।

शालिनी—२, ३, ४, ३८, ५९, ७६, ९२।

स्रग्धरा—९३, १०९।

# General Index

# Manjusha

Vol. IV (about 400 pages)—29 storiettes, hymns from the Rigveda with commentary, छात्री versus छात्रा, पतत्र versus पत्र, Goethe's maxims (original German with Sanskrit translation), Saratchandra's Niṣkṛti, on Pāṇini's क्त, महाभाष्य, विश्रम versus विश्राम, सेवका versus सेविका, अन्योन्य, 11 humorous skits. Rs. 6/8/-.

Vol. V (about 400 pages) 16 storiettes, 4 long stories, 12 poems, humorous skits, discussions on परःशत, भ्रातृव्य, सूनृता, आङ्गो दाऽन्नास्यविहरणे, on the Anubandhas, on grammatical gender, Sanskrit equivalent of "horse-power", Tagore's poems, Language as fossil history, on Sāyaṇa's Bhāṣya. **The Śivasūtras and the Sanskrit Alphabet**, Patañjali's Mahābhāṣya, Hymns from the Avesta, etc., etc. Rs. 6/8/-

Vol. VI (about 400 pages) 5 storiettes, 2 long stories, 1 Bhāṇa, Derivations of अश्वतर and पुत्र, आनोभद्रीयसूक्त with various commentaries, explanation of the Madhusūkta, Kālidāsa and Bhavabhūti, Mahābhāṣya (pp. 33-136), Rasamañjarī, etc., etc. Rs. 6/8/-

Vol. VII (about 400 pages) **Technical Terms and Technique of Sanskrit Grammar—Samāsa, Kāraka and Vibhakti.** Kālidāsa and Bhavabhūti (5 instalments). Was Pāṇini a Communist? Kālidāsa and Shakespeare. Greek Proverbs (64 pages). On तरप् and तमप्. On सूनृत and भ्रातृव्य. Meaning of शफोरू. 9 storiettes, 3 long stories, मृगया in Sanskrit Drama, etc., etc. 6/8/-.

Vol. VIII (about 200 pages) Short stories, long stories, humorous skits, महाभाष्यरत्नमञ्जूषा. Meanings of Sanskrit proper names. Sanskrit stanzas and their parallels from European languages. Sanskrit equivalent of bread. Notes and Queries. Tagore's short story. On देवानांप्रियः. On the derivation of कार्मुक, On Abhinavagupta. **On Śārṅgarava and Śāradvata.** Tagore's Urvashi. Common Errors. **So-called Solecisms of Kālidāsa.** Rs. 3/8/-.

Vol. IX (nearly 300 pages). **So-called Solecisms of Kālidāsa.** Literary Parallels. Common Errors. Technical Terms of the Mugdhabodha. Tagore's story and poems. Contradiction in Terms. On the correct derivation of प्रवीण, सिकता etc. वाग्मी vs. वाग्ग्मी. बिभीषण versus विभीषण. On फ, ढ, ख, छ, घ in Pāṇini. A new stanza from Vyāḍi's Saṁgraha. Meaning of रद विलेखने. सतीर्थ्य versus सतीर्थ. The Anubandhas र, क, प, उ, ष in Pāṇini, **The Technical Terms—Upasarga, Nipata, Karmapravacaniya, Gati, etc. Apurva in Mimamsa.** In Defence of the Padapāṭha. On ऊकालोऽज्झ्रस्वदीर्घप्लुतः. On वामदेव्यं साम. रेफ versus रकार. Rs 6/-

Printed and published by Sri Visvanath Chatterjee, M.A. from 8 Bhupendra Bose Avenue, Calcutta-4. Printed at the Gupta Press, 37/7 Baniatola Lane, Calcutta-9.

चन्द्रशेखर चन्द्रशेखर चन्द्रशेखर पाहि माम् ।
चन्द्रशेखर चन्द्रशेखर चन्द्रशेखर रक्ष माम् ॥

श्रीशिवः शरणम्

पञ्चदश-वर्षे ] December, 1960 [ चतुर्थी संख्या

# मञ्जूषा




सम्पादकः—श्रीक्षितीशचन्द्र-चट्टोपाध्यायः

## सूचिः



## अप्पाशास्त्रिणां पत्राणि

अचिरादेव मञ्जूषाया अप्पाशास्त्रिस्मृत्यङ्कः प्रकाशयिष्यते, तदर्थं वाचकमहाभागाः श्रीमदप्पाशास्त्रिणां जीवनवृत्तान्त-विषयक-प्रबन्धप्रेषणायाभ्यर्थ्यन्ते । येषां च सविधे राशि-वडेकरमहोदयस्य पत्राणि वर्तन्ते ते कृपया मञ्जूषायां प्रकाशनार्थं तेषां प्रतिलिपिप्रेषणेनानुगृह्णन्तु नः ।

*Office :* 8, Bhupendra Bose Avenue, Calcutta—4.
Minimum Annual Subscription : Rupees Six only.
Foreign—Twelve shillings.
Single copy : One Rupee.

शरणं तरुणेन्दुशेखरः शरणं मे गिरिराजकन्यका।
शरणं पुनरेव तावुभौ शरणं नान्यदुपैमि दैवतम्॥

# मञ्जूषा


| December, 1960. | १८८२-शकीयपौषस्य १५श-वर्षस्य चतुर्थी संख्या | Vol. XV No. 4 |
|---|---|---|


## आभाणकमाला

१। नात्मना तृप्यति नाप्यन्यस्मै ददाति। तैत्तिरीयसंहिता २।५।४।३।



Greek. Kuōn en phatnē.

Latin. Canis in praesepi.

A dog in the manger.

गवादन्याम् ( अश्वादन्यां वा ) सारमेयः।

Greek. Hē kuōn en phatnē. Hē en tēi phatnē kuōn.

A bitch in the manger.

गवादन्याम् ( अश्वादन्यां वा ) सारमेयी।

French. Comme le chien du jardinier qui ne mange pas de choux et ne veut pas que personne en mange.

French. Comme le chien du jardinier qui ne mange pas des choux et n'en laisse point manger aux autres.

उद्यानपालस्य शुनक इव स्वयमपि हरितकं न भुङ्क्ते नाप्यपरेषां भक्षणं विषहते।

उद्यानपालकस्य सारमेय इव स्वयमपि हरितकं न भुङ्क्ते नाप्यरान् भोक्तुं ददाति ( तु०—बाष्पस्तु न ददात्येनां द्रष्टुं चित्रगतामपि। )

यवनविष्णुशर्मणा Aesop-महोदयेन वर्ण्यते—कश्चन भषकोऽश्वादन्यां प्रविष्टः स्वयमपि शस्यानि न भक्षयति यदा चाश्वा भोजनार्थमुपतिष्ठन्ते तानपि भषणैर्गर्जनैश्च भीषयित्वा भोजनाद्वारयति। इति।

---

# स्वरसंज्ञाविमर्शः

( पूर्वतोऽनुवर्तते )

अयं भावः। कुमेरावुदितस्य सोमरूपत्वं पूर्वमुक्तमादित्यस्य। तत्रार्धोदित आदित्ये ऋषभरूपत्वमिति पूर्वमुक्तम्। तत्रार्धोदित आदित्ये रश्मिरूपगोयोगात्परवर्तिनो गान्धारत्वमिति पूर्वं नारदीयशिक्षानुसारेण प्रदर्शितम्। एवं चार्धोदितबिम्बस्य उषोभियोगः। उषसां च समूहरूपेण वचने ग्रामशब्देन व्यवहारस्य मन्त्रेषु वचनात्तस्यादित्यस्य ग्राममुषःसमूहमासाद्य वृद्धिमत्तोदयस्थले, एवं तस्यैव बिम्बमध्यभागस्योषोभिर्वियोजनान्निर्ह्रासः। तेजसो न्यूनत्वेन तद्रूपनिर्ह्रासो भवति। यथा सोमस्य कुमेरावादित्य एव सोम इति तस्योषोग्रामवशतो वृद्धिनिर्ह्रासौ भवत उदयास्तावसरे। तत्र दृष्टान्तः सोम एव। सोमशब्देन पदार्थत्रयमुच्यते। वल्लीरूपः सोमः, चन्द्रमाः, आदित्यश्च। तथाच श्रूयते "सोमो वै वाजस्तस्य चन्द्रमास्तृतीयं योऽयं पवते स तृतीयम्"* इति। तत्र चन्द्रमा यथा कलाग्राममासाद्य वृद्धिमांस्तद्वशत एव निर्ह्रासयुक्तः क्षीणो भवति, एव कुमेरौ सोम आदित्योऽपि ग्राममुषोग्राममासाद्य वृद्धिमान् अधिकतेजस्को न्यूनतेजस्कश्च भवत्येवं सुमेरावयमपि बिम्बमध्यभागो धीभिरुषोभिरेव युक्तो वर्द्धतेऽथवा क्षीणो भवतीति। अस्तगतानामुषसां शचीशब्देन व्यवहारः, शचीशब्दस्य धीशब्दस्य च कर्मबोधकनामसु पाठादभिन्नत्वम्, शची चेन्द्राणी इन्द्रस्य पत्नी, इन्द्रश्च पूर्वस्यामर्धोदयस्थले इति तत्पत्न्यपि बिम्बमध्ययोगिनी भवति। सा चोषोरूपैव। उषसां च समूहरूपेण वचनं ग्रामशब्देनापि वचनम्। एवं सति, अयमादित्यस्य सुमेरुस्थलीयबिम्बमध्यभागो ग्रामसम्बन्धेन विवर्द्धते उदयस्थलेऽस्तस्थले च क्षीणो भवति। एवं चैतस्य धीयोगवशतो धैवतत्वमिति। अयमपि भागः पूर्वास्तमितभागापेक्षयोच्च एवेति पञ्चमस्वरापेक्षयायं धैवत उच्च एव। परवर्तिपूर्वापरवृत्तेनास्तमुपयन्बिम्बभागो निषाद इत्युच्यते। तद्विषये नारदीयशिक्षायामुच्यते। निषीदन्ति स्वरा यस्मान्निषादस्तेन हेतुना। सर्वांश्चाभिभवत्येष यदादित्योऽस्य दैवतम्॥९। इति। एतस्मिन्बिम्बान्तिमभागे सर्वे स्वरा निषीदन्ति, उदयावसरे एतत्प्रवृत्त्यूर्ध्वमेवापरेषां स्वराणां प्रवृत्त्याऽस्तावसरे चैतददर्शनेन सर्वेषां स्वराणामदर्शनमिति सर्वे स्वरा एतदधीना अत्र निषीदन्तीवेति तस्मादसौ निषादः। अत एवास्यादित्यरूपत्वमिति सर्वस्वराभिभावकत्वात् इति। एतावता आदित्यबिम्बस्योदयावसरे तद्भावानां यः क्रमस्तद्विपरीतक्रमोऽस्तावसरे। उदयास्तमययोश्च बिम्बभेदं विना संभवो नेति भेदकल्पना। तत्कल्पनायां बिम्बभेदकमध्यप्रदेशोऽव्यक्ततेजोमय इति गृहीत्वा सप्त स्वरा गानसम्बन्धिनो भवन्ति। उदयावसरीयास्त्रयोऽस्तावसरीयास्त्रयो मध्यवर्ती चैक इति सप्त। उदयविपरीतक्रमो बिम्ब-

---

* दुर्गाचार्येण स्कन्दस्वामिना च निरुक्तटीकायाम् [११।१] उद्धृतमिदं वाक्यं कुत्रत्यं न विज्ञायते। मैत्रायण्यां दृश्यते—सोमो वै वासस्तस्य चन्द्रमाः स्तुतिरियमित्यादि [४।५।४]।

भागानां भवति। यथाकल्पनया बिम्बस्य भागत्रयम् १-२-३ तत्रैकस्मिन्स्थाने उदयस्तदानीमेव परत्रास्तमयस्तदानीमुदयाभिप्रायेण १ भागः प्रथमं दृश्यते ततो २ भागस्तृतीय ३ भागः पश्चात्। तदानीमन्यत्रास्तमये ३-२-१ एवं क्रमेण कल्पना। तथा सति स्वराः १-२-३॥ ३-२-१ एवमुच्चोच्चभावेन व्यवतिष्ठेरन्। ते चेमे षड्जर्षभगान्धारमध्यमपञ्चमधैवतनिषाद-रूपाः सप्तारोहक्रमेणाङ्काक्षरैः प्रदर्श्यन्ते १-२-३-४-५-६-७ सारेगमपधनीत्येवम्। अत्र मध्यमस्य मध्यमस्थानत्वेन १-२-३ षड्जऋषभगान्धाररूपः पूर्वो राशि र्भवति ततोऽ-स्तावसरीयः ३-२-१ विपरीतयोगी राशिर्भवति, स च पञ्चमधैवतनिषादरूपः। एतस्यैत-न्मूलकमेव मध्यात्परवर्तित्वमेव। अत एवात्रत्यप्रथमस्य पञ्चमशब्देन व्यवहार इति। द्वितीयेऽर्द्धेऽत्र प्रथमार्द्धविपरीतक्रमता छन्दःसूत्रे सूच्यते। तत्र स्वराः क्रमेणोच्यन्ते सूत्रेण यथा स्वराः षड्जऋषभगान्धारमध्यमपञ्चमधैवतनिषादाः। इति सूत्रेणोक्तानां तेषां क्रमेण वर्णा उच्यन्ते परेण सूत्रेण यथा सितसारङ्गपिशङ्गकृष्णनीललोहितगौरा वर्णा इति। तत्र प्रथमसप्तमयोः सितगौरवर्णत्वम्। द्वितीयषष्ठयोः सारङ्गलोहितवर्णत्वं तृतीयपञ्चमयोः पिशङ्गनीलवर्णत्वं सममुच्यते मध्यमस्याव्यक्तत्वाभिप्रायेण कृष्णवर्णत्वमुच्यते। तस्य सङ्गतिः। किञ्चादित्यस्योदयास्तमयौ न तद्गत्या किन्तु पृथिव्या गत्या। वार्षिकगत्या सुमेरुकुमेर्वोरस्तोदयौ। तत्र नीचैर्गत्योपरिष्टादुदयप्रतीतिः सा। बिम्बीयभागेषु $\frac{1}{3}$ एवं क्रमेणो-च्चैर्गत्या च तस्यास्तमयप्रतीतिः सा विपरीत $\frac{3}{1}$ क्रमेणेति भवति। एवं दैनन्दिन-गत्यामपीति स्वरेषु प्रथमत्र्यवयवराशिवैपरीत्यं द्वितीयत्र्यवयवराशाविति पूर्वमुक्तम्। अत एव द्वितीयराशिप्रथमस्य पञ्चमेतिनामेत्युक्तम्। किञ्च नारदीयशिक्षायां स्वराणां ब्राह्मणादिरूपत्वमुच्यते, तस्य सङ्गतिः। तथाहि तत्रोच्यते—पञ्चमो मध्यमः षड्ज इत्येते ब्राह्मणाः स्मृताः। ऋषभो धैवतश्चापीत्येतौ तु क्षत्रियावुभौ॥ गान्धारश्च निषादश्च वैश्यावर्द्धेन वा स्मृतौ। शूद्रत्वं विद्धि चार्द्धेन पतितत्वान्न संशयः॥ इति। तत्र षड्जस्य मध्यमस्य च मुखसम्बन्धित्वेन ब्राह्मण्येऽपि पञ्चमस्यानियतत्वे मुखसम्बन्धानियमेन ब्राह्मण्यं वर्ण्यमानं विरुध्येत। अस्मदीयरीत्या तस्य द्वितीयार्द्धे मुखस्थानस्थितिनियमेन नियत-ब्राह्मण्यनियमः सङ्गच्छते। एवं धैवतऋषभयोर्मध्यवर्तित्वाद् ग्रामयोगाच्च प्रकृष्टतेजो-युक्तत्वेन क्षत्रियत्वम्। क्षत्रशब्देन तेज उच्यते। ततो मत्वर्थकः प्रत्ययः क्षत्रिये। मत्वर्थस्य भूमयोगे प्रवृत्त्या क्षत्रियशब्देन प्रकृष्टतेजोयुक्तत्वमुच्यते। तादृशत्वम् ऋषभ-धैवतयोरिति तयोः क्षत्रियत्ववर्णनं संगच्छते। गान्धारनिषादयोस्तु पूर्णबिम्बे प्रवेशाद्वैश्यत्वं ततश्च पूर्णस्य गतिमत्त्वरूपपतितत्वाच्छूद्रत्वमिति। सम्पूर्ण उदये गतिमत्त्वावभासना-त्पतितत्वं गतियुक्तत्वम्। अस्तमये च पूर्णस्यादर्शनेन पतितत्वादस्तमितत्वम् अर्थाद् भूमिगतत्वमिति पतितत्वं तत्त्वाच्छूद्रत्वमिति वर्णनं सङ्गच्छते। बिम्बस्य पूर्णत्वदशायामेव शूद्र-

त्वमिति पुरुषसूक्त पद्भ्यां शूद्रो अजायतेत्यनेनोच्यत इति स्थलान्तरे निर्णीतम्। किञ्च नारदीयशिक्षायां पञ्चममध्यमयोरव्यवधानमुच्यते तच्चोक्तद्वितीयराशौ पञ्चमस्य प्राथम्यं बोधयति। तथाहि पूर्वोक्तद्वितीयराशे देवतास्वस्तावसरीयतयाऽस्तप्रारम्भपर्यन्तं पूर्णं बिम्बं दृष्टमासीत्, अस्तप्रारम्भे च पूर्णबिम्बादर्शनेन तस्य न शोभनत्वमिति क्रुष्टशब्देन व्यवहारः, तत्र क्रुष्टत्वं निन्द्यत्वमाक्रोशविषयत्वमसम्पूर्णत्वात्। किञ्च मध्यममारभ्य प्रथमराशेः कुमेरावुदयावसरीयत्वेन पञ्चमस्य देवेष्वस्तावसरीयताऽस्तप्रारम्भपर्यन्तं पूर्णबिम्बसत्तया पूर्णबिम्बे मस्तकशिरआदित्वेन सर्वत्र वेदे कल्पनस्य प्रसिद्धत्वेन तस्य क्रुष्टस्य पञ्चमस्य मूर्द्धनि स्थानमुक्तम्। क्रमेण मध्यमादीनां स्थानानि नारदीयशिक्षायामुच्यन्ते। तदुक्तं तत्र—क्रुष्टस्य मूर्द्धनि स्थानं ललाटे प्रथमस्य तु। इति। तत्र स्थानकथने क्रुष्टस्य स्थानमारभ्य कथनं मध्यमस्य नियतमध्यमत्वसंसूचनाय क्रुष्टेनाव्यवधानबोधनाय। एवं सति क्रुष्टस्य मूर्द्धस्थानत्वे प्रथमस्य मूर्द्धाधोवर्तिललाटस्थानत्वकथनं तेन तस्य मूर्द्धासम्बन्धिता मध्यवर्तिता च प्रतीयते। भ्रुवोर्मध्यस्थानता द्वितीयस्य। भ्रुवोश्चोभयपार्श्वसम्बन्धितया काये तन्मध्यग्रहणेनोभयोर्योगः प्रतीयते। उभयोश्च विभिन्नदिक्कयोर्योगो बिम्बस्थले। अत एवोषसोर्बिम्बपार्श्ववर्तिन्योः शकटकल्पना। शकटे हि यथेषाद्वयं युगस्थाने मीलितं पश्चाद्वियुक्तं भवत्येवमुषसि शकटारोपेणोषोयोगो बिम्बे मध्यवर्तिनीति स्पष्टम्। भ्रुवोर्मध्य इति वर्णनेन स एव भावो व्यज्यते। तेन स्थलान्तरेऽर्थात्कुमेरौ बिम्बस्योदयतः प्रथमे भाग उक्तमध्यमानुरोधेन द्वितीयता। तदेव गृहीत्वा नारदीयशिक्षायामुक्तम्—"भ्रुवोर्मध्ये द्वितीयस्ये"ति। अत एव नारदशिक्षायां क्रुष्टस्य देवोपजीवकत्वमुच्यते। "क्रुष्टेन देवा जीवन्ती"ति। क्रुष्टस्य मूर्धस्थानत्ववचने मूर्द्धस्थानत्वं देवेषूक्तरीत्या सुमेरावन्तिमदृश्यमूर्धरूपसम्पूर्णबिम्बत्वं प्रतीयते। देवेषु तावत्पर्यन्तत्वाद्दिनस्य तेषां तेन जीवनवचनम्। किञ्च देवानां तत आजिधावनप्रवृत्त्याऽदित्यरूपस्योक्तस्य सुमेरावन्तिमदृश्यसम्पूर्णबिम्बस्य तत्रावधित्वेनापेक्षणेन तदव्यवहितक्रुष्टस्य देवोपजीवकत्ववचनम्। अत एव परस्ताद् भूमिसम्बन्धस्य प्रतीत्या मध्यमेन परवर्तिना मानवोपजीवनवचनम्। तदुक्तं "मध्यमस्य प्रथमत्वेन अहात् प्रथमेन तु मानवा" इति। अत एव भ्रुवोर्मध्ये द्वितीयस्य स्थानमुक्तं तत्र—"भ्रुवोर्मध्ये द्वितीयस्ये"ति। उक्तरीत्या द्वितीयस्य कुमेरौ प्रथमेन दैनन्दिनवृत्तेन सम्बन्धेन तत्र तस्योदयतो बिम्बस्य प्रथमभागरूपत्वम्। अत एव तत्रत्योषसस्सम्बन्धेन रश्मिभिः सम्बन्धः। रश्मीनां गोशब्देन वचनस्य प्रसिद्धत्वेनैतस्य द्वितीयस्य गवां रश्मीनां धारकत्वेन गान्धार-शब्देन वचनमिति सङ्गच्छत इति पूर्वमुक्तमेव। तत्रैकस्थलीयबिम्बस्यापरस्मिन् स्थले दर्शनेनोदयस्थले पूर्वदेशतस्तस्य बिम्बस्य परदेशे दानं होमो यागो वेति वर्णनस्य स्थलान्तरे विस्तरेण प्रतिपादनात्। (क्रमशः)

# सायणभाष्यविमर्शः

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

## दीदिविम्

ऋग्वेदे श्रूयते—

राजन्तमध्वराणां गोपामृतस्य दीदिविम्।
वर्धमानं स्वे दमे ॥ [ १।१।८ ]

इति। अत्र ऋतस्य दीदिविमिति व्याचक्षाणेन भाष्यकृतोक्तम्—ऋतस्य सत्यस्याव-श्यम्भाविनः कर्मफलस्य पौनःपुन्येन भृशं वा द्योतकम्। आहुत्याधारमग्निं दृष्ट्वा शास्त्रप्रसिद्धं कर्मफलं स्मर्यते।···दीदिवि-शब्दस्याभ्यस्तानामादिरित्याद्युदात्तत्वम्। इति। तैत्तिरीयसंहिताभाष्ये [ १।५।६।२ ] दृश्यते—ऋतस्य दीदिविम् सत्येन द्योतमानम् इति।

उव्वटेन [३।२३] व्याख्यातम्—ऋतस्य दीदिविं सत्यस्य दीपयितारम्। अग्निसमीपे व्रतं गृहीत्वा सत्यं वदति तदभिप्रायमेतत्। इति। महीधरेणेदमेव प्रपञ्चितम्—ऋतस्य सत्यवचनलक्षणस्य व्रतस्य दीदिविं दीपयितारम्। अग्निसमीपे व्रतं गृहीत्वा सत्यं वदतीत्याशयः।...दिवेः क्विप्रत्ययो बाहुलकात्। लिड्वद्भावाद् द्वित्वम्। तुजादीनां दीर्घोऽभ्यासस्य [ ६।१।७ ] इत्यभ्यासदीर्घः। देवयतीति दीदिविः।

माधवभाष्ये दृश्यते—दीदिविं ज्वलन्तं भृशं वर्धमानम्। अत्र भृशमित्यस्य वर्द्धमानमित्यनेनान्वयः प्रतीयते।

वेङ्कटमाधवेन व्याख्यातं दीप्तमिति।

स्कन्दस्वामिना व्याख्यातं दीदिविम् अत्यर्थं दीप्तमिति।

यद्यपि दीदिविशब्दसाधनार्थमुणादिसूत्रं वर्तते—दिवो द्वे दीर्घश्चाभ्यासस्य [ ४।५७ ] इति, तेन च क्विन् विहितः, नित्त्वाच्चाद्युदात्तत्वमनायासेनैव सिध्यति, तथापि टीका-कृद्भिस्तत्सूत्रं नाश्रितं भट्टोजिभट्टं वर्जयित्वा। तेन व्याख्यातम्—ऋतस्य अवश्यम्भाविनः कर्मफलस्य दीदिविं द्योतकम्। क्विन् इत्यनुवर्तमाने दिवो द्वे दीर्घश्चाभ्यासस्येति दीव्यतेः क्विन्प्रत्ययः, वलि लोपः। इति।

अष्टाध्याय्यां वर्तते सूत्रम्—आदृगमहनजनः कि-किनौ लिट् च [३।२।१७१] इति। तत्र च दृश्यते भाष्ये—

सासहिवावहिचाचलिपापतीनां निपातनम् ॥ वा० ४ ॥

सासहि-वावहि-चाचलि-पापतीनां निपातनं कर्तव्यम्। वृषा सहमानं सासहिः। वावहिः चाचलिः पापतिः।

अपर आह—

सहिवहिचालिपतिभ्यो यङन्तेभ्यः किकिनौ वक्तव्यौ। तान्येवोदाहरणानि। इति।

तत्र सासहि-शब्दस्यान्तोदात्तत्वं वावहि-शब्दस्य चाद्युदात्तत्वं वेदे प्रसिद्धम्। सूत्रवार्त्तिककृतो विज्ञायते यत्र पदमाद्युदात्तं तत्र किन्प्रत्ययः, यत्र पुनरन्तोदात्तं तत्र किप्रत्यय इति।

ऋग्वेदीयसायणभाष्ये प्रथमतो दृश्यते—पौनःपुन्येन भृशं वा द्योतकमिति। अत्राचार्येण स्कन्दस्वामिनः पदाङ्कोऽनुस्रियते। उभयोर्मतेन सासहीत्यादिषु पाठाभावेऽपि बाहुलकाद् यङन्तात् किन्प्रत्यय इति प्रतिभाति। परं तथा चेन्नित्त्वेनैवाद्युदात्तत्वनिर्वाहे अभ्यस्तानामादिरिति सूत्रस्य शरणीकरणं व्यर्थमेव। अथ प्रत्ययोऽत्र किः, अत एवाभ्यस्तानामादिरित्यपेक्ष्यते इत्युच्यते तथापि न निस्तारः, किकिनावित्यत्र किन्नित्यंशस्यानर्थक्यापत्तेः।

इदानीम् अभ्यस्तानामादिरिति [ ६।१।१८९ ] सूत्रस्यात्र प्रवृत्तिर्भवति वा न वेति विचार्यते। सूत्रस्यार्थः काशिकायाम्—अभ्यस्तानामजादावनिटि लसार्वधातुके परत आदिरुदात्तो भवति। इति। लिट् चेत्यनेन लिडादेशस्य तिङ आर्धधातुकत्वेऽपि छन्दस्युभयथेति सार्वधातुकत्वमपि सम्भवति। यदा यङन्तात् किप्रत्ययस्तदा लसार्वधातुकत्वं न सम्भवति। परं लसार्वधातुकत्वस्य सम्भवेऽपि कौ वानुन्मत्तो नित्त्वादाद्युदात्तत्वं परित्यज्याभ्यस्तानामादिनाद्युदात्तत्वं प्रतिजानीत। अत एव सायणभाष्ये दृश्यमानो दीदिविशब्दस्याभ्यस्तानामादिरित्याद्युदात्त इत्यंशः केनचन पण्डितम्मन्येन प्रक्षिप्त इति प्रतीयते। किञ्च प्रकृतिप्रत्ययनिर्देशमन्तरेणाभ्यस्तानामादिरिति वचनं नोपपद्यते।

सासहिशब्दः प्रथमत ऋग्वेदगत-१।१०।३-यसूक्ते श्रूयते। तत्र भाष्यकृता विलिखितम्—षह अभिभवे। उत्सर्गश्छन्दसीति वचनादादृगमहन इति किप्रत्ययः। लिड्वद्भावाद् द्विर्वचनम्। इति। १।१०२।१, १।१०२।९, १।१७१।६, २।२२।३, २।२३।११ इति मन्त्रेष्वपि यङन्तस्योल्लेखो न विहितः। ३।१६।४ मन्त्रे उक्तम्—षह मर्षण इत्यस्माद् यङन्तात् सहिवहिचलिपतिभ्यो यङन्तेभ्यः किकिनाविति किः। प्रत्ययस्वर इति।

गोपा ऋतस्य दीदिहि [ ऋ० १०।११८।७ ] गोपा ऋतस्य दीदिहि स्वे दमे [ ३।१०।२ ] इति वाक्यद्वयाद् विस्पष्टमेव प्रतीयते दीप्तिकर्मणो दीधातोः क्विन्प्रत्ययेनौणादिकेन दीदिविशब्दो निष्पन्न इति।

एवमेव गृधातोर्जागृविवृ धातोश्च दाधृविः। उभावप्याद्य् दात्तौ। दीदिवः-दीदिवान्-दीदिवांसा-दीदिवांसं-प्रभृतीन्यपि पदान्यस्मादेव धातोर्निष्पन्नानि।

---

## भारतरत्नसंग्रहः

(वनपर्व, ३१२।४०)

यक्ष उवाच।

इमे ते भ्रातरो राजन् वार्यमाणा मयाऽसकृत्।
बलात्तोयं जिहीर्षन्तस्ततो वै सूदिता मया॥
न पेयमुदकं राजन्प्राणानिह परीप्सता॥४१॥
पार्थ मा साहसं कार्षीर्मम पूर्वपरिग्रहः।
प्रश्नानुक्त्वा तु कौन्तेय ततः पिब हरस्व च॥४२॥

युधिष्ठिर उवाच।

न चाहं कामये यक्ष तव पूर्वपरिग्रहम्।
कामं नैतत्प्रशंसन्ति सन्तो हि पुरुषाः सदा॥४३॥
यदात्मना स्वमात्मानं प्रशंसेत् पुरुषर्षभ।
यथाप्रज्ञं तु ते प्रश्नान् प्रतिवक्ष्यामि पृच्छ माम्॥४४॥

यक्ष उवाच।

किं स्विदादित्यमुन्नयति के च तस्याभितश्चराः।
कश्चैनमस्तं नयति कस्मिंश्च प्रतितिष्ठति॥४५॥

युधिष्ठिर उवाच।

ब्रह्मादित्यमुन्नयति देवास्तस्याभितश्चराः।
धर्मश्चास्तं नयति च सत्ये च प्रतितिष्ठति॥

नीलकण्ठटीका। किंस्विदादित्यमुन्नयतीत्यादिप्रश्नोत्तरमालिका आत्मनस्तत्त्वं निर्णेतुमारब्धा। तरति शोकमात्मविदिति [छा० ७।१।३] तज्ज्ञानस्य फलवत्त्वश्रवणात् तत्सिद्धये चोच्चावचं साधनजातमस्यां निरूप्यते, तां व्याख्यास्यामः। आदित्यम्। आदत्ते

शब्दादीन् श्रोत्रादिभिरित्यादितो जीवस्तं गौरोऽहमन्धोऽहं दुःख्यहं कर्ताहम् इत्याद्यनुभवाद् देहाद्यात्मतया भासमानं वादिभिश्चानेकधा विकल्प्यमानं ब्रह्म वेद उन्नयति देहादिभ्यः पृथक्करोति। श्रुतिरेवात्मतत्त्वनिर्णये मानमित्यर्थः। तथाच श्रुतिः—नावेदविन्मनुते तं बृहन्तम् [ शाट्या ४ ] इति। ननु सर्वेऽपि वेदादात्मानं जानन्ति? नेत्याह—देवा इति। देवाः शमादयस्तत्त्याभितश्चराः सहायाः। अस्तं खस्थानमपहतपाप्मत्वादिगुणाष्टकविशिष्टं तत्कारणभूतहार्दाकाशं प्रत्येनं धमः साक्षात् परम्परया वा कर्मोपासनरूपो नयति प्रापयति। स एवमुक्तविधस्वरूपं सगुणब्रह्मभावं प्राप्य तद्बाधेन सत्ये सर्वबाधावधिभूते शुद्धचिन्मात्रे प्रतिष्ठितो भवति। तथाच श्रुतिः—स एवं विद्वानस्माच्छरीरभेदादूर्ध्वमुत्क्रम्यामुष्मिन् स्वर्गे लोके सर्वान् कामानाप्त्वामृतः समभवत् [ ऐ० ४।६ ] इति। प्रथमं शास्त्रजं ज्ञानं ततः शमादिसम्पन्नस्य योगबलाद् देहाद्यध्यासनिवृत्तिः ततः स्वर्गाख्यसगुणब्रह्मदर्शनं ततः केवलीभाव इति श्रुतेरर्थः। ( क्रमशः )

---

## राशिवडेकडोऽप्पाशास्त्रिविद्यावाचस्पतिः

[ मञ्जूषायाः स्वाधीनताङ्कतः (Special Republic Number, January 1950) पुनर्मुद्रिता। ]

अद्यास्मिन् सुदिवसे स्वत एवास्माकं मनोरथगुरोरप्पाशास्त्रिणो नाम स्मरणसरणिमनुप्राप्नोति। अनेन विपश्चिद्वर्येणाङ्गलवङ्गहिन्दीमराठीप्रभृतिषु विविधासु भाषासु व्युत्पन्नेन न केवलं संस्कृतचन्द्रिका नाम मासिकपत्रिका भाषासौष्ठवेन श्रेष्ठपाश्चात्त्यपत्रिकाणां समकक्षतां नीता, अपि तु भारतवर्षस्य स्वाधीनतासम्पादनाय भाषणानि च प्रदत्तानि, लेखनी च व्यापारिता। अस्माभिर्मञ्जूषायां महात्मनोऽस्यामृतमयानि पत्राणि प्रकाशयिष्यन्ते। येषां सविधेऽप्पाशास्त्रिणां पत्राणि वर्तन्ते तैः कृपया मूलपत्राणि वा तेषां प्रतिलिपयो वा प्रेष्यन्ताम्। मूलपत्राणि मुद्रणानन्तरमवश्यमेव प्रतिप्रेषयिष्यन्तेऽस्माभिः। वाचकमहाभागेषु कैश्चिदप्पाशास्त्रिणां जीवनचरितं विलिख्य प्रेष्यते चेदस्माभिः सानन्दं मुद्रयिष्यते। यस्य च लेखः शोभनतमः स्यात् तस्मै दश रूपकाः प्रदीयेरन्। अप्पाशास्त्रिणाम् Arabian Nights इत्यस्य संस्कृतभाषामयोऽनुवादः केषाञ्चित् सविधे स्याच्चेत्कृपयास्मभ्यं मुद्रणार्थं प्रदीयतामिति नः प्रार्थना। सूनृतवादिनीपत्रिकामपि वयं मूल्यप्रदानेन क्रेतुमिच्छामः। यैर्विक्रेतुमिष्यते ते मूल्यादिकं सूचयन्तु।

---

श्रीमत्पण्डितराजवंशावतंस-श्रीमत्कान्ताचार्यसूरीणां छात्रस्य वासिष्ठस्य श्रीमत्सदाशिवबुधेन्द्रतनुजन्मनो गीर्वाणवाणीपरिचरणबद्धादरस्य नैकविधगद्यपद्यप्रबन्धसंग्रथनसमासादितपृथुयशसो बुद्धचरित-वेणीसंहार-मालविकाग्निमित्र-सावित्र्युपाख्यानादिव्याख्यानान्यारचितवतः संस्कृतचन्द्रिकासूनृतवादिनो-सम्पादकस्य वङ्गीयविबुधमण्डली - समर्पितविद्यावाचस्पतिबिरुदस्य-वाराणसेयश्रीमद्भारतधर्ममहामण्डलोपहृत-विद्यालङ्कारमहोपदेशकोपाधे राशिवडेकरोपाह्वस्य

# श्रीमदप्पाशास्त्रिणः पत्ररत्नमञ्जूषा

( १ )

श्रीशिवः शरणम् सांगलीतः

७।१८३५

सप्रणयं गाढमालिङ्ग्य मूर्ध्नि च समाघ्राय कुशलं वार्तयति। वत्स* ! प्रेरितपूर्वं मया श्रीमते पत्रमेकं सह मदीयया प्रतिकृत्या। कच्चिदधिगतं तदेतच्छ्रीमता ? अयि हृदयाह्लादन ! प्रकाशितं वङ्गीयसंस्कृतोपाधिपरीक्षाणां फलमिति †'वङ्गवासि'तोऽवगम्यते। तदुत्कण्ठते चेतः श्रीमतः परीक्षाफलमवगत्यामन्दमानन्दमनुभवितुं व्याकरणतीर्थ इत्युपाधिना च संयुज्यमानं श्रीमतो मङ्गलमभिधानमालोकयितुम्। तच्छीतलीकरोतु प्रियवत्सस्तथाविधप्रवृत्तिपीयूषासेकेन समुत्कण्ठाकुलमन्तरङ्गमस्य जनस्य। कुत्रेदानीमायुष्मानुपेन्द्रचन्द्रः‡ ? अत्र मे मङ्गलम्। श्रीमतस्तु सर्वाङ्गीणं तदनवरतं विज्ञाय वाञ्छाम्यन्तरात्मानमानन्दयितुम्। प्रणिपात्यतामव्याजभक्तिभरावनम्रोऽयं जनः प्राणस्य मे

---

* स्वर्गतस्य पण्डितप्रकाण्डस्य सर्वतन्त्रस्वतन्त्रस्य संस्कृतचन्द्रिकासमाख्यसंस्कृतमासपत्रिकायाः प्रतिष्ठापयितुः प्रथमसम्पादकस्य च श्रीमतो जयचन्द्रसिद्धान्तभूषणमहोदयस्य भ्रातुष्पुत्रः श्रीमान् गोपीचन्द्रसांख्यतीर्थः सम्बोध्यते।

† तदानीन्तनं वङ्गभाषामयं कलिकातातः प्रकाश्यमानं श्रेष्ठं साप्ताहिकं वृत्तान्तपत्रम्।

‡ सम्बोध्यस्य श्रीमतो गोपीचन्द्रसांख्यतीर्थ-महोदयस्य कनीयान् भ्राता।

प्रियबन्धोः* श्रीमत्याश्च जननीनिर्विशेषायाः प्रजावतीदेव्याश्चरणसरोज-द्वितये। किमधिकमिति शिवम्।

भवदेकप्रेमा—श्रीअप्पा शर्मा।†

[ बहोः कालात्पूर्वं श्रीमतो गोपीचन्द्रसांख्यतीर्थमहोदयस्य सकाशात् सम्प्राप्तमिदं पत्रमन्यानि च पत्राणि। परमरमणीयानीमानि पूर्वं मञ्जूषायां प्रकाशितान्यपि नवीनवाचकमहाभागानामाग्रहेण पुनरपि प्रकाश्यन्ते। पुरातना अपि पाठका एतेषामनुवाचनेन तृप्तिमधिगच्छेयुः। क्षणे क्षणे यन्नवतामुपैति तदेव रूपं रमणीतायाः। इति मञ्जूषा-सम्पादकः। ]

---

कवीन्द्र-रवीन्द्रस्य

## कर्णकुन्ती-संवादः

[ श्रीफटिकलालदास-कृततात्पर्यानुवादः ]

कर्णः

भागीरथीपुण्यतटे निषण्णो
रतोऽस्मि सन्ध्यातपनार्चनायाम्।
कर्णोऽस्मि सूताधिरथस्य पुत्रो,
माता च राधा भुवि विश्रुता मे।
त्वमङ्ग मातः कथयाशु कासि।

कुन्ती

वत्सासुकालप्रथमप्रभाते
सम्बन्धमाधाद् भुवनेन या ते
साहं समेताद्य विहाय लज्जां
तुभ्यं प्रदातुं निजसंस्तवं मे।

---

* नोयाखाल्यभिजनस्य वाराणसीवास्तव्यस्य श्रीमतो जयचन्द्रसिद्धान्तभूषण-महोदयस्य।

† Manjuṣā, March 1950.

कर्णः

तुषारभद्रैरिव सूर्यरश्मि-
रुस्त्रावलिस्त्वन्नतनेत्रजन्मा
चित्तं ममार्द्रीकुरुतेऽद्य देवि ।
समागतः प्राक्तनजन्मगर्भात्
कण्ठस्वरस्ते श्रुतिरन्ध्रयातो
वहत्यपूर्वामिव काञ्चिदार्तिम् ।
जानामि नार्यामधुनापि यस्मात्
पृच्छामि तेन प्रकृतावगत्यै—
त्वयैव सार्धं मम जन्म केन
रहस्यजालेन वदास्ति बद्धम् ।

कुन्ती

आधत्स्व धैर्यं क्षणमेव वत्स,
दिवाकरोऽस्ताचलमेतु पूर्वं,
सन्ध्यान्धकारो घनतां च यातु ।
मां विद्धि कुन्तीं नरवीरवर्य ।

कर्णः

त्वं तर्हि मातासि किमर्जुनस्य ?

कुन्ती

तस्यैव सत्यं जननी बताहम् ।
तदेव मत्वा प्रति मां तु जातु
विद्वेषभावं हृदि मास्म पोषीः ।
अद्यापि पुर्यां गजसाह्वयाया-
मात्तायुधानां कुरुबालकानां
विद्यापरोक्षादिवसं स्मरामि ।
रङ्गस्थलं त्वं तरुणः कुमार-
स्तदा प्रविष्टो मृदुमन्दगत्या

प्राचीदिगन्ते स्फुटकोटितारे
नवोदितार्कारुणभातिकल्पः ।
तिरस्करिण्या पिहितान्तराले
यावत्य आसङ्गँलना निषण्णाः
का तासु वै सा हतवाग् वराकी
याऽतृप्त-पुत्रप्रणयाशनाया-
सहस्रनागोविषजर्जरोत्का
विस्फारिताभ्यामिव लोचनाभ्या-
माशीःस्वरूपाणि ददावजस्रं
त्वत्सर्वगात्रे शतचुम्बितानि ?—
साप्येव माता ननु फाल्गुनस्य ।
यदा कृपस्त्वां पितृनाम पृष्ट्वा
समाचचक्षे, "नरपालवंशे
न सम्भवो यस्य रणाधिकारो
न विद्यते तस्य सहार्जुनेन,"
तदा नतास्यात् तव शोणगण्डात्
ससार वाणी न हि काचिदेव ।
स एव लज्जारुणिमास्यलग्न
उल्केव यस्या हृदयं ददाह
का दुर्भगा सा ?—जननी हि जिष्णोः ।
धन्यः स दुर्योधनपुत्रको मे
दत्त्वाङ्गराज्यं प्रसभं हि येन
कृतोऽभिषेकस्तव तन्मुहूर्ते ।
स्नेहाश्रुराशिर्मम नेत्रयुग्मात्
त्वच्छीर्षमुद्दिश्य गलन् घटानां
सहाम्भसा वै मिलितो बभूव ।

तस्मिन् हि काले कृतमार्गरन्ध्रो
हर्षेण सूताधिरथोऽथ रङ्गं
समाकुलान्तःकरणो विवेश ।
तद्राजसज्जासमलङ्कृतस्त्वं
समस्तकौतूहलिदर्शकानां
चक्षुःसमक्षं द्रुतमभ्युपेत्य
सद्योऽभिषेकाम्बुनिषिक्तमस्तं
पूज्ये च तस्याङ्घ्रितले विलोठ्य
पितेति सम्बोध्य नतिं व्यधत्थाः ।
विलोक्य तत् पाण्डवबान्धवास्त्वां
समुच्चहासैरसकृन्निनिन्दुः ।
तदातिगर्वाद् रमणी हि यैका
त्वां वीरनाम्ना तु सभाजयन्ती
नतेऽददादाशिषमुत्तमाङ्गे—
साप्येव नारी जननी हि जिष्णोः ।

कर्णः

आर्येऽभिवन्दे चरणौ तवाहम् ।
त्वं राजमाता—कथमभ्युपेता
सहायशून्या समराङ्गनेऽत्र ?
नेताधुनाहं कुरुवाहिनीना-
मतो हि शत्रुस्तव पुत्रकाणाम् ।

कुन्ती

भिक्षास्ति काचिद्—विफला न कार्या ।

( क्रमशः )

———

# सिंह-मूषिक-कथा

[ श्रीफटिकलाल-दासः ]

१

निदाघसूर्यस्य शिरोगतस्य मयूखमाला ज्वलदग्निकल्पा ।
विष्वक् पतन्ती जगतोऽस्य पृष्ठे चकार सत्त्वानिव दावदग्धान् ॥

२

कश्चिन्मृगेन्द्रो रवितापतप्तः सुच्छायशीते वनपादपाधः ।
वितत्य कायं रजसां निकाये सुष्वाप घोरं गतचेतनः सन् ॥

३

तत्राखुयूथं सविधस्थगर्तात् क्रीडार्थमेकं सहसोपतस्थे ।
प्रसुप्तसिंहान्न भयं कुतोऽपि मत्वेति चिक्रीड सुखेन सर्वम् ॥

४

तत्राखुरेकोऽत्यविमृश्यकारी सिंहस्य देहोपरि धावमानः ।
यथेच्छखेलाकुतुकेन मत्तस्तस्यैव नासाविवरं प्रविष्टः ॥

५

भृशं क्षुवन् स प्रसभं प्रबुद्धो निद्राविमर्दात्कुपितो बभूव ।
पलायमानं च कृतागसं तं समीक्ष्य मूषं धृतवाञ्जवेन ॥

६

सिंहस्तमाखुं भृशवेपमानं प्रोवाच कोपस्फुरिताधरोष्ठः ।
"निहन्मि ते रेऽधम पापवृत्त स्पर्धां क्षमिष्ये न च तावकीनाम् ॥"

७

कृताञ्जलिस्तं निजगाद मूषः, "क्षुद्रस्य दोषं सदयं क्षमस्व ।
न प्राज्यभोज्यं न च कापि कीर्तिः स्यातां निहन्तुस्तव मादृशानाम् ॥

८

त्वमेव राजन्नधिपः प्रजानां तासां हि रक्षा तव राजधर्मः ।
त्वं लोकपालो जनको जनानां प्रजाश्च सर्वास्तव पुत्रकन्याः ॥

९

अतो हि भिक्षा तव पादपद्मे कुरुष्व नो मामिह नामशेषम् ।
मोघा हि याच्ञा वरमार्यवर्ये न जातु नीचे प्रतिलब्धकामा ॥

१०

पश्चापरं देव न विस्मरामि तवोपकारं मम जीवकाले ।
ऋणं तवैतद् हृदये निखाय काले प्रपन्ने परिशोधयामि ॥"

११

श्रुत्वा वचस्तद् विहसन् स सिंहो विनीतमाखुं सदयं मुमोच ।
न भीतमार्तं न च याचितारं कदापि हिंसन्ति महानुभावाः ॥

१२

दिनेषु गच्छत्सु तमेव सिंहं ग्रहीतुकामो मृगयुश्च कश्चित् ।
वनैकदेशे दिवसावसाने ततान पाशं दृढरज्जुबद्धम् ॥

१३

स केशरी तेन पथाभिगच्छन् पाशेन बद्धः सहसा बभूव ।
विचेष्टमानोऽपि शशाक न स्वं स्तोकं विमोक्तुं दृढबन्धनात्सः ॥

१४

एवं स्वयत्ने विफले प्रजाते चकार शब्दं स हि घोरमुच्चैः ।
तद्गर्जितेन प्रसभं वनं तद् भृशं चकम्पे महता भयेन ॥

१५

निशम्य दूराद्धरिगर्जनं तत् स मूषिको द्राग् बुबुधे स्वरं तम् ।
स्मरन् प्रतिज्ञां द्रुतमात्मनश्च दधाव तत्र स्वजनैः समेतः ॥

१६

ते तीक्ष्णदन्तैर्घनबद्धरज्जूश्छेत्तुं मिलित्वा निरता बभूवुः ।
स्वल्पेन कालेन तपस्विसिंहः पाशाद्विमुक्तो निजगाद मूषान् ॥

१७

"के नाम भद्राः! सदया भवन्तः कृतान्तपाशात्कृतदेहमोक्षाः ।
कुर्वन्ति ये मां पुनरेव सद्यः कृतज्ञतापाशनिबद्धचित्तम् ॥"

१८

स मूषिकः सिंहविलब्धमुक्तिः कृताञ्जलिः सन् समुवाच, "देव ।
किं विस्मृतोऽहं भवताद्य पापो य एकदाभूत्तव कोपहेतुः ॥

१९

शीतं द्रुमाणां तलमाश्रितस्य कृतो मया ते सुखसुप्तिभङ्गः ।
निहन्तुकामोऽपि मयानुनीतो भवानमुञ्चत्सदयं तदा माम् ॥

२०

ऋणं दयाया भवतस्तदेव स्मृत्वास्य शोधो विहितो मयाद्य ।
परस्परासुप्रतिरक्षणेन जातो विधातुर्विधिरेष जेता ॥

२१

'दया दयायाः सहगामिनी स्याद् हिंसा तु हिंसां प्रतिहन्ति नित्यम् ।
क्षुद्रोऽलमुच्चैःशिरसां विधातुं महोपकारं सदयं गृहीतः' ॥"

---

# त्रिशङ्कु-पिपीलिका-कथा

[ श्रीफटिकलाल-दासः ]

प्रालेयपातैः शिशिरे प्रवृत्ते भाण्डारमन्नै रहितं विलोक्य ।
कश्चित् त्रिशङ्कुस्तृणसद्मवासी पिपीलिकाया भवनं जगाम ॥१॥

विधातुमन्नादिकखाद्यजातं नवोदितार्कातपतापतप्तम् ।
तस्यैव दक्षा प्रतिवेशिनी सा ररक्ष सर्वं बहिरेव गर्तात् ॥२॥

तस्मिन् क्षणे वै शलभः स तत्र समागतस्तां समुवाच दीनम् ।
"भद्रेऽत्र पश्यानुजमेकमार्तं समागतं त्वत्प्रतिहारदेशम् ॥३॥

गृहेऽस्ति लक्ष्मीर्नियताचला ते स्वयं च साक्षात्कमलासना त्वम् ।
नैकोऽपि शस्यस्य कणोऽस्ति मे तु वर्ते दिनद्वन्द्वमुपोषितोऽहम् ॥४॥

भाण्डारगेहात्तव शस्यपूर्णादृणं हि किञ्चित्सदयं प्रयच्छ ।
ऋतौ वसन्ते पुनरागते तत् सवृद्धि मूलं परिशोधयामि ॥५॥"

पिपीलिकासीत्कृपणस्वभावा दोषः स एको भुवि विद्यतेऽस्याः ।
चक्षुर्द्वयं स्वं परिघूर्णयन्ती सान्दोल्य हस्तौ प्रतिवाचमूचे ॥६॥

"ग्रीष्मस्य दीर्घे दिवसे कृतं किं न सञ्चयः किं विहितस्तदानीम् ।
करालकालस्य कृते हि लोकाः कुर्वन्ति पूर्वं प्रतिकारमस्य ॥७॥"

स प्रत्यवादीत्प्रसभं पतङ्गो, "गीतेन याता दिवसास्तदा मे ।"
प्रोवाच सा तं, "ननु तर्हि नृत्यैः सकुक्षिवाद्यैर्गमयाधुना तान् ॥८॥"

---

# नाथ-सम्प्रदायः

[ श्रीगजानन-लक्ष्मण रेगे, बि-ए ]

( पूर्वतोऽनुवर्तते )

श्रीगोरक्षनाथेन सम्प्रदायसंस्करणार्थं सूचितेषूपायेषु स्त्रीसान्निध्यनिषेधः सर्वप्राथम्यं भेजे। स्त्रीसान्निध्यं वीर्यरक्षणाय कल्पत इति यत्प्रतिपादितं पूर्वाचार्यैस्तदसत्। मन्वादिस्मृतिकारैः स्त्रीसान्निध्यं बहुवारं निषिद्धमिति सुप्रसिद्धम्। उक्तं च।

अनृतं साहसं माया मूर्खत्वं चातिलोभता।
अशौचत्वं निर्दयत्वं स्त्रीणां दोषाः स्वभावजाः॥ इति॥

कामोपभोगेन कामः शाम्यति कामवासनानिवृत्तिर्वा भवतीत्यसमञ्जसम्। स्त्रीसान्निध्याभाव एव वीर्यरक्षणहेतुरिति युक्तियुक्तम्। तन्त्रमार्गविहितं मदिरापानमपि त्याज्यम्। उक्तं च।

चित्ते भ्रान्ति र्जायते मद्यपानां भ्रान्ते चित्ते पापचर्याभ्युपैति।
पापं कृत्वा दुर्गतिं यान्ति मूढास्तस्मान्मद्यं नैव पेयं न पेयम्॥ अपि च।
मद्यपस्य कुतः सत्यं दया मांसाशिनः कुतः।
कामिनश्च कुतो विद्या निर्धनस्य कुतः क्रियाः॥ इति।

मदिरापानेन चित्तैकाग्रता सिध्यतीति कथं युक्तं भवेत्। भवत्येव चेद् वाम एष पन्थाः। एतादृशी चित्तैकाग्रता न योगोपयोगिनी साधकायत्ता शुभयुक्ता वा, चित्तस्य परिभ्रान्तत्वात्। मांसभक्षणमपि साधकानां निषिद्धमिति तैर्निर्धारितम्। ये मद्यमांसमैथुनं वर्जयन्ति तेषामेव नाथपथानुयायित्वं सम्भवतीति सिद्धान्तितं नाथाचार्यैः। गोरक्षनाथेन स्वयं शरीररचनाभ्यसने बहु प्रयतितम्। गोरक्षनाथस्य मतप्रणाली प्रबुद्धानां विमर्शकानां च सिद्धानां संमताऽभवदचिरेणैव। विश्वस्मिन् भारतदेशे सञ्चरन् गोरक्षनाथः स्वमतानुसारिणो भूयसः शिष्यगणान् सम्पाद्यान्तरा मठस्थापनां करोति स्म। एतस्मिन् सम्प्रदाये गोरक्षनाथः चर्पटीनाथः ज्वालेन्द्रनाथः कारिणनाथः गहिनीनाथः रेवणनाथः नागनाथः भर्तृनाथः गोपीचन्द इत्येते नव नाथनाम्ना प्रसिद्धा नाथाचार्याः सञ्जाताः।

नाथसम्प्रदायस्तत्त्वतो योगदर्शनाधिष्ठितः, व्यवहारतश्च हठयोगोपाङ्गभूतः। सम्प्रदायिनश्चेश्वरवादिनः। योगदर्शनं सांख्यशास्त्राधिष्ठितम्। उभयोरपि कैवल्यं ध्येयम्। भिन्नानि तु सम्पादनसाधनानि। "ज्ञानेन कैवल्यमि"ति सांख्याः। चित्तवृत्तिनिरोधेन कैवल्यमित्यपरे। तत्त्वाऽभ्यासान्नास्मि न मे नाहमित्यपरिशेषमविपर्ययाद्विशुद्धं केवलमुत्पद्यते ज्ञानम् [ सां० का० ६४। ]। पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा वा [ यो० द० ४।३४ ]। लिङ्गशरीरात्मकानां यः स्वकारणे-

ऽत्यन्तविलयः स एव कैवल्यमिति योगाचार्याः। सांख्यशास्त्र कैवल्यसम्पादनार्थं यानि तत्त्वानि व्याख्यातानि तानि कार्यान्वितानि कर्तुमुपयोक्तव्यानि साधनानि साधकेभ्य उपदिशति योगदर्शनम्। समाहितचित्तस्योत्तमाधिकारिणोऽभ्यासवैराग्याभ्यामेव क्रिया-योगनिरपेक्षा योगनिष्पत्तिः। किन्तु शास्त्रोपदिष्टभूमिकाजयः कथं केन क्रमेण च साधनीयश्चित्तस्य समाहितत्वं कथं सम्पादनीयं व्युत्थितचित्तो बहिर्मुखोऽपि यथा योगयुक्तः स्यात्तानुपायान् निर्दिशति योगशास्त्रम्।

योगशास्त्राभ्यासे साधनीभूतं शरीरं, न तस्योपेक्षा कर्तव्या। शरीरमाद्यं खलु धर्मसाधनमिति न्यायेन शारीरशास्त्राभ्यासे शरीरस्य च निरामयत्वे साधकैर्जागरूकै-र्भाव्यमिति तेषां मतम्। ब्रह्मचर्यपालने तेषां महानध्यवसायः। मदिरासेवनं मांस-भक्षणं स्त्रीसङ्गश्च योगसिद्धेः प्रत्यूहाः सर्वथा परिवर्जनीयाः। वीर्यरक्षणं साधकस्याद्यं कर्तव्यम्। वीर्यं चरितस्य प्राणभूतं यच्च परब्रह्मणि प्राणहेतुः, यस्माच्च मेधा प्रभवति। उच्यते—

अस्थ्नां प्रभूतं बलमर्पयन्तं रक्तप्रवाहं प्रविकासयन्तम्।
मुखे प्रतापारुणतां दधानं न कः सुधी ब्रह्मचर्यं सुरक्षेत्॥

अध्यात्मतत्त्वालोकः ३।४

अपि च

सर्वस्य नाशः प्रबलं च वैरं बन्धश्च देहान्तभयाकुलत्वम्।
परत्र घोरस्थलसङ्गमश्चान्यस्त्रीप्रसङ्गस्य फलान्यमूनि ॥ ३।५०

गोरक्षस्य मते मोक्षो नाम कैवल्यम्। तस्यावाप्तये साधनान्वेषणं सर्वात्मना कर्तव्यम्। उक्तं च गोरक्षनाथेन—

ज्ञानका छोटा। काछका लोहड़ा।
इंद्रीका लड़बड़ा। जिह्वाको फूहड़ा।
गोरख कहै ते। पारतिख चूहड़ा।

गोरक्षनाथमते शरीरं नात्मनो रिपुरात्ममन्दिरं तत्। तस्यानामयत्वादेव योगप्राप्तिः सुकरा भवति। स्त्रीसम्बन्धिविचारः स्त्रीसान्निध्यं च मनोदौर्बल्यं जनयति। वीर्य-स्खलनमुत्पादयति। बिन्दुरक्षार्थं साधकैर्नैकविधोपायैः प्रयतितव्यम्। वसिष्ठ-वामदेव-शुकादयो मुनय ऊर्ध्वरेतस्का आसन्निति सुप्रसिद्धम्। ऊर्ध्वरेतस्त्वं वज्रोलीमुद्रया जालन्धर-बन्धसहितया युक्त्या च साध्यम्। ब्रह्मचर्यं नाम बिन्दुविचारो बिन्दुनिरोधो वा। सति सुषुम्णायां वायुप्रवेशे चित्तबिन्दू स्थिरौ भवतः। ब्रह्मचर्याच्चित्तजयः। विषये-ऽस्मिन्नुक्तं गोरक्षनाथेन—

भगि मुखि बिन्दु अगिनि मुखि पारा।
जो राखै सो गुरु हमारा।
वजरी करंता अमरी राखे। अमरी करंता वाई।
भोग करंता जे ब्यँद राखे। ते गोरखका भाई॥

यमनियमा अपि महत्त्वपूर्णं स्थानं लभेते नाथमार्गे।

## शरीरसम्पत्

अध्यात्ममार्गीयाः प्रायः स्वदेहस्य सर्वदोषास्पदत्वं वर्णयन्ति। नाथसम्प्रदायिनस्तु शरीरमात्ममन्दिरं मन्यन्त इति प्रागेव कथितम्। यावज्जीवं शरीरात्मनोऽविनाभावसम्बन्धः। शरीररक्षणे सर्वात्मना प्रयत्ना आस्थेयाः। शरीरपुष्ट्यर्थं नाथमार्गीयै र्बहूनि नूत्नानि योगासनान्यायोजितानि विचारितानि चानुभवसिद्धानि। शरीरसंयमात्कालजयः शरीरस्य सदुपयोगेनायुर्वृद्धिश्च। विपरीते त्वायुर्हानि र्बन्धो जीवात्मनोश्च। जीवेश्वरयोरैक्यं सम्पादयितुकामा माहेश्वरा देहायत्तं मोक्षं मन्वानाः शरीरसामर्थ्यसाधनत्वेन रसेश्वरमुपयुञ्जते। रसेश्वरो नाम पारदः संसारस्य पारं नयतीति कृत्वा। पारदाभ्रकौ गौरीहरोत्थितौ शरीरस्य नित्यत्वं जनयत इति रसेश्वरदर्शनानुयायिनो माहेश्वरा मन्यन्ते।

नाथसम्प्रदायिका माहेश्वरमत उदासीना इव दृश्यन्ते, नहि तेषां माहेश्वरमतानुकूल्यं प्रतीयते। उक्तं च गोरक्षेण—"जटी बुटी अमर जो करै तो वैद धन्वन्तर काहे मरै।" रसेश्वरस्य स्थाने नाथाचार्यैः कायशुद्ध्यर्थं नेति-बस्ति-धौति-नौली इत्येता नवीना युक्तयः प्रचालिताः। पद्मासनसिद्धासनादीन्यासनानि सूचितानि। "षिण षिण जोगी करै शरीरविचार।" महता प्रयत्नेन तैः शारीरशास्त्रं विमर्शनपूर्वकमधीत्य शरीरान्तर्गतनाडीवायुकुण्डलिनीषट्चक्रसुषुम्णाब्रह्मरन्ध्रसहस्रारकमलादीनामङ्गानां कार्यस्वरूपहेतुफलादीनां महत्त्व विशदीकृतमभ्यासकानां पुरतः। ब्रह्मरन्ध्रात्स्रवतोऽमृतबिन्दोरपि महत्त्वं प्रतिपादितम्। खेचरीमुद्रासाहाय्येन जिह्वायां पातितोऽमृतबिन्दुरयं कालकरालं मृत्युमपि जयति। खेचरीमुद्रा नाम परावर्त्तिताया रसनाया उपोपजिह्वं मस्तकच्छिद्रे प्रवेशनम्। अन्यथाऽमृतमिदं व्यर्थतां नीतं भवत्यधोवर्तिसूर्यतत्त्वनिपातेन। नाथमार्गाचारेऽमृतबिन्दोः सम्यक्त्वेनोपयोगोऽनितरसाधारणमहत्त्वं भजते। अमृतबिन्दुपानममृतत्वाय प्रकल्पत इति तैः सिद्धान्तितम्। यत्सत्यं न तेषाममृतत्वाभिलाषः किन्तु कालवञ्चन्याख्यया विद्यया शरीरवर्तिनवद्वाराण्यावृत्य ब्रह्मरन्ध्रनामके दशमद्वारे प्राणवायुं प्रवेश्य समाध्यवस्थायामुपर्युक्तामृतबिन्दुसेवनेन यः परमानन्दानुभव उपलभ्यते स वाङ्मनसयोरपि पन्थानमतीत इति तैर्विभाव्यते।

अमृतबिन्दुपानेन वृद्धो बालको भवति सिद्धा अमृतत्वं प्राप्नुवन्ति। चतुरशीतिः प्रसिद्धसिद्धा अद्य यावत्पृथ्वीतले सञ्चरन्तीति तेषां निरतिशया श्रद्धा। अत एव प्राणावसाने नाथमार्गीयाः स्वशरीरं न भस्मसात्कुर्वन्ति किन्तु समाधिमास्थाय गुहायामवतिष्ठन्ते। निवृत्तिनाथ-ज्ञानदेव-सोपानदेवानां महाराष्ट्रप्रदेशे समाधिस्थानान्युपलभ्यन्ते। सोहिरोबा-नाथश्चैत्रशुद्धनवम्यामदृश्योऽभवदिति श्रूयते। नाथानाममरत्वेन गोरक्षनाथो वृद्धो बाल इति कुतूहलेन निर्दिष्टो भक्तगणेषु ज्ञातचर आसीत्। गहिनीनाथस्य चिरजीवित्वेनैव तस्य सोहिरोबानाथस्योपरि शक्योऽनुग्रहोऽष्टादशशतकेऽपि। ऐतिह्यं चैतत्। (क्रमशः)

---

# आजरसम्

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

आजरसं हास्मै वाजिनं नापच्छिद्यते य एवं वेद। [ ऐतरेयब्राह्मणम् ३।२ ]

आजरसं हास्मिन्नजस्रो दीदाय य एवं वेद। [ ऐ० ब्रा० ५।२ ]

आजरसं ह चक्षुष्मान् भवति। [ ऐ० ब्रा० १२।८ ]

नैनं पुरायुषः प्राणो जहाति। आजरसं जीवति। सर्वमायुरेति, न पुनर्म्रियते। [ ऐ० ब्रा० ४०।२ ]

आजरसं ह वा अस्मिल्लँोके चक्षुष्मान् भवति। [ शतपथब्राह्मणम् १।६।३।४१ ]

आजरसं ब्रह्माद्यमन्नमत्ति दीप्यमानः। [ ताण्ड्यमहाब्राह्मणम् १०।४।५ ] इत्यादिष्वाजरसं-पदं श्रूयते। षड्गुरुशिष्येणैकत्रोक्तम्—जराया जरस्भावश्छान्दस इति, अपरत्र चोक्तम्—जरसिति जरापर्याय इति। वस्तुतस्तु "अव्ययीभावे शरत्प्रभृतिभ्यः" [ ५।४।१०७ ] इत्यत्र "जराया जरस् च" इति गणसूत्रं दृश्यते। तेन जराया जरसादेशः समासान्तश्च टच्।

अत्रेदमवधेयम्। ऋग्वेदे जरस् एवोपलभ्यते, केवलं द्विरुषामितिवज् जरामिति पदं श्रूयते। अस्मादेव जराम्पदात् कालक्रमेणाकारान्तस्य जराशब्दस्योत्पत्तिः सञ्जातेति भाषातत्त्वविदः। अथर्ववेद एकस्मिन्नेव मन्त्र रूपद्वयमुपलभ्यते—दिष्टं नो अत्र जरसे नि नेषज्जरा मृत्यवे परि णो ददातु [ १२।३।५५ ] इति।

ऋग्वेदे पचाद्यज्विशिष्ट आजरसशब्द उपलभ्यते। तथाहि दशममण्डले श्रूयते—आजरसाय समनक्त्वर्यमा [ १०।८५।४३ ] इति। "अर्यमा च जरापर्यन्तजीवनाय समनक्तु [ नः ] सङ्गमयतु" इति सायणः।

---

## सर्वत्र समदर्शनम्

The Sunday Statesman पत्रे (October 9, 1960) ४-पृष्ठ तृतीयस्तम्भे दृष्टम्—I *shall asked* the fire to burn you इति। भविष्यदतीतयोरीदृशं मेलनं परब्रह्मसाक्षात्कारमेव सूचयति। यावानर्थ उदपाने सर्वतः संप्लुतोदके तावान् सर्वेषु व्याकरणेषु ब्राह्मणस्य विजानतः॥

---

## को नाम पाकाभिमुखस्य जन्तोर्द्वाराणि दैवस्य पिधातुमीष्टे

अगष्टमासस्य त्रिंशत्तमे दिवसे मङ्गलवासरे मङ्गलस्य चन्द्रे पूर्णा दृष्टिरासीत्। ततश्च कलिकातायां चौरङ्गीरोड-मेयोरोडसङ्गमम् उत्तरेण भारतीयदुर्लभद्रव्यागारस्य च पुरस्तात् चत्वारिंशद्धस्तप्रमाणः सुविशालो नन्दिकपादपो मडात्कारेण भूमौ पञ्चानां पुरुषाणामुपरि पतितः। तेष्वेको मृत्युमुखमभिप्रपन्नः, अपरो भृशमाहतः, तदितरेषां त्रयाणामाघातोऽकिञ्चित्कर आसीत्।

तस्य पादपस्याधस्तात् कश्चन सामुद्रिकविद्याविशारदो हस्तरेखादिसन्दर्शनेन शुभाशुभं वदति। तस्मिन् दिने यावदसावुपकरणानि सज्जयितुमीहते तावद् वृक्षस्थविहगेन तस्य शिरसि पुरीषोत्सर्गः कृतः। स च तमपशकुनं मन्यमानो ये तावत् पञ्च पुरुषा भाग्यनिर्णयार्थं तत्र समवेतास्तेषां निर्बन्धमुल्लङ्घ्य प्रस्थितः। ते पुनर्निपतता वृक्षेण निष्पिष्टाः। अवितथं किलोच्यते वङ्गीयैः—कृष्णे रक्षति को मारयेत् कृष्णे मारयति को रक्षेत् ( राखे कृष्ण मारे के मारे कृष्ण राखे के ? ) इति।

---

## मनोर्माहात्म्यम्

कश्चनाध्यापकः पृच्छति। मनुसंहितायाष्टीकायाः प्रारम्भे कुल्लूकभट्टेनोक्तम्—तथा च छान्दोग्यब्राह्मणे श्रूयते—मनुर्वै यत्किञ्चिदवदत् तद् भेषजं भेषजताया इति। कुत्रत्यमिदं वचनम्। इति।

उत्तरम्। ताण्ड्यमहाब्राह्मणे [ २३।१६।७ ] दृश्यते—"मनुर्वै यत्किञ्चावदत् तद् भेषजं भेषजतायै" इति। व्याख्यातं चेदं सायणाचार्येण—रागद्वेषादिशोकाद्यपनोदकस्य मनोः परानुग्रहार्थं प्रवृत्तेः स यत् किञ्चापि धर्मविषयं वाक्यमवदत् तद् भेषजं हितम्।... भेषजतायै सकलदोषस्यौषधाय भवति।

---

# वर्णलोपः

[ श्रीआशुतोषशर्मा विश्वासो वेदशास्त्री ]

वर्णलोपस्योदाहरणानि बाहुल्येनोपलभ्यन्ते भारतीयभाषासु। तथाहि 'हीनावस्था'-शब्दो वकारेण हीनो दृश्यते 'हेनस्ता' इति रूपमापन्नो वङ्गभाषायाम्। यथा—'तोमाय हेनस्ता करबो' अर्थात् तव दुर्दशां विधास्यामीति। 'पश्चात्ताप'-पदञ्च 'पस्तान' इति रूपमापद्यते बहूनामक्षराणां लोपेन वङ्ग-हिन्दी-पारस्यभाषासु। वङ्गीयम् 'आदिख्येता' पदम् 'अदक्षिणता'-पदान्निर्वक्तव्यं यद्यपि कालवशान्महानर्थभेदः सञ्जातः*। 'निमन्त्रण'-पदं 'नेउता' रूपेण विपरिणतं, 'साव्यस्त'-पदं 'सव्यवस्थ'पदात् समुत्पन्नम्। बृहस्पति> बेस्पति> बिष्युत् इति वर्णलोपानां प्रकृष्टं निदर्शनम्। वेदेष्वपि प्राचुर्येण वर्णलोपो दृश्यते—तथा च यास्कः 'अथापि वर्णलोपस्तृच इति'। अवत (अवट) इति अवतत-शब्दस्यापभ्रंशः प्रतीयते। अवश्याय> ओश्> उश्, धवल> धला, नवनीत> ननी; त्रिस्रोतस्> तिस्ता> तितास इति पूर्ववङ्ग-प्रसिद्धानि पदानि। मन्ये पञ्चाम्बुदेशीयं 'वितस्ता' इति नदीनामापि 'विस्रोतस्' पदादुद्भूतम्। अत्रस्त> आस्ते (हिन्दी—आहिस्ता), व्यवहार> व्याभार इत्यादिकं सर्वं तथैव व्याख्येयमिति दिक्।

---

# नियतेः परिहासः

नन्दन (London)-नगरान्तर्गत-मेफेयार-(Mayfair)-विभागेऽन्याय्यतया सन्निविष्टानां धूमशकटानामपसारणेऽधिकृतैः प्रथमत एव कश्चन पश्चिमनन्दन-प्राड्विवाको धृतः। स खल्वीदृशानामपराधानां विचारे व्यापृतः प्रतिदिनमेव शतशो धूमशकटचालकान् अर्थं दण्डयति। नियतेः परिहासेनासावात्मानमेवापराधिकोटावपश्यत्!
(Sunday Statesman, September 25, 1960)

---

# छात्रहितैषिणी

मुद्रिते कथासरित्सागरे (तरङ्ग १०१, श्लोक २-३) दृश्यते—

ततस्ते तदहः प्राप्ताश्चत्वारो निजमन्त्रिणः।
तेनापृच्छ्यन्त विश्लेषकालवृत्तान्तमादरात्।
अथ स व्याघ्रसेनाख्यस्तेषां मध्यात्तमब्रवीत्।
देवास्मदीयवृत्तान्तं श्रूयतां वर्णयाम्यहम्॥ इति।

---

* आधिक्यतेति प्रामादिकं पदमेवास्य मूलमिति शब्दतत्त्वविदः।

अत्र प्रथमश्लोके अप्रधाने दुहादीनामिति वचनेनाप्रधानकर्मण एवोक्तत्वात् प्रधान-कर्मणो विश्लेषकालवृत्तान्तमित्यत्र कर्मणि द्वितीया यथावदेवावतिष्ठते। द्वितीयश्लोके श्रूयतामिति कर्मणि लकारेणोक्तत्वात् अस्मदीयवृत्तान्तशब्दे प्रथमा विभक्तिरेव युज्यते। वर्णयाम्यहमिति तु पृथग्वाक्यम्, अत एव श्रूयतामिति पदमुल्लङ्घ्य वर्णयामीत्यस्य कर्मत्वेन द्वितीयाविभक्तिः समर्थयितुं न शक्यते। अत एव—

देवास्मदीयो वृत्तान्तः श्रूयतां वर्णयाम्यहम्।

इति पठनीयमिति प्रतिभाति। अत्र पूर्वश्लोकगतद्वितीयाया आकर्षणं प्रबलं जातम्। ३५म श्लोके तु शुद्धः पाठः—

ततो मुनिकुमारेण तेन तेभ्यो निवेदितः।
तदाश्रमप्रवेशान्तो वृत्तान्तोऽस्मन्निबन्धनः॥ इति।

वृत्तान्तः श्रूयतामित्यत्र कदाचित्कविना गर्भिततादोषं स्वीकृत्य वाक्यार्थः श्रूयतां-पदस्य कर्मत्वेनोपन्यस्तः।

## निषसाद

ऋग्वेदे वरुणसूक्ते दृश्यते—नि षसाद धृतव्रतो वरुणः पस्त्यास्वा [१।२५।१०] इति। अत्र नि षसादेति पदं लौकिकमार्षं वेति विचार्यते। सदिरप्रतेः [८।३।६६] इत्यनेन ससाद-पदस्य षत्वे निषसादेति रूपं भवति। अत्र यद्यपि स्थादिष्वभ्यासेन चाभ्यास-स्येति धातुसकारस्यापि षत्वं प्राप्नोति तथापि "सदेः परस्य लिटि" इति प्रतिषेधात् परस्य सकारस्य मूर्धन्यादेशो न भवति। निषसाद। विषसाद। परिषसाद।

## सम्यक्

किं वा वसन्तः साम्प्रतं करोति ?
समग्रं दिवसमर्थराशिसमन्वितो धूमशकटेन परिभ्रमति।
कथमेतत् ? अपि नाम तेन दायो लब्धः ?
नहि नहि। स खलु धूमशकटपरिचालकः (bus-conductor)।

## अपह्नुतिः

या पाणिग्रहलालिता सुसरला तन्वी सुवंशोद्भवा
गौरी स्पर्शसुखावहा गुणवती नित्यं मनोहारिणी।
सा केनापि हृता तया विरहितो गन्तुं न शक्तोऽस्म्यहं
रे भिक्षो तव कामिनी नहि नहि प्राणप्रिया यष्टिका॥

## अधिकन्तु न दोषाय !

Statesman पत्रे (September 27, 1960) सप्तमपृष्ठे स्तम्भद्वितयं व्याप्य बृहद्भिरक्षरैर्मुद्रितम् Without giving hardly any previous notice to the public इत्यादि। Without giving any notice + hardly giving any notice = without giving hardly any notice. बहवो भारतीयाच्छात्राः प्रत्यासन्नायां परीक्षायां hardly परिश्रमं कुर्वन्ति !

---

## प्रमादमुक्ताहारः

कलौ वेदान्तिनः सर्वे फाल्गुने बालका इव ।

"शारदीया दैनिकवसुमती १३६७" पत्रिकायाः २२५पृष्ठे दृष्टम्—"मैत्रेयीर मुख दिये एइ सार्वजनीन प्रार्थना प्रकाश पेयेछिल ये, असतो मा सद्गमय तमसो मा ज्योतिर्गमय, मृत्योर्माऽमृतं गमय आविरावीर्म एधि रुद्र यत्ते दक्षिणं मुखं तेन मां पाहि नित्यम्" इति। ईदृशी प्रमादपरम्परा सुदुर्लभा वसुमत्यामपि। तथाहि प्रथमतस्तावन्मैत्रेय्या कदापि वचनमिदं नोच्चारितम्। किञ्चोद्धृतं वचनं परमार्थतो वचनपञ्चकात्मकम्। तत्र प्रथमं वाक्यत्रयं बृहदारण्यकोपनिषदि श्रूयते। तत्र हि प्रथमाध्यायस्य तृतीयब्राह्मण आम्नायते—स वै खलु प्रस्तोता साम प्रस्तौति। स यत्र प्रस्तुयात् तदेतानि [यजमानः] जपेत् असतो मा सद् गमय, तमसो मा ज्योतिर्गमय, मृत्योर्माऽमृतं गमयेति। इति। आविरावी र्म एधीति वाक्यमैतरेयारण्यके [२।३।१] श्रूयते। रुद्र यत्ते दक्षिणं मुखं तेन मां पाहि नित्यम् इति वचनं श्वेताश्वतरोपनिषद्युपलभ्यते [श्वे० ४।२१]। "अलाबूवेणुतन्त्रीणां संयोगे मधुरध्वनिः।"

---

## भाषायां सङ्करः

"रविवासरीय आनन्दबाजारपत्रिका"याम् (५इ भाद्र, १३६७) क-पृष्ठे दृष्टम्—"भिन्नरुचिर्हि लोकाः" इति। (घ) पृष्ठे दृष्टम्—"तेजोद्दीपक क्षमा" इति।

भिन्नरुचिर्हि लोकः+भिन्नरुचयो हि लोकाः = भिन्नरुचिर्हि लोकाः।

तेजोदीपक+तेज उद्दीपक = तेजोद्दीपक।

तेजोव्यञ्जक+तेजउद्दीपक=तेजोद्दीपक।

"रविवारेर युगान्तर"पत्रे (१९शे भाद्र, १३६७) प्रथमपृष्ठे चतुःस्तम्भव्यापिनि लेखे दृष्टम्—आपातः दृष्टे इति। भाषाया विशुद्धार्थमन्तरान्तरा विसर्जनीयसंयोग आवश्यक एव !

---

# समाप्तिः

## [ कवीन्द्र-रवीन्द्रनाथठाकुरस्य ]

### प्रथमः परिच्छेदः

बी० ए० परीक्षां समुत्तीर्यापूर्वकृष्णः कलिकाततः स्वं ग्रामं प्रत्यावर्तते। सरिदसौ क्षीणा, प्रावृषोऽवसाने प्रायशः शुष्यति। साम्प्रतं श्रावणस्यावसाने सलिलराशिः स्फीततामापद्यमानो युगपद् ग्रामस्य वृतिं वंशस्तम्बस्याधोदेशं च चुम्बन् प्रतिष्ठते।

सुचिरं घनवर्षणानन्तरमद्य मेघमुक्ते विहायस्यातपः प्रकाशते।

तरण्याम् आसीनस्यापूर्वकृष्णस्य मानसाभ्यन्तरस्य चित्रं चेद् द्रष्टुं प्राभविष्याम तर्ह्य-द्रक्ष्याम तत्रापि तरुणस्यास्य मानसस्रोतस्विनी प्रत्यग्रप्रावृषि सलिलसम्भारपरिपूरिततटा सूर्यालोकेन ज्वलज्ज्वलायते वायुभरेण च छलच्छलायते इति।

नौका यथास्थानं तीर्थे संलग्नमभवत्। नदीतटाद् अपूर्वभवनस्य पक्वेष्टकचितं छदिः पादपान्तरालैः प्रत्यक्षीभवति। अपूर्वस्यागमनवृत्तान्तो गृहवर्तिनः कस्यापि विदितो नासीत्, ततश्च घट्टे कोऽपि न समागतः। यावच्च नाविको भस्त्राग्रहणायोद्यच्छते तावत्तं निवार्यापूर्वः स्वयमेव भस्त्रामादायानन्दनिर्भरो झटित्यवातरत्।

अवतीर्णमात्र एव तटस्य पिच्छिलत्वादपूर्वो भस्त्रासमेतः कर्दमे निपतितः। निपतित एव तस्मिन् कुतश्चित् सुमधुरोदग्रकण्ठतस्तरला हास्यलहरी समुच्छ्वसिता समीपवर्तिनोऽ-श्वत्थवृक्षगतान् विहङ्गमान् सचकितान् व्यदधात्।

अपूर्वस्तावदतिमात्रम् अपत्रपाभिभूतः सत्वरमात्मसंवरणं विधाय समन्ततो दृष्टिं न्यपातयत्, अपश्यच्च तीरे वणिजस्तरीतोऽवतारिता नवा इष्टका राशीकृता वर्तन्ते तासां चोपरिष्टात् सन्निषण्णा काचन बालिका हास्यवेगेन क्षणेनैव शतधा विदीर्णा भविष्यतीति प्रतीयते।

इयं तावदपूर्वस्य नवीनप्रतिवेशिनीतनया मृन्मयीत्यपूर्वस्तां प्रत्यभिजानात्। दूरे विपुलायास्तटिन्यास्तटे गृहा आसामवर्तन्त। तत्र च नद्याः कूलकषणेन ग्रामेऽस्मिन् समागत्य निवसन्तीनामासां द्वित्राणि वत्सराणि व्यतीतानि।

अस्याश्च बालिकाया अख्यातिवार्ता बहुशः श्रूयन्ते। पुमांसो ग्रामवासिनः स्नेह-भरेणैनाम् उन्मादिनीति वदन्ति, परं ग्रामस्था गृहिण्योऽस्या उच्छृङ्खलप्रकृतितो निरन्तरं भीताश्चिन्तिताः शङ्कान्विताश्च वर्तन्ते। ग्रामस्य सर्वैर्बालकैः सहेयं संक्रीडते, समवयःसु बालिकास्वस्या निःसीमावज्ञा विलसति। शिशुराज्ये बालिकेयं क्षुद्रवर्गीनिग्रह इत्यपि वक्तुं शक्यत इव।

एषा किल पितुः स्नेहलालिता कन्यका, अत एवास्या एतावद्दुर्दान्तः प्रतापः। विषयमिमधिकृत्य मृन्मय्या माता सखीनां समीपे सदैव पतिमभियुङ्क्ते स्म, तथापि पितास्यां स्निह्यति, पिता चेत् सन्निधाववर्तिष्यत् मृन्मय्या अश्रुबिन्दुस्तदीये हृदये नितरां व्यथाकरोऽभविष्यदिति मत्वैव प्रवासिनं पतिं स्मारं स्मारं मृन्मय्या माता कथमपि कन्यकां रोदयितुं न प्रबभूव।

आकृत्या मृन्मयी श्यामवर्णा, क्षुद्राः कुञ्चितकुन्तला आपृष्ठं प्रलम्बन्ते स्म। सर्वथा बालकस्येव तस्या वदनभावः। विशालयो र्भ्रमरकृष्णयोर्नयनयोर्नास्ति लज्जा नास्ति भयं नाप्यस्ति हावभावलीलालेशोऽपि। शरीरं तावद् दीर्घं परिस्फुटं स्वस्थं सबलं च परं तस्या वयोऽधिकमल्पं वेति प्रश्नः कस्यापि मानसे न समुदेति, यदि समुदैष्यत् तर्ह्ययाप्यनूढासौ वर्तते इत्यसौ तदीयमातापितरौ परिवदेत्। कालक्रमेण यस्मिन् दिने वैदेशिकस्य ग्रामस्वामिनो नौका घट्टे संलग्ना भवति तस्मिन् दिने ग्रामवासिनः सम्भ्रमेण शशाननुकुर्वन्ति, तीर्थस्थानां स्त्रीणां वदनरङ्गभूमौ सपद्यानासाग्रं यवनिकापतनं भवति, मृन्मयी पुनः कुतश्चिन्नग्नं शिशुमेकं वक्षसि निधाय कुञ्चितान् कुन्तलान् पृष्ठे दोलायमानान् विधाय घट्ट उपतिष्ठते। यत्र व्याधो नास्ति विपन्नास्ति तत्रत्यो हरिणशिशुरिव निर्भीक-कुतूहलेन तत्र दण्डायमाना प्रेक्षमाणावतिष्ठते, अन्ततश्च स्वगणस्य बालकसङ्गिसमूहस्य सविधे प्रत्यावृत्य नवागतस्यास्य प्राणिन आचारव्यवहारावधिकृत्य सविस्तरं बहुलमुपवर्णयति।

अस्माकमपूर्व इतः पूर्वम् अवकाशोपलक्ष्येण स्वग्रामं समागत्य बन्धनविहीनां बालिका-मिमां त्रिचतुरवारानपश्यत्, अवसरकाले तथा चानवसरकालेऽपीमामधिकृत्य चिन्तितवान्। इह खलु बहूनि मुखानि नयनगोचराणि भवन्ति, परमेकं मुखं स्वत एव सपदि मानसाभ्यन्तरं प्रविशति। न खलु तत्र केवलं सौन्दर्यमेव कारणम्, अपरोऽपि कोऽपि गुणो वर्तते। मन्ये स्वच्छतैव स गुणः। भूयस्सु मुखेषु न प्रभवति मनुजप्रकृतिरात्मानं परिस्फुटतया प्रकटयितुम्। यस्मिन् खलु मुखे सोऽन्तरगुहावासी रहस्यमयः पुरुषो निरन्तरायं निष्क्रम्य स्वात्मानं प्रकाशयति तत् किल मुखं सहस्रेष्वपि नयनयोर्निपतति, निमेषमात्रेण च मनसि मुद्रितं भवति। अस्या खलु बालिकाया वदने नयने च काचन दुर्दान्ताऽवशङ्गमा च नारीप्रकृतिरुन्मुक्तो वेगवानरण्यमृग इव सदैव सन्दर्शयत्यात्मानं संक्रीडते च, अत एवेदं जीवनचञ्चलं वदनकं सकृद् दृष्टमसुकरं विस्मर्तुम्।

न खल्वेतद् वाचकेभ्यः पृथगाख्यातुमावश्यकं यन्मृन्मय्याः कौतुकहास्यध्वनिः परम-मधुरोऽपि दुर्भाग्यस्यापूर्वस्य कथञ्चित् क्लेशदायको बभूव। स झटित्येव नाविकस्य हस्ते भस्त्रां समर्प्यारक्तमुखेन द्रुतवेगेन च गृहाभिमुखं प्रचलितुं प्रचक्रमे।

आयोजनमिदं परमरमणीयमेवाभवत्। नद्यास्तटम्, वृक्षस्यच्छाया, विहङ्गमस्य सङ्गीतकम्, प्राभातिक आतपः, विंशतिवर्षं वयः। अवश्यमिष्टकास्तूपो न तथा समुल्लेखयोग्यः, तथापि यो जनस्तत्रोपविष्ट आसीत् स खलु शुष्ककठिनासनोपर्यपि काञ्चन मनोरमां श्रियं व्यतनोत्। हा हन्तेदृशस्य दृश्यस्य मध्ये प्रथमपदविक्षेपमात्रेणैव यत् समग्रं कवित्वं प्रहसने विपरिणमते किमतः परमदृष्टस्य नैष्ठुर्यं स्यात्!

---

## द्वितीयः परिच्छेदः

तस्मादिष्टकाशिखरात् प्रवहन्तं हास्यध्वनिं श्रावं श्रावं कर्दमविलिप्तभस्त्रोत्तरीयोऽपूर्वः पादपच्छायेन सदनं समुपस्थितः।

अकस्मात् पुत्रस्यागमनेन तदीया स्थविरा जननी पुलकिता सञ्जाता। तदात्व एव क्षीरदधिरोहितमत्स्यानामन्वेषणायान्तिके दूरे च जना अधावन्, प्रतिवेशिष्वप्यान्दोलनं प्रादुर्बभूव।

विनिर्वृत्ते भोजने जनन्यपूर्वस्य विवाहप्रसङ्गमुत्थापितवती। तदर्थमपूर्वः सन्नद्ध इवावर्तत। अयं हि प्रस्तावः पूर्वमपि विहित आसीत्, परं पुत्रो नव्यतन्त्रस्यानुशासनं शिरसि कुर्वन् न खलु बी ए परीक्षामनुत्तीर्य विवाहं करिष्यामीति निर्बन्धपरोऽभवत्। तदर्थमेव जनन्येतावन्तं कालं प्रतीक्षते स्म। अत इदानीं कस्यापिच्छलस्योद्भावनं वृथैव। अपूर्वेणोक्तम्, कन्या तावदन्विष्यताम्। ततः स्थिरीकरणीयम्। इति। मात्रोक्तम्, "पात्री" तावद् दृष्टा। अलं तद्गतया चिन्तयेति। अपूर्वस्तां चिन्तां स्वयमेव चिन्तयितुं सज्जो भूत्वावदत्, न खलु कन्यकामदृष्ट्वोद्वोढुं प्रभविष्यामीति। माताचिन्तयत्, न खल्वेवंविधमतिक्रान्तलोकाचारं वाक्यं कदापि श्रुतमिति। तथापि सा सम्मतैवाभवत्।

निशायां तस्यां यावदपूर्वः प्रदीपं निर्वाप्य शय्यायां न्यषीदत् तावद् वर्षानिशीथस्य सर्वेषां शब्दानां समग्राया निस्तब्धतायाश्चापरप्रान्ततो विजने विनिद्रे शयने समुच्छ्वसितो मधुरकण्ठविनिःसृतो हास्यध्वनिस्तस्य कर्णपथमासाद्य निरन्तरमनुरणति स्म। तदीयं मानसं केवलमेतदुक्त्वा स्वात्मानं पीडयति स्म, प्रातस्तनमिदं पदस्खलनं येन केनाप्युपायेन संशोधनीयमिति। न खलु बालिकया ज्ञातम्—अहं तावदपूर्वकृष्णः, प्रभूता विद्या मयार्जिता, सुदीर्घः कालः कलिकातायां नीतः, नियतेर्नियोगात् पिच्छिले पथि पदमर्पयित्वा कर्दमे पतितोऽपि नाहमुपहास्य उपेक्षणीयो वा यः कोऽपि ग्राम्ययुवेति।

परेद्यव्यपूर्वः कन्यादर्शनाय गमिष्यति। न खल्वतिदूरे, पल्लामेव तासां सदनम्।

अपूर्वः सविशेषयत्नपूर्वकमात्मानं मण्डयामास। शाटकमुत्तरीयं च परिहृत्य कौशेयमाप्रपदीनं प्रलम्बं कञ्चुकं च शिरसि च वृत्ताकारमुष्णीषं पदयोश्च सुश्लक्ष्णमुपानद्युगलमामुच्य कौशेयच्छत्रपाणिः प्रातः प्रस्थितः।

समर्पितमात्र एव सम्भावित-श्वशुरसदने चरणे महता डम्बरेण समादरविशेषः प्रारब्धः। अन्ततश्च यथाकालं कम्पितान्तरङ्गा बालिका परिमृज्य प्रोञ्छयित्वा रञ्जयित्वा च कन्नर्यां रङ्गपत्रं सन्निवेश्य श्लक्ष्णरञ्जितशाटकेन समाच्छाद्य च वरस्य पुरस्तादुपस्थापिता। सा खलु गृहकोणे जानुस्पृष्टप्रायमूर्धा तूष्णीमुपविष्टा स्थिता। काचन च प्रौढा परिचारिका तस्याः धैर्यनिधानार्थं तस्याः पश्चादवस्थिता। कन्यायाः कश्चन बालको भ्राता स्वपरिवारे नूतनस्यास्यानधिकारप्रवेशोद्यतस्य जनस्योष्णीषं घटिकायन्त्रस्य शृङ्खलं नवोद्गतं च श्मश्रु तदेकतानेन मनसा निरीक्षमाणस्तस्थौ। अपूर्वः कियन्तंचन कालं गुम्फं लालयित्वान्ततो गम्भीरभावेनापृच्छत्, किं वा पठ्यते श्रीमत्येति। वसनभूषणसमाच्छन्नाल्लज्जास्तूपादस्य किमप्युत्तरं नाधिगतम्। द्वित्रान् वारान् प्रश्नस्य च प्रौढाया दास्याः सकाशात्पृष्ठदेशे समुत्साहजनकबहुलकरपरामर्शानां चानन्तरम् बालिका मृदुस्वरेणैकप्रयत्नेन द्रुततरमवदत्—चारुपाठो द्वितीयो भागः व्याकरणसारः प्रथमो भागः भूगोलविवरणम् पाटीगणितम् भारतवर्षस्येतिहासश्चेति। अवसरे चास्मिन् बहिर्देशेऽशान्तगतेर्धुपूधाप्शब्दः श्रवणपथमापतत्, मुहूर्तेन च धावित्वा श्वसित्वा पृष्ठगतान् केशान् दोलाय्य मृन्मयी समागत्य गृहं प्रविवेश। प्रविश्य चापूर्वकृष्णं प्रति दृक्पातमात्रमप्यविधाय सपदि कन्यकाया भ्रातू राखालस्य पाणिमाक्रष्टुमारेभे। तदानीं राखालः स्वीयपर्यवेक्षणशक्तेश्चर्चायामेकाग्रेण मनसा निरत आसीत्, स कथमप्युत्थातुं नैच्छत्। कन्यापार्श्वगता परिचारिका संयतकण्ठस्वरस्य मार्दवरक्षणप्रयत्नवहिता यथासम्भवं तीव्रतीव्रं मृन्मयीं भर्त्सयितुं प्रवृत्ता। अपूर्वकृष्णः स्वं समग्रं गाम्भीर्यं गौरवं चैकीकृत्य सोष्णीषेण शिरसाभ्रभेदी सन्नुपविष्टः, उदरसमीपे च घटिकायन्त्रस्य शृङ्खलं सञ्चलयन् स्थितः। अन्ततश्च सङ्गिनं कथमपि चलयितुमशक्नुवतो तस्य पृष्ठदेशे सशब्दं चपेटाघातं विधाय झगिति च कन्यायाः शिरोगुण्ठनं समाकृष्यापावृत्य झटिकावेगेन मृन्मयी गृहान्निष्क्रान्ता। दासी तावन्निगूढं गर्जितुमारेभे, स्वसुश्चाकस्मिकेनावगुण्ठनोन्मोचनेन राखालः खिलखिलारवेण हसितुमुपचक्रमे। न खल्वसौ स्वपृष्ठे प्रबलचपेटाघातमन्याय्यममन्यत, ईदृशो हि धनणव्यतिकरस्तयोर्मध्ये निरन्तरमेव प्रवृत्त इति। किं बहुना पूर्वं तावन्मृन्मय्याः केशकलापः स्कन्धमतिक्रम्य पृष्ठस्य मध्यभागपर्यन्तं न्यपतत्, राखाल एवैकदाकस्मात् पश्चाद्देशात् समागम्य चूडाबद्धे केशपाशे कर्तरीं चालितवान्। तदा च मृन्मयी क्रोधस्य परां कोटिमधिरूढा तदीयहस्तात् कर्तरीमाच्छिद्य समवशिष्टं केशकलापं कचाँचकचाँचशब्दपुरः-

सरं निर्घृणं निकृत्तवती। तस्य स्तबकावली शाखाच्युतकृष्णमृद्वीकास्तूपा इव गुच्छशो भूमौ निपपात। ईदृशी शासनप्रणाल्युभयोर्मध्ये प्रचलितासीत्।

इत ऊर्ध्वं नीरवेयं परीक्षासभाऽधिककालं नातिष्ठत्। पिण्डाकारा कन्यका कथंकथमपि पुनरपि दीर्घाकारा भूत्वा दासीसहयोगेनान्तःपुरं प्राविशत्। अपूर्वो निरतिशयगाम्भीर्येण विरलगुम्फरेखां लालयन् समुत्थाय गृहाद् बहिर्गन्तुमुद्यतोऽभवत्, द्वारमुपसृत्यापश्यत् न खलु सुश्लक्ष्णमुपानद्युगलं यथास्थानं वर्तत इति, कुत्र च वर्तते तदपि महता प्रयत्नेनापि न निर्धारयितुं शक्यमासीत्।

गृहस्थाः सर्व एव निरतिशयं पर्याकुला अभवन्, अपराधिनमुद्दिश्य गालीनां भर्त्सनानाञ्चाजस्रा वृष्टिरासीत्। सुचिरमन्विष्यान्ततश्चानन्योपायः सन् गृहस्वामिनः पुरातनं छिन्नं शिथिलमुपानद्युगलं प्रतिमुच्य पाण्टालुनाप्रपदीनोष्णीषसमेतः सुसज्जितोऽपूर्वः कर्दमाक्तग्राम्यपथेनातीव सावधानं प्रचलितः।

पुष्करिणीतटे निर्जनपथप्रान्ते पुनरपि स उच्चकण्ठेनाजस्रो हास्यकल्लोच्छ्वासः। तरुपल्लवाभ्यन्तरतः कौतुकप्रिया वनदेवतापूर्वस्य तदसङ्गतमुपानद्युगलं निरीक्ष्य सपदि न प्रबभूव हास्यं निरोद्धुमिति प्रतीयते स्म।

यावदपूर्वः प्रतिपत्तिमूढ इवाकस्मात् स्तब्ध इतस्ततो निरीक्षते स्म तावन्निबिडारण्यान्निर्गत्य काचनाऽपगतत्रपाऽपराधिनी तस्य पुरस्तान्नूतनमुपानद्युगलं स्थापयित्वैव पलायनोद्यताभवत्। अपूर्वो द्रुतवेगेन हस्तयोर्धृत्वा तां बन्दिग्राहमगृह्णात्।

मृन्मयी कदाचिदृजूभूय कदाचिद् वक्रीभूय तस्य हस्तात् स्खलित्वा पलायितुं प्रयतितवती, परं सर्वे तस्याः प्रयासा विफलतामुपगताः। कुञ्चितकुन्तलवेष्टितस्य तदीयसहास्यपरिपुष्टवदनस्योपरि शाखान्तरालच्युता रविकिरणा निपतिताः। यथा हि कुतूहली पथिकः सूर्यकरोज्ज्वलाया निर्मलायाश्चञ्चलाया निर्झरिण्या अभिमुखे समवनतकायस्तदीयं तलदेशं विलोकयंस्तिष्ठति तथैवापूर्वो गभीरगम्भीरनयनाभ्यां मृन्मय्या ऊर्ध्वोत्क्षिप्तवदनोपरि तडित्तरलयोश्च चक्षुषोरभ्यन्तरे दृष्टिं पातयामास, अतिमात्रं शनैः शनैश्च मुष्टिं शिथिलीकृत्यापरिसमाप्त एव कर्तव्ये बन्दिनीं मोचितवान्। यद्यपूर्वः क्रोधस्य वशं गत्वा मृन्मयीमताडयिष्यत् तर्हि सा लेशतोऽपि विस्मिता नैवाभविष्यत्, परं निर्जनमार्गमध्येऽपूर्वस्यास्य नीरवशास्तेः किमपि तात्पर्यं सा नैवाबुद्ध।

नृत्यपरायाः प्रकृतेर्नूपुरनिक्कण इव चञ्चलहास्यध्वनिः समग्रमाकाशमार्गमभिव्याप्य रणति स्म, चिन्तानिमग्नश्चापूर्वकृष्णो निरतिशयधीरपदक्षेपेण सदनं समुपस्थितः।

---

# आसेचनक-

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

आसेचनकशब्दस्य कोऽर्थ इति पृच्छति कश्चन प्राड्विवाकः। अत्रोच्यते। अमरकोषे दृश्यते—"तदासेचनकं तृप्तेर्नास्त्यन्तो यस्य दर्शनात्" इति। अत एव निरतिशयं रमणीयं प्रियं वा वस्त्वासेचनकमित्युच्यते। अत्र क्षीरस्वामी—आसिच्यत आप्याय्यते दृगनेन आसेचनकम्। यस्य दर्शनाद् दृग् न तृप्यति। इति। वन्द्यघटीयसर्वानन्देन असेचनकमिति पाठमङ्गीकृत्योक्तम्—बहुशो दर्शनेऽप्यधिकां प्रीतिमुत्पादयति असेचनकम्। इति। भानुजिदीक्षितेनोक्तम्—न सिच्यते मनोऽत्र। षिच क्षरणे। करणाधिकरणयोश्च इति ल्युट्। संज्ञायां कन्। आसेचनमिति दीर्घादिपाठ आङ् बोध्यः। इति। रायमुकुटेन व्याख्यातम्—यस्य दर्शनाद् दृङ्मनसोस्तृप्तेरन्तः समाप्तिर्नास्ति यद् बहुशो दृष्टमप्यधिकां प्रीतिं जनयति। न सिच्यते न क्षर्यते दृङ्मनोऽत्र। ल्युट्। स्वार्थे कनि असेचनकम्। दीर्घादिपाठे आसिच्येते आप्याय्येते दृक्चित्ते अनेन। ल्युटि कनि आसेचनकम्। इति।

देवतानां कृते धाराकारेण क्षरितः सोम आसेचनक इत्युच्यते। स यथातिमात्रं देवानां मनस्तोषकरस्तथैव परमरमणीयस्य यद्वस्तुनः सन्दर्शनेन नेत्रं तृप्तिं नाधिगच्छति तदासेचनकम्। यद्वा यत् खलु सुखैरासिञ्चतीवामृतं नयनयोस्तदासेचनकम्। शब्दोऽयं मूलत आसेचनकमित्येवासीत्, नास्तीत्यत्राकारसन्दर्शनेन परवर्तिभिर्व्याख्याकृद्भिर्नञर्थकाकारसंयोजनेन असेचनकं विहितमिति प्रतिभाति। ग्रहणकशब्दवदस्य रूपं बोद्धव्यम्।

साहित्यदर्पणे विरोधालङ्कारस्योदाहृणं दृश्यते—

नयनयुगासेचनकं मानसवृत्त्यापि दुष्प्रापम्।
रूपमिदं मदिराक्ष्या मदयति हृदयं दुनोति च मे ॥

इति। अत्र ग्रन्थकारतनयेनानन्तदासेनोक्तम्—आसेचनकं सेकेन तापनाशकम् अमृतेन सेचनकमिति वा।

———

# प्रश्नोत्तराणि

## अहिचलनमार्ग-

कश्चनाध्यापकः पृच्छति। अभिनवगुप्तेन लिखितम्—अलमहि-चलनमार्गगवेषणेनेति। को वास्यार्थः?

उत्तरम्। कृतं छिद्रान्वेषणेनेति।

## सृज विसर्गे

सुहृद्वर्यः साङ्ख्यतीर्थ महोदयः पृच्छति—धातुपाठे सृजधातोरर्थो विसर्ग इति वर्तते। किमस्य तात्पर्यमिति।

उत्तरम्। सृजधातोः प्राथमिकोऽर्थो हस्तान्मोचनम्, ततो निक्षेपः, ततो गवादीनां मोचनम्, ततः स्वस्मान्मोचनम्, ततो जननं सर्जनमिति। दिशामुपान्तेषु ससर्ज दृष्टिमित्यादिषु विसर्गार्थः स्फुट एव।

## कांक्षे

बहवः पृच्छन्ति कांक्षे पदं शुद्धं वा? इति।

उत्तरम्। काङ्क्षधातोः परस्मैपदित्वात् पदमध्यवर्तिनश्चानुस्वारस्य स्पर्शे परे नित्यमेव वर्गपञ्चमविधानात् काङ्क्षामीत्येव शुद्धम्।

---

# हृत्पिण्डस्य प्रतिद्वन्द्वी

वेतारजगत्पत्रे ( Vol. XXXI, No. 18, पृः १०७ स्त० १ ) दृष्टम्—दिक्भ्रान्त पथिकेरा। इति। भ्रमधातुरेव भ्रममुत्पादयति।

---

# पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते

श्रीमतो विधायक-भट्टाचार्यस्य "चाँदनी" समाख्यायाः कथाया द्वितीये पृष्ठे दृष्टम्—अधःस्तन कर्मचारीदेर उपर ( अधःस्तनानां कर्मचारिणामुपरि ) इति।

---

# रसमञ्जरी

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

अध्यापकः। वत्स वरेन्द्र, किमिदं त्वया विलिखितम्—अनुजानीध्व मामिति ?

वरेन्द्रः। आर्य, कोऽत्र दोषः ?

अध्यापकः। अरे मूर्ख, अरे बालिश, अरे वानर, अपि न ज्ञायते त्वयानुपूर्वो जानातिः परस्मैपद्येवेति।

वरेन्द्रः। आर्य, वैयाकरणा एवं प्रजल्पन्ति। परं प्रयोगस्तु ममानुकूलः।

अध्यापकः। कुत्र तावदीदृशः प्रयोगः ?

वरेन्द्रः। आर्य, नैषधचरिते वर्तते श्लोकः—

स्वयंवरमहे भैमीवरणाय त्वरामहे।
तदस्माननुमन्यध्वमध्वने तत्र धाविने ॥१७।११२

इति। एतस्य व्याख्याप्रसङ्गेन मल्लिनाथेनोक्तम्—अनुमन्यध्वम् अनुजानीध्वमिति।

अध्यापकः। अरे मूर्ख, एतदपि न बुध्यसे ? श्लोके धकारबाहुल्यमभिवीक्ष्यानन्योपायेन तपस्विना मल्लिनाथेन ध्वम्-प्रयुक्तः। मूलानुसारिणा हि व्याख्यानेन भवितव्यम्। धकारस्योत्सारणे धकारो नियतं कुप्येत्, धनुषा विध्येत्, ध्वंसेन योजयेत्, धूमेनावृणुयात्, धन्वसु पातयेत्, धाम्ना धनेन धर्मेण धृत्या च वियोजयेत्। अत एव श्रद्धया वाश्रद्धया वा धकार उपासनीय एव। अत एव घनाम्बुना राजपथे हि पिच्छिले क्वचिद् बुधैरप्यपथेन गम्यत इति न्यायेन वैयाकरणधुरीणेनापि मल्लिनाथसूरिणा अनुजानीध्वमिति व्यक्तमेव प्रामादिकं पदमुपासितम्। वस्तुतस्तु श्लथबन्धनत्वेऽप्यनुजानीतेत्येव साधु।

---

# फरासीसभाषायां प्रावीण्यम्

Sunday Statesman पत्रे (September 25, 1960) दृष्टम्—Dr. Chatterjee...was awarded a special centenary medal by the Societe Botanique de France इति। आङ्गल Society+फरासीस Société=Statesman-पत्रस्य Societe.

---

# ईशोपनिषत्

ॐ पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥

ॐ शान्तिः शान्तिः शान्तिः

## मितभाष्यम्

यासां प्रसादान्मनसोऽप्यगम्यं रूपाद्यपेतं परमेव तत्त्वम् ।
सर्वज्ञमत्यूर्ज्जितचित्प्रभाव जानाति ताभ्योऽस्तु नमः श्रुतिभ्यः ॥

पूर्णमद इति । अदः परोक्षं ब्रह्म पूर्णं सर्वव्यापि, इदं प्रत्यक्षं प्रविततं जगत् पूर्णं शक्तिधमरूपरसादिभिर्यथायथं स्वरूपतो व्याप्तम् । पूर्णाद् ब्रह्मणः पूर्णमिदं जगत् उदच्यते उद्गच्छति उत्पद्यते इत्यर्थः । प्रलये च पूर्णस्य जगतः पूर्णतामादाय स्वस्मिन् गृहीत्वा एकत्वमापाद्य पूर्णं ब्रह्मैवावशिष्यते स्वात्मनैवावतिष्ठत इत्यर्थः । यथा तरङ्गफेनादयः स्वात्मना परस्परं भिन्ना अपि समुद्रान्न भिन्ना जन्मनाशवन्तोऽपि सत्याश्च सर्वे समुद्रवदेव, तथेदं जगत् । तथाच न्यायः "तदनन्यत्वमारम्भणशब्दादिभ्य" इति । नातो द्वैताद्वैतापत्तिः । एवं हि सति लौकिक-वैदिक-कर्मजातोपपत्तिरन्यथा कार्य्यस्य मिथ्यात्वे तेन मरीचिजलादिवन्नार्थक्रियानिष्पत्तिरुपपद्येतेति तन्तवः पटः सुवर्णं कुण्डलमितिवदभिन्नमपि जगद् ब्रह्मणो न मिथ्येति श्रौतः सिद्धान्तः ।

यथा विविधविचित्रफलपुष्पपत्रशाखादिमत्त्वेऽपि लतातर्वादेः पृथिवीविकारत्वात् पृथिव्यात्मकत्वं तदोतप्रोतत्वं च, तथैवात्मविकारस्य जगतो विविधविचित्रशक्तिधर्मरूपरसाकाराद्यात्मकत्वेऽपि ब्रह्मात्मकत्वं ब्रह्मण्येवातिसूक्ष्म ओतप्रोतत्वं चेति न तस्य चिदेकरसघनस्याशेषव्यापकताहानिः । तथाच "यथा पृथिव्यामोषधयः सम्भवन्ति यथा सतः पुरुषात् केशलोमानि तथाऽक्षरात् सम्भवतीह विश्वम्" [मुण्डक० १।७] इति श्रौतो दृष्टान्तः, न तु रज्जुसर्पशुक्तिरूप्यादिदृष्टान्तानां गन्धोऽपि श्रुतिषु सूत्रेषु वोपलभ्यते । एवञ्च श्रुतिश्चैषोपपन्नतरा—

"यच्च किञ्चिज्जगत् सर्वं दृश्यते श्रूयतेऽपि वा ।
अन्तर्बहिश्च तत् सर्वं व्याप्य नारायणः स्थितः ॥"

[ नारायण० १।४।२ ] इति । नातो मिथ्यात्वं जगतः सिध्यति, मिथ्याभूतस्य तुच्छस्य रज्जुसर्पादे र्बहिरन्तरत्वाभावात् । यथा घटाभाववति भूतले घटवद् भूतलमित्यभिलापस्यार्थहीनत्वान्मिथ्यात्वं तथा सर्पाभाववति सर्पोऽयमित्यभिलापस्य भ्रमस्य चार्थराहित्यादेव मिथ्यात्वं भयकम्पाभिलापादिश्च भ्रमादेव, तथा शुक्तौ

ॐ ईशावास्यमिदं सर्वं यत् किञ्च जगत्यां जगत्।
तेन त्यक्तेन भुञ्जीथा मा गृधः कस्य स्विद् धनम्॥१॥

रजतमित्यभिलापः प्रवृत्तिश्च भ्रमादेवेति तत्त्वम्। शुक्तिरूप्यरज्जुसर्पादयश्चार्था बौद्धतन्त्रसिद्धा एव न वेदान्तसिद्धा वेदान्तादिष्वभावादिति विवृतमस्माभिः सूत्रभाष्ये। जगतः सृष्टिप्रलयवत्त्वेऽपि च ब्रह्मणो न नित्यत्वहानि र्योगिवदप्रच्युतस्वरूपस्यापि विविधविचित्रविकारात्मना प्रततत्वात्। तथाच न्यायौ "श्रुतेस्तु शब्दमूलत्वात्" "आत्मनि चैवं विचित्राश्च हो"ति। स्मृतिश्च—

"आत्मनो वै शरीराणि बहूनि भरतर्षभ!
योगी कुर्याद् बलं प्राप्य तैश्च सर्वैर्महीं चरेत्॥
प्राप्नुयाद् विषयान् कैश्चित् कैश्चिदुग्रं तपश्चरेत्।
संक्षिपेच्च पुनस्तानि सूर्यो रश्मिगणानिव॥" इति।

नातः कर्मकाण्डानर्थक्यं न वा कृतहान्यकृताभ्यागमप्रसङ्ग इति स्थितम्।

## ईशोपनिषन्मितभाष्यम्।

श्रीविष्णवे नमः। ईशावास्यमिति। आदौ दर्शपौर्णमासाद्यश्वमेधान्तकर्मकाण्डं सपरिकरमूनचत्वारिंशताध्यायैः प्रतिपाद्यान्ते ईशावास्याद्यष्टादशभिर्मन्त्रैरुपनिषद् भाषिता मोक्षप्राप्तये। तत्रेशावास्यादिमन्त्रेण लोभक्रोधादिरहितेन संयमवता स्वात्मा पोषणीयो भोजनादिनेति दर्शयति। ईशा निखिलजगन्नियमनकुशलेन स्वाभाविकापरिमितैश्वर्यशालिना ब्रह्मणा इदं सर्वं परिदृश्यमानो जगत्प्रपञ्चः न केवलं दृश्यजातमेव किन्तु जगत्यामशेषभुवने यत्किञ्च जगद् गतिशीलं नश्वरं वस्तु विद्यते तत् सर्वं वास्यम् आच्छादितं पट इव तन्तुभिरोतप्रोतभावेनान्तर्बहिश्च परिव्याप्तं कारणत्वात्,

"यच्च किञ्चिज्जगत् सर्वं दृश्यते श्रूयतेऽपि वा।
अन्तर्बहिश्च तत् सर्वं व्याप्य नारायणः स्थितः॥" [नारायण० १।४।२]

इति श्रुतेः। ईश्वरेणैवाशेषशक्तिमता जगदात्मना परिणतत्वात् स एव सर्वं तस्यैव सर्वं नान्यस्य किञ्चिदप्यस्ति, अतस्तेनेश्वरेण त्यक्तेन जीवजीवनार्थं तत्पूर्वकर्माश्रित्य प्रदत्तेनान्नपानादिना भुञ्जीथाः भोगं कुर्याः, स्वादृष्टवशादनायासेन प्राप्तं यदन्नादिकं तेनैव सन्तुष्टः स्यादित्यर्थः। नात्र भुजिः पालनार्थ आत्मनेपदानुपपत्तेः "भुजोऽनवने" [पा० १।३।६६] इत्यनुशासनात्। लोभाद् अन्यस्य कस्यचिदपि धनं मा गृध आकाङ्क्षीः। एवं स्वकर्मवशादनायासलब्धेनान्नपानादिना देहं संरक्ष्य परित्यज्य चाधर्महेतुं लोभकामादिकं मोक्षार्थं यतितव्यं सर्वथेति दर्शितो वेदार्थः। स्वात्मपोषणे भोजनस्यैव



कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः।
एवं त्वयि नान्यथेतोऽस्ति न कर्म्म लिप्यते नरे ॥२॥

प्राधान्यात् तस्यैवोल्लेखः। एवमर्जितदारादिभोगेऽपि यथाशास्त्रं संयम आश्रयणीयः। एतेनाधिकारी दर्शितो मोक्षे मितेन वचसा श्रुत्या द्विजायेति ज्ञेयम्।

अत्रेशेतिपदेन ब्रह्मणः कर्तृत्वादिमत्त्वमेव दर्शितम्, न कूटस्थनिर्विशेषत्वादिमत्त्वं, न वा मिथ्यामायाऽविद्यादिमत्त्वमिति ज्ञेयम्। न चात्मस्वरूपज्ञानेनानृतं जगदाव्रियत इत्युच्यते श्रुतिषु क्वापि। न च रज्जुस्वरूपज्ञानेन मिथ्यासर्प आव्रियत इत्युच्यते लोके, किन्तु रज्जुज्ञानेन सर्पभ्रमो लुप्यत इत्येव। चन्दनागुर्वादे-रुदकादिसम्बन्धजक्लेदादिदौर्गन्ध्यं न मिथ्या, सत्यमपि तच्चन्दनादिघर्षणजनितेन प्रबलेन सुगन्धेनाभिभूयते सौरालोकेन प्रदीपालोकवत्। ब्रह्मात्मभावनादक्षाणामपि बादरायणवशिष्ठयाज्ञवल्क्यादीनां नामरूपादिविकारजाते मिथ्याधी नोत्पन्ना कदापि, ब्रह्मसूत्रे श्रौते च जनकयाज्ञवल्क्यादिसंवादे जगन्मिथ्याशब्दाभावात्, प्रत्युत "प्राणो वा अमृतं नामरूपे सत्यम्" [बृह० १।६।३] "अन्नात् प्राणो मनः सत्यम्" [मुण्डक० १।१।९] "कथमसतः सज्जायेत" [ छान्दोग्य० ६।२।२ ] इत्यादिश्रुतिषु जगतः सत्यत्वाभिधानाज् जगन्मिथ्याशब्दस्य प्रस्थानत्रयेष्वभावाच्च सत्यमेव जगत्। बादरायणवशिष्ठादीनामप्ये-षणात्रयत्यागेन सन्न्यासादर्शनात् प्रत्युत यथायथकर्माचरणदर्शनान्न तत्त्वज्ञानात् कर्मत्यागो वेदार्थः। प्रत्युत "जिजीविषेच्छतं समाः" "यावज्जीवमग्निहोत्रं जुहोती"त्यादिश्रुतेस्तै-र्ज्ञानिवन्द्यपदारविन्दैरप्याचरितमेव कर्म। उक्तं च श्रीभगवता—

"गतसङ्गस्य मुक्तस्य ज्ञानावस्थितचेतसः।
यज्ञायाचरतः कर्म समग्रं प्रविलीयते ॥" [ गीता ४।२३ ] इति।

अत्र सांख्यसम्मतजीवन्मुक्तस्यापि यज्ञसम्पत्तये कर्म्माचरणमुक्तमित्यलम-नल्पजल्पेनेति ॥१॥

इदानीं मुमुक्षोः कर्त्तव्यमाह—कुर्वन्नेवेति। इह मनुष्यलोके कर्माण्यग्निहोत्रादीनि कुर्वन्नेव शतं समाः शतं वर्षाणि यावत् जिजीविषेत् जीवितुमिच्छेत्। शतवर्षजीवनस्य रागत एव प्राप्तत्वान्न तत्र विधिः किन्तु तदनुवादेन तावत्कालं कर्माचरण एव, यावज्जीवं कर्म कुर्यादेव न त्यजेदित्यर्थः। त्वयि एवं कर्म कुर्वाणे सति यावज्जीवं कर्मानुष्ठानपरे त्वयि सतीत्यर्थः, इतः कर्मानुष्ठानादन्यथा प्रकारान्तरं कर्मत्यागरूपं सर्वकर्मसन्न्यासलक्षणं कर्त्तव्यं नास्ति। यावज्जीवं कर्मतत्परे सति ज्ञानसमुच्चितेनैव कर्मणा मोक्षोदयान्न सर्वकर्मसन्न्यासापेक्षेति भावः। नन्वेवं बन्धः स्यात्, तत्राह—न कर्मेति। निष्कामकर्मपरे

असूर्या नाम ते लोका अन्धेन तमसावृताः ।
तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः ॥३॥

अनेजदेकं मनसो जवीयो नैनद्देवा आप्नुवन् पूर्वमर्षत् ।
तद् धावतोऽन्यानत्येति तिष्ठत् तस्मिन्नपो मातरिश्वा दधाति ॥४॥

नरे द्विजातौ कर्म न लिप्यते बन्धहेतुर्न भवति किन्तु ज्ञानसमुच्चितं सत् मोक्षहेतुरेवेत्यर्थः । न च वैदिकज्ञानकर्मणोर्विरोधो बादरायण-वशिष्ठ-याज्ञवल्क्यादेर्जनक-युधिष्ठिरादेश्च तथैवाचरणात् । आह च योगियाज्ञवल्क्यः—

"संसारभीरुभिस्तस्माद् विध्युक्तं कामवर्जितम् ।
विधिवत् कर्म कर्तव्यं ज्ञानेन सह सर्वशः ॥ १।२६॥
ज्ञानेनैव सहैतेन नित्यकर्माणि कुर्वतः ।
निवृत्तफलसङ्गस्य मुक्तिर्गागि करे स्थिता ॥" १०।२७॥ इति ।

आह च श्रीभगवान्—

"सन्न्यासस्तु महाबाहो दुःखमाप्तुमयोगतः ।
योगयुक्तो मुनिर्ब्रह्म न चिरेणाधिगच्छति ॥" [गीता ५।६] इति ।

सूत्रकृदप्याह—"विहितत्वाच्चाश्रमकर्मापि" "सहकारित्वेन च" [ब्रह्मसूत्र ३।४।३२-३३] "अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात्" [ब्रह्मसूत्र ४।१।१६] इति । न तु नरे नरमात्राभिमानिनीति ब्राह्मणादिज्ञानशून्ये नित्यात्मज्ञानशून्ये च कर्मानधिकारात् ॥२॥

न केवलं कर्मैवानुष्ठेयम् आत्मज्ञानमपि कार्यम्, अन्यथा पश्वादियोनिप्राप्तिरित्याह—असूर्या इति । ये केचात्महन आत्मज्ञानहीनाः सन्तमप्यात्मानं भास्वरभास्करवदतिभास्वरं सर्वव्यापिनं सर्गादिकारणं सर्वनियन्तारं स्वस्यात्मानमप्यसन्तं कुर्वन्ति ते आत्महनः । "असन्नेव स भवत्यसद् ब्रह्मेति वेद चेत्" [तैत्तिरीय २।६।१] इति श्रुतेरात्महत्याकारिणः केवलं देहेन्द्रियारामास्ते, अन्धेन तमसा गाढान्धकारेण स्वप्रकाशात्मालोकाभावाद् देहात्मभ्रमरूपेणाज्ञानेनावृता आच्छन्नास्ते प्रसिद्धा असूर्या इति । नामेति पादपूरणे । असुर्या इति पाठे असुराः प्रसादप्रकाशादिहीना रागद्वेषाहङ्कारादिमन्तस्तेषां भोग्या असुर्या लोका राक्षसदानवपश्वादिस्थानानि सन्ति तान् प्रेत्य जन्मान्तरेऽभिगच्छन्ति पश्वादिप्रकृतिकत्वात् तज्जातिमेव प्राप्नुवन्तीत्यर्थः ॥३॥

किं तद् ब्रह्मेति पृच्छायामाह—अनेजदिति । न एजति न चलतीत्यनेजत् निश्चलं यत एकम् अद्वितीयं सजातीयविजातीयरहितं पूर्णमनन्तमिति यावत्, अतो निश्चलमित्यर्थः । तदपि मनसो जवीयो वेगवत्तरम् । मनो हि द्रुतगामिषु प्रधानं ततोऽप्यधिकतरद्रुतगामीत्यर्थः ।

तदेजति तन्नैजति तद् दूरे तद्वन्तिके ।
तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यतः ॥५॥

यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति ।
सर्वभूतेषु चात्मानं ततो न विजुगुप्सते ॥६॥

यस्मिन् सर्वाणि भूतान्यात्मैवाभूद् विजानतः ।
तत्र को मोहः कः शोक एकत्वमनुपश्यतः ॥७॥

एतेन युक्तितर्कातीतमद्भुतत्वमस्य दर्शितम् । अतो देवा ब्रह्मादयोऽपि एनत् ब्रह्म नाप्नुवन् विचारातीतत्वान्न निर्धारितवन्तः, किमुत मानुषाः ? ब्रह्म तु पूर्वम् अर्षत् भूतं भव्यं वर्त्तमानं च यावद् वस्तु ज्ञातवत् । तद् ब्रह्म तिष्ठत् स्थितमेव धावतो द्रुतगामिनोऽन्यान् चक्षुरादीनत्येति अतीत्य याति । उक्तं च श्रुत्यन्तरे "आसीनो दूरं व्रजति शयानो याति सर्वतः । कस्तं मदामदं देवं मदन्यो ज्ञातुमर्हति ॥" [ कठ १।२।२० ] इति ।

तस्मिन् ब्रह्मणि स्थितो मातरिश्वा वायुः अपो जलानि सूर्यचन्द्रादीनि च दधाति धारयति यदाश्रयादेव वायुराकाशे सूर्यचन्द्रादीनपि धारयितुं शक्त एवं प्रभावातिशयवद् ब्रह्मेत्यर्थः ॥४॥

किञ्च तद् ब्रह्म एजति चलति तत् नैजति न चलति च । तद् दूरेऽपरिशीलितात्मनाम् अशुद्धचेतसां सुदीर्घेणापि कालेनानवबुध्यमानत्वाद् दूरे इव, विशुद्धसत्त्वानां तु ध्यानादिपराणाम् अन्तिके समीपवर्त्ति तद् ब्रह्म, सत्वरमेव बुद्धिगोचरत्वात् । अस्य सर्वस्य लोकस्य प्राणिजातस्य अन्तरभ्यन्तरे हृत्पुण्डरीके तद् ब्रह्म, सर्वस्य बहिरपि वर्तते तद् ब्रह्म सर्वव्यापित्वादित्यर्थः ॥५॥

यस्तु विशुद्धसत्त्वो महात्मा सर्वाणि भूतान्याकाशादीनि आत्मनि परमात्मन्येवानुपश्यति परमात्मकार्यत्वात् तदाश्रितानीति साक्षात्करोति, सर्वभूतेषु ब्रह्मादिस्थावरान्तेषु आत्मानम् तदन्तर्यामितया स्थितं पश्यति, "य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते" [ बृहदारण्यक ४।४।२२ ] इति श्रुतेः । आकाशादिषु वा कार्यभूतेषु अन्वितमात्मानं पश्यति मृत्तिकायां घटो घट मृत्तिकेतिवदित्यर्थः । ततः सार्वात्म्यदर्शनात् न विजुगुप्सते घृणां न करोति । सर्वस्यैवात्मत्वात् तद्व्यतिरिक्तस्याभावाद् घृणाभाव इत्यर्थः ॥६॥

सार्वात्म्यदर्शनाच्छोकमोहाभावमप्याह—यस्मिन्निति । विजानतः ज्ञानिनः पुरुषधौरेयस्य यस्मिन् यदा आत्मसाक्षात्कारकाले इत्यर्थः, सर्वाणि भूतानि आत्मैवाभूत् पूर्ववदात्मैव भवति, आत्मकार्याण्येवेमानि भूतान्याकाशादीनि न ततो भिन्नानि, जीवाश्च तदंशरूपा

स पर्यगाच्छुक्रमकायमव्रणमस्नाविरं शुद्धमपापविद्धम् ।
कविर्मनीषी परिभूः स्वयम्भुर्याथातथ्यतोऽर्थान्व्यदधाच्छाश्वतीभ्यः
समाभ्यः ॥८॥

न ततो भिन्ना इत्येवमात्मैव सर्वं भवतीत्यर्थः । तत्र तदा एकत्वमनुपश्यत आत्मैवेदं सर्वमिति दर्शनवतः को मोहः को वा शोकः ? एकस्यैव ब्रह्मणोऽंशतया जीवरूपेण विकारात्मना च विश्वरूपेण विराजमानत्वाद् भिन्नत्वाभावाच्छोकमोहाभावः । भेदबुद्धिरेव हि भवत्यनर्थहेतुः, मित्रामित्रयोर्भिन्नत्वज्ञानमेव रागद्वेषहेतुर्मोहः, प्रियस्य पुत्रवित्तादेर्वियोगजनितश्च शोकः, तत्र मित्रामित्रयोर्ब्रह्मांशत्वज्ञाने भेदबुद्धेस्तिरोधानान्मोहाभावः, पुत्रादेश्चात्मनो ब्रह्मांशत्वज्ञाने तस्यानपायाच्छोकाभावो मरणेऽपि जडानां च देहवित्तादीनां ज्ञानिनस्तुच्छकल्पत्वात् तदपायेऽपि न शोक इति भावः ।

नात्र विश्वप्रलयस्य गन्धोऽपि, बौद्धैरेव हि तत्वज्ञानाद् विश्वप्रलयः कथ्यते । तथाच चन्द्रकीर्त्तिः "तत्त्वदर्शनेन हि सर्वपदार्थानामेवानुपलम्भान्नास्ति किञ्चिद् यदालम्ब्य कर्म कुर्यात् ।

संसारतत्त्वान् संस्कारानविद्वान् संस्करोत्यतः ।
अविद्वान् कारकस्तस्मान्न विद्वांस्तत्त्वदर्शनात् ॥
अविद्यायां निरुद्धायां संस्काराणामसम्भवात् ।
अविद्याया निरोधस्तु ज्ञानेनास्यैव भावनात् ॥" इति ।

सर्वदर्शनसंग्रहे शून्यवादप्रकरणे माधवाचार्योऽप्याह "तत्त्वज्ञानेनाविद्यानाशाद् विश्वप्रलये शून्यरूपं परनिर्वाणं सिध्यती"ति ॥७॥

स ज्ञानी पर्यगात् देहपातात् परं परि सर्वतोभावेन पुनरावृत्तिराहित्येन गच्छति ब्रह्मलोकमिति शेषः । "ब्रह्मलोकमभिसंपद्यते न च पुनरावर्तते" [ छान्दोग्य ८।१५।१ ] इति श्रुतेः । ब्रह्म कीदृशम् ? शुक्रं प्रभास्वरम् । अकायं भौतिकविग्रहरहितम् न तु विग्रहसामान्याभाववत्, "य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रु हिरण्यकेश आ प्रणखात् सर्व एव सुवर्णः" [छान्दोग्य १।६।६] इति श्रुतेः, "तस्मिन् ब्रह्मास्ते" [कौषीतकी १।५ ] इति पर्य्यङ्कासीनत्वश्रुतेः, "हिरण्मयवपुर्धृतशङ्खचक्रः" इति स्मृतेश्च । न च

"माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद ।
सर्वभूतगुणैर्युक्तं नैवं मां ज्ञातुमर्हसि ॥"

इति शान्तिपर्ववाक्यान्मायाकल्पितं तद्रूपमिति वाच्यम्, एतद्वाक्यस्य सांख्यप्रकरणपठितत्वात् त्रिगुणमायाया वेदान्तेष्वसिद्धेश्च । ब्रह्मविग्रहस्य चिद्रूपहिरण्मयत्वेन भौतिकगुणयुक्तत्वाभावाच्च । चिन्मयविग्रहत्वादव्रणम् अक्षतम्, अस्नाविरं स्नायुरहितं,

अन्धं तमः प्रविशन्ति येऽविद्यामुपासते ।
ततो भूय इव ते तमो य उ विद्यायां रताः ॥९॥

यतः शुद्धं निर्दोषं चिद्रूपं न भूतमयम्। कायसामान्याभावे व्यर्थं विशेषणद्वयम्। अपापविद्धं पुण्यपापरहितम्, "न सुकृतं न दुष्कृतं सर्वे पाप्मानोऽतो निवर्तन्ते" [छान्दोग्य ८।४।१] इति श्रुतौ पापवत् पुण्येऽपि पाप्मशब्दप्रयोगात्। कविरित्यादि पुंलिङ्गव्यत्ययेन ब्रह्मणो विशेषणम्। कविः क्रान्तदर्शी त्रिकालज्ञः, मनीषी स्वतःसिद्धप्रज्ञावान्, परिभूः परिभवकर्ता निरतिशयैश्वर्यशाली, स्वयम्भुः स्वयंप्रकाशः, याथातथ्यतः याथार्थ्येन अर्थान् तत्तत्कर्मभोग्यविषयान् स्वर्गादीन् जीवानां व्यदधात् विहितवान् कर्मानुरूपं भोग्यजातं सृष्टवान् शाश्वतीभ्यः समाभ्यः चिरतरं व्याप्य स्थितिकालं यावदित्यर्थः ॥८॥

एकत्वदर्शिन एव शोकमोहातीतत्वे सर्वे ज्ञानमेव कुर्वन्तु नाम किं कर्मणेति विद्या-कर्मणोः समुच्चयं विवक्षुरादौ केवलकर्म केवलविद्यां च प्रतिषेधति—अन्धमिति। ये तावद-विद्यां विद्याभिन्नं कर्मैव सकाममुपासते कुर्वन्ति, उत्तरत्र "विद्यायां रता" इत्युक्तेः "अविद्यया मृत्युं तीर्त्वे"त्युक्तेश्चाविद्यापदेन विद्याभिन्नं साधनं कर्मैव प्राप्तं श्रुतिषु द्विविधस्यैवाभिधानात् साधनस्य, ते ऽन्धं तमो दृष्टिक्षयकरमन्धकारमात्मज्ञानालोक-विरोधिस्थानं यान्ति। ये तु विद्यायां रता विद्यैकनिष्ठा ध्यानमात्रपरा नित्यनैमित्तिक-कर्माकुर्वाणाः केवलमात्मज्ञानसाधनं ध्यानमेव कुर्वन्ति ते ततो भूय इव अधिकतरमेव तमोऽन्धकारं पूर्वोक्तं विशन्ति प्राप्नुवन्ति, ते कर्मिभ्योऽपि हीना इत्यर्थः। सकामकर्मणां त्यागाद् ब्राह्मणादिगतीनामप्राप्तेरावश्यकानां च त्यागात् सत्त्वशुद्धेरभावाज् ज्ञानस्याप्य-सिद्धेर्दुष्टाश्ववदुन्मार्गगामिना मनसा विरुद्धस्यैवाचरणात् प्रत्यवायराशीनामेवोदयाद् घोर-तरस्यान्धकारमयस्य पश्वादियोनेः प्राप्तेः।

"यस्त्वविज्ञानवान् भवत्यमनस्कः सदाऽशुचिः।
न स तत्पदमाप्नोति संसारं चाधिगच्छति ॥" [कठ १।३।७] इति श्रुतेः।
"कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन्।
इन्द्रियार्थान् विमूढात्मा मिथ्याचारः स उच्यते ॥" [गीता ३।६]

इति श्रीभगवदुक्तेः।

"यस्त्वसंयतषड्वर्गः प्रचण्डेन्द्रियसारथिः।
ज्ञानविज्ञानरहितस्त्रिदण्डमुपजीवति ॥
सुरानात्मानमात्मस्थं निह्नुते मां च धर्महा।
अविपक्वकषायोऽस्मादमुष्माच्च विहीयते ॥"

अन्यदेवाहुर्विद्ययान्यदाहुरविद्यया ।
इति शुश्रुम धीराणां ये नस्तद् विचचक्षिरे ॥१०॥
विद्यां चाविद्यां च यस्तद् वेदोभयं स ह ।
अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते ॥११॥

इति श्रीभागवतोक्तेश्च [११।१८।४०-४१] । अतो विद्या कर्म च द्वयमेवानुष्ठेयमिति भावः । प्रकरणमिदं ज्ञानकर्मसमुच्चयस्यैव, "हिरण्मयेन पात्रेणे"त्युत्तरमन्त्रस्य ज्ञानकर्म्मसमुच्चयकारिणः प्रार्थनापरत्वेन मायिकैरपि बृहदारण्यके ऽत्रापि च व्याख्यातत्वात् । अत्र विद्या देवताज्ञानमिति ज्ञानकर्मणोः समुच्चयासहिष्णोर्यथाकथञ्चिद् व्याख्यानं हेयमप्रकृतत्वात्, "यस्तु सर्वाणि भूतानी"त्युपक्रमात् "विद्ययाऽमृतमश्नुते" इति वक्ष्यमाणाच्चात्मविद्याया एव प्रकृतत्वाद् विद्याकर्मणोः समुच्चयस्यैवात्र विवक्षितत्वात् केवलस्य कर्मणो ज्ञानस्य च निन्दा ज्ञेया। आत्मज्ञानकर्मणोः समुच्चयो भगवताप्युक्तः "योगयुक्तो मुनिर्ब्रह्म न चिरेणाधिगच्छति" "गतसङ्गस्य मुक्तस्य ज्ञानावस्थितचेतसः" इति मुक्तस्यापि कर्माचरणं कण्ठत एवोक्तम्। सूत्रकृताप्युक्तं "विहितत्वाच्चाश्रमकर्मापि" [ब्रह्मसूत्र ३।४।३२] "सहकारित्वेन च" [ब्रह्मसूत्र ३।४।३३] "अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात्" [ब्रह्मसूत्र ४।१।१६] इति। एतेन यदात्मैकत्वविज्ञानं तन्न केनचित् कर्मणा ज्ञानान्तरेण वाऽमूढः समुच्चिचीषतीति साटोपवाक्यं कर्मद्विषो हेयम् ॥९॥

तर्हि विद्याविद्ये शास्त्रोक्ते किमर्थं तत्राह—अन्यदेवेति। विद्यया आत्मज्ञानेनान्यदेव फलं मोक्षाख्यमाहुः "विद्ययाऽमृतमश्नुते" इत्युक्तेः। अविद्यया निष्कामकर्मणा चाग्निहोत्रादिनाऽन्यत् फलं पापक्षयरूपमाहुः "अविद्यया मृत्युं तीर्त्वे"त्युक्तेः, "तपसा किल्बिषं हन्ती"ति स्मृतेश्च। इति धीराणां ज्ञानिनां वचः शुश्रुम श्रुतवन्तो वयं ये धीरा नोऽस्मभ्यं तद् विद्याविद्ययोः फलं विचचक्षिरे व्याख्यातवन्तः ॥१०॥

तदेव फलं दर्शयति—विद्यामिति। विद्या ब्रह्मज्ञानं मोक्षहेतुरविद्या निष्कामकर्म च पापक्षयहेतुः तदुभयं पृथक्पृथक्फलदातृत्वस्वरूपं यो मुमुक्षुर्वेद गुरुशास्त्रोपदेशाभ्यां सम्यग् जानाति स ह स एव नान्य इन्द्रादिदेवतास्वरूपादिविमर्शकः कर्मणां स्वर्गादिप्रदत्वविमर्शकश्च, नात्र सहेत्येकपदं किन्तु भिन्नमेव, पूर्वोक्तयत्पदेन तत्पदस्यैवाकाङ्क्षितत्वात्। अविद्यया विद्याभिन्नेन निष्कामकर्मणाऽग्निहोत्रादिना मृत्युं मरणहेतुं पापं तीर्त्वा क्षपयित्वा "तपसा किल्बिषं हन्ती"ति स्मृतेः विशुद्धया बुद्ध्या ब्रह्मविद्यां लब्ध्वा तयाऽमृतमश्नुते मोक्षभाग् भवति। एवं ज्ञानं कर्म च द्वयमेव मोक्षकरं पुंसां, तत्र

अन्धं तमः प्रविशन्ति येऽसम्भूतिमुपासते ।

ततो भूय इव ते तमो य उ सम्भूत्यां रताः ॥१२॥

कर्मणां पापक्षयद्वारा चित्तशोधकतया ज्ञानोपकारकत्वं ज्ञानस्य चात्मसाक्षात्काररूपस्य मोक्षहेतुत्वं प्राप्तम् । मनुरप्येवमेतां व्याचष्ट —

"तपो विद्या च विप्रस्य निःश्रेयसकरं परम् ।

तपसा किल्बिषं हन्ति विद्ययाऽमृतमश्नुते ॥" [ १२।१०४ ] इति ।

तपश्च स्वस्वजातीयं कर्मेति तेनैवोक्तम् ।

"ब्राह्मणस्य तपो ज्ञानं तपः क्षत्रस्य रक्षणम् ।

वैश्यस्य तु तपो वार्ता तपः शूद्रस्य सेवनम् ॥" [ ११।२३५ ] इति ।

भगवताप्युक्तम्—

"यज्ञो दानं तपः कर्म न त्याज्यं कार्यमेव तत् ।

यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥" [ गीता १८।६ ] इति ।

मुक्तौ सर्वकर्मसन्न्यासस्यावश्यकत्वाभावान्नात्रोल्लेखस्तस्येति ज्ञेयम् । अत्र विद्यया देवताज्ञानेनामृतं देवतात्मभावमश्नुते इति व्याख्यानं वेदद्विषां बौद्धानामेव शोभते । मनुना श्रुतेरस्या व्याख्यायां तपसो ज्ञानस्य च कण्ठतो मोक्षहेतुत्वस्यैव दर्शितत्वात् । ब्रह्मविद्याया मोक्षहेतुत्वं च प्रसिद्धं "ब्रह्म वेद ब्रह्मैव भवति नास्याब्रह्मवित् कुले भवति तरति शोकं तरति पाप्मानं गुहाग्रन्थिभ्यो विमुक्तोऽमृतो भवति" [ मुण्डक ३।२।९ ], "यं ज्ञात्वा मुच्यते जन्तुरमृतत्वं च गच्छति" [कठ० २।६।८] इत्यादिश्रुतेः ।

"यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति ।" [ ईशा ६ ]

"तत्र को मोहः कः शोक एकत्वमनुपश्यतः ।" [ ईशा ७ ]

इत्यात्मज्ञानस्यैव प्रकृतत्वादप्रकृतत्वाच्च देवताज्ञानस्य । ज्ञानकर्मणोः समुच्चयासहिष्णुत्वमेवात्र बीजम् । तत्र च बौद्धसिद्धान्तहानिरिति सर्वकर्मसन्न्यासेन वेदोक्तकर्मजातात् प्रच्याव्य बौद्धानां योगे परमार्थसत्यशून्यतत्त्वोपास्तौ यथाकथञ्चित् प्रवर्तनमेव हृदयम् ॥११॥

इदानीं प्रलयभावनया वैराग्यमापाद्य जगत्कारणब्रह्मभावनया मोक्षोऽधिगन्तव्य इति विवक्षुरादौ केवलप्रलयसृष्टिभावकान् निन्दति—अन्धमिति । ये केवलम् असम्भूतिं प्रलयं "सम्भूतिं च विनाशं चे"ति वक्ष्यमाणात्, उपासते भावयन्ति, ते अन्धं तमः पूर्वोक्तं प्रविशन्ति प्रलयभावनया वैराग्यमात्रोदयाद् विनात्मज्ञानं वैराग्यमात्रेण मोक्षाभावात् । ये च विना वैराग्यं सम्भूत्यां तदुपासनायां रताः केवलं सम्भूतिं लौकिकसृष्टिमेवोपासते भावयन्ति पूर्वमुपासते इत्युक्तेः, ते तु केवलं विविधविचित्रभोज्योपभोग्यादिभावनया विषयरागप्राबल्याद् वैराग्याभावाच्च भूय एव तमः पूर्वोक्तं प्रविशन्तीत्यर्थः ।

अन्यदेवाहुः सम्भवादन्यदाहुरसम्भवात् ।
इति शुश्रुम धीराणां ये नस्तद् विचचक्षिरे ॥१३॥

सम्भूतिं च विनाशं च यस्तद् वेदोभयं सह ।
विनाशेन मृत्युं तीर्त्वा सम्भूत्यामृतमश्नुते ॥१४॥

"विभूतिं प्रसवन्त्वन्ये मन्यन्ते सृष्टिचिन्तकाः ।"

इति गौडपादोऽप्याह स्म । विभूतिर्विस्तारः प्रसवः सृष्टिः । नात्रासम्भूतिः प्रकृतिरविद्याख्या वाच्या । उत्तरत्र "सम्भूतिं च विनाशं चे"त्युक्तेः, वेदान्ते ब्रह्मण एव प्रकृतित्वात् "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्" [ब्रह्मसूत्र १।४।२३] इत्युक्ते बौद्धोच्छिन्नया मिथ्याऽविद्याया असिद्धेश्च । न च सम्भूतिर्हिरण्यगर्भादिः "सम्भूत्यामृतमश्नुते" इति वक्ष्यमाणात् । नच हिरण्यगर्भाद्युपासनयाऽमृतत्वप्राप्तिः शास्त्रेषूच्यते ॥१२॥

तर्हि किं तयोर्यथोक्तं फलं तत्राह—अन्यदेवेति । सम्भवात् सृष्ट्युपासनातोऽन्यदेव फलं मोक्षो भवतीत्याहुर्ज्ञानिनः, "सम्भूत्याऽमृतमश्नुत" इत्युक्तेः । असम्भवात् प्रलयभावनातश्चान्यदेव फलं वैराग्यमाहुर्ज्ञानिनः, "विनाशेन मृत्युं तीर्त्वे"त्युक्तेरिति ज्ञानिनां वचः शुश्रुम श्रुतवन्तः, ये नोऽस्मभ्यं तद् विचचक्षिरे व्याख्यातवन्तः ॥१३॥

एतदेव दर्शयति—सम्भूतिं चेति । सम्भूतिः सम्यग् भवनं सृष्टिः पृथिवीसृष्टि र्जलात्, जलसृष्टिस्तेजस इत्येवं क्रमेण जगतो मूलकारणं निमित्तोपादानं ब्रह्म यो वेद । तथाच श्रुतिः—"एवमेव खलु सोम्यान्नेन शुङ्गेनापो मूलमन्विच्छाद्भिः सोम्य शुङ्गेन तेजोमूलमन्विच्छ तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ सन्मूलाः सोम्येमाः प्रजाः सदायतनाः सत्प्रतिष्ठाः" [छान्दोग्य ६।८।४], "स य एषोऽणिमा ऐतदात्म्यमिदं सर्वं तत् सत्यं स आत्मा तत्त्वमसि श्वेतकेतो" [छान्दोग्य ६।८।७], "एवमेवेहाचार्यवान् पुरुषो वेद" [छान्दोग्य ६।१४।२] इति च । एवञ्च वेदान्तनये न लौकिकसृष्टिरुपास्या किन्त्वाचार्योपदेशात् पुनः पुनर्मूलसृष्टिपर्यन्तानुसन्धानेन सद्रूपब्रह्मोपासनया ब्रह्म वेदितव्यमित्यर्थः । विनाशं चेति । सम्भूतिवैपरीत्येनासम्भूतिमिति वक्तव्ये विनाशमुक्त्वा विनाश एवासम्भूतिरिति श्रुत्यैव दर्शितम् । एवञ्च तत्समभिव्याहारात् सम्भूतिश्च तद्विपरीता सृष्टिरित्यप्यायातम् । सृष्टानां क्षित्यादीनां विनाशमवश्यं प्रलयं चेत्यर्थः, तदुभयं सृष्ट्युपासनं मोक्षहेतुः प्रलयोपासनं च वैराग्यहेतुरिति पृथक्पृथक्फलदातृस्वरूपं यो वेद स एव विनाशेन प्रलयभावनया पूर्वम् "उपासते" इत्युक्तेः, मृत्युं विषयानुरागं पुनःपुनर्जन्ममृत्युहेतभूतमशेषदुर्गतिकरं तीर्त्वा समुच्छिद्य विषयेभ्यो विरज्येति यावत्, न तु सर्वकर्म-

हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम्।
तत्त्वं पूषन्नपावृणु सत्यधर्माय दृष्टये ॥१५॥
पूषन्नेकर्षे यम सूर्य प्राजापत्य व्यूह रश्मीन् समूह तेजः।
यत्ते रूपं कल्याणतमं तत्ते पश्यामि योऽसावसौ पुरुषः सोऽहमस्मि ॥१६॥

सन्न्यासं कृत्वा, सम्भूत्या तदुपासनया क्षित्यादिसृष्टिपरम्पराचिन्तया तन्निमित्तोपादानब्रह्मपर्यन्तोपासनया अमृतं मोक्षमश्नुते लभते ब्रह्मज्ञानद्वारेत्यर्थः। शास्त्रेऽस्मिन् "सन्मूलाः सोम्येमाः प्रजाः" इति सृष्टिद्वारैव ब्रह्मणो निर्देशात् तेनैव च शिष्यस्य ब्रह्मज्ञानोत्पत्तेर्दर्शनात् "तद्धास्य विजज्ञाविति विजज्ञाविति" [छान्दोग्य ६।१६।३] इति। प्रलयभावनया वैराग्यमुत्पाद्य चित्तस्य स्थैर्यात् सृष्टिभावनया च परमकारणब्रह्मोपासनया सार्वात्म्यदर्शनादपवर्गप्राप्तिरिति भावः। एवञ्च तयोरेकैकोपासनं विहाय समुच्चयोपासनमेव कार्यमिति दर्शितम्। पूर्वं ज्ञानकर्मणोः समुच्चयो भणितः, अत्र तूपासनद्वयस्यैवेति विशेषः। अत्र विनाशपदस्य कार्यपरतां सम्भूतिपदस्यासम्भूतिपरताममृतपदस्य प्रकृतिलयपरतां च कल्पयित्वा यथाकामव्याख्या वेदार्थापह्नव एव। शास्त्रेऽस्मिन् प्रकृतिलयस्यासिद्धेश्च ॥१४॥

साधनकलापसंशुद्धो मुनिः सूर्यमात्मदर्शनं याचते—हिरण्मयेनेति। हिरण्मयेन ज्योतिःस्वरूपेण पात्रेण शरावादितुल्येन सत्यस्य सूर्यमण्डलमध्यवर्तिनः परमात्मनो मुखम् उत्तमाङ्गत्वेन प्राधान्यात् तत्कीर्त्तनम्। दिव्यं स्वरूपमिति यावत्। अपिहितम् आवृतम्। हे पूषन् पोषणकारिन् सूर्य त्वं तत् पिधानम् अपावृणु अपसारय। किमर्थम्? सत्यधर्माय अक्षयधर्माय अक्षयधर्मश्चात्मदर्शनरूपं तस्मै। तदाह—दृष्टय इति। आत्मदर्शनस्य परमधर्मत्वमाह याज्ञवल्क्यः—"अयं च परमो धर्मो यद् योगेनात्मदर्शनम्" इति ॥१५॥

पूषन्निति। पूषन् स्थावरजङ्गमानां पोषणकारिन्! एकर्षे एको मुख्यश्चासौ ऋषिर्ज्ञानी-चेति तत्सम्बोधनम्। ज्ञानिप्रधान! यमयति लोकानिति यम! सूर्य विशिष्टगतिशील! सरति गच्छतीति व्युत्पत्तेः। प्राजापत्य प्रजापतेः कश्यपस्य पुत्र! रश्मीन् व्यूह अपसारय, तेजः समूह सङ्कोचय। ते तवान्तःस्थितं कल्याणतमं परममङ्गलमयं यद् रूपं हिरण्मयं पारमेश्वरं स्वरूपं "य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते" [छान्दोग्य १।६।६] इति श्रुतिप्राप्तं तद् रूपं तेऽनुग्रहात् पश्यामि योऽसावसौ पुरुषस्त्वदन्तःस्थः परमात्मा सोऽहमस्मि चिदात्मा त्वदंशत्वात्। "अंशो नानाव्यपदेशात्" [ब्रह्मसूत्र २।३।४२] इति न्यायात्। असावसाविति द्विर्वचनमादरार्थम्। पूषन्नित्यादि सूर्यपरमेव, प्रसिद्धेः ॥१६॥

वायुरनिलममृतमथेदं भस्मान्तं शरीरम् ।
ॐ क्रतो स्मर कृतं स्मर क्रतो स्मर कृतं स्मर ॥१७॥
अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान् ।
युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेम ॥१८॥

वायुरिति । देहान्तकाले मुमुक्षोरुक्तिरियम् । ममाध्यात्मं वायुरमृतं मृत्युहीनमनिलं महावायुं प्राप्नोतु "आभूतसंप्लवं स्थानममृतत्वं हि भाष्यते" इतिवदाप्रलयं स्थितत्वान्महावायोरमृतत्वं ज्ञेयम् । वायुरित्यध्यात्मभूतवर्गोपलक्षणं शरीरधारकत्वेन वायोः प्राधान्यात् तदुल्लेखः । "वायुना हि गौतम सूत्रेण संदृब्धानि" [ बृहदारण्यक ३।७।२ ] इति श्रुतेः । एवञ्चाध्यात्मिकाकाशादेरपि महाभूतप्राप्तिर्बोध्या । शरीरमिदं भस्मान्तं भवत्विति शेषः । ज्ञानकर्मसमुच्चयवतो गृहस्थादेरियमुक्तिः सन्न्यासिदेहस्य भस्मान्तत्वाभावात् । ओमिति ब्रह्मणो वाचकम्—

"एतद्ध्येवाक्षरं ब्रह्म एतद्ध्येवाक्षरं परम् ।
एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत् ॥" [ कठ १।२।१६ ]

इति श्रुतेः । ॐ क्रतो इति कर्मात्मनो ब्रह्मणः सम्बोधनं "यज्ञो वै विष्णुः पशवः शिपिः" [ तै० ब्रा० २।३।८।५ ] ति श्रुतेः,

"ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम् ।
ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना ॥" [ गीता ४।२४ ]

इति स्मृतेश्च ब्रह्मकर्मणोरभेदानुसन्धानेनाग्निहोत्राद्यनुष्ठानात् । मां स्मरेत्या बाल्यात् तवैव सेवनात् तत्प्रतिदानकालोऽयमुपस्थित इति भावः । एतेनापि ज्ञानकर्मणोः समुच्चय एव स्फुटीकृतः । कृतं यावज्जीवकृतं कर्मान्तरं च मम स्मर । आग्रहाद् द्विर्वचनम् ॥१७॥

हे अग्ने सुपथा शोभनेन मार्गेण पुनरावृत्तिशून्येनोत्तरायणरूपेण देवयानेन ब्रह्मप्राप्त्युपायेन राये परमसम्पद्-ब्रह्मप्राप्तये नय ब्रह्मलोकं प्रापय । हे देव द्युतिमय त्वं विश्वानि निखिलानि वयुनानि ज्ञानानि "माया वयुनं ज्ञानमभिख्ये"त्येकादशप्रज्ञानामानी"ति निघण्टुकोशात्, विद्वान् जानन् सर्वज्ञ इत्यर्थः । पुण्यकर्मणां देवयानस्य पथो ब्रह्मलोकस्य च ज्ञाता त्वं मां तेन पथा नय ब्रह्मलोकमित्यर्थः । अस्माकं जुहुराणं कुटिलं पुनःपुनः संसारप्रापकम् एनः पापं शत्रुं युयोधि अपसारय नाशयेति यावत् । ते तुभ्यं भूयिष्ठां बहुतरां नमउक्तिं प्रणतिवाचं विधेम वदामः । "कुर्वन्नेवेह कर्माणी"त्यादावन्ते च कर्मणो ज्ञानस्य च कीर्त्तनाज् ज्ञानकर्मसमुच्चयपरेयमुपनिषदिति ज्ञेयम् ॥१८॥

इति श्रीचारुकृष्णदर्शनाचार्यस्य कृतावीशावास्योपनिषन्मितभाष्यं समाप्तम् ।

---

# केनोपनिषत्

ॐ आप्यायन्तु ममाङ्गानि वाक् प्राणश्चक्षुः श्रोत्रमथो बलमिन्द्रियाणि च सर्व्वाणि सर्व्वं ब्रह्मौपनिषदं माहं ब्रह्म निराकुर्यां मा मा ब्रह्म निराकरोदनिराकरणमस्त्वनिराकरणं मेऽस्तु तदात्मनि निरते य उपनिषत्सु धर्म्मास्ते मयि सन्तु ते मयि सन्तु ।। ॐ शान्तिः शान्तिः शान्तिः ।

ॐ केनेषितं पतति प्रेषितं मनः केन प्राणः प्रथमः प्रैति युक्तः ।
केनेषितां वाचमिमां वदन्ति चक्षुः श्रोत्रं क उ देवो युनक्ति ।।१।।
श्रोत्रस्य श्रोत्रं मनसो मनो यद् वाचो ह वाचं स उ प्राणस्य प्राणः ।
चक्षुषश्चक्षुरतिमुच्य धीराः प्रेत्यास्माल्लोकादमृता भवन्ति ।।२।।

नित्यनैमित्तिकश्रौतस्मार्त्तकर्म्मकलापैः विशुद्धसत्त्वो मुमुक्षुः ब्रह्मप्रतिपित्सयाचार्य्यं ब्रह्मनिष्ठं विधिवदुपसन्नः पृच्छति—केनेति । केन प्रेषितं प्रवर्त्तितं मन इषितमभिलषितं विषयं पतति गच्छति ? इषितमिति च्छान्दसम् । मनसो गतिरभीप्सिते प्रसिद्धैव, सा केन प्रेरितस्य मनसो भवतीति पृच्छा । नह्यचेतनस्य गतिः स्वतः सिध्यति । दृश्यते हि चेतनाधिष्ठितस्यैव रथादेरचेतनस्य गमनम् । मनसोऽप्यचेतनत्वाद् भाव्यं चेतनाधिष्ठितत्वेनैव । स च चेतनः क इति प्रश्नार्थः । यद्यपि सुरापानपरदारसङ्गादावात्मनोऽनर्थकरेऽप्यनिष्टे प्रवृत्तिर्दृश्यते तथापि तत्र बलवत्तररागात् तदानीमिष्टत्वभ्रमादेव सा ज्ञेया । प्राणश्च प्रथम आद्यः प्रधानं वा केन प्रयुक्तः प्रेषितः प्रैति स्वविषये प्रसरति ? केनेषितां प्रेषितां वाचं वाणीमिमां प्रसिद्धां वदन्ति लोका इति शेषः । कश्च देवो द्युतिमान् चक्षुः श्रोत्रं च स्वस्वविषयेषु युनक्ति नियुङ्क्ते ? को देवः प्रवर्त्तकः प्राणिनां करणानामित्यर्थः ।।१।।

अत्रोत्तरमाहाचार्यः—श्रोत्रस्य श्रोत्रमिति । यद् ब्रह्म श्रोत्रस्य श्रवणेन्द्रियस्य श्रोत्रं यस्त्वया पृष्टं श्रोत्रादेः प्रवर्तकः क इति स आत्मैव । तथाहि शब्दग्रहणसमर्थं खल्विन्द्रियं श्रोत्रं कर्णः तद् यया शक्त्या शब्दं गृह्णाति सा शक्तिर्ब्रह्मण एव, ब्रह्मैव करोति स्वशक्त्या श्रोत्रं शब्दग्रहणक्षममिति ब्रह्मनिमित्तमेव भवति तस्य तत्त्वमित्यर्थः । यदि नाम स्वतः शब्दग्रहणक्षमं श्रोत्रं ब्रह्म प्रवर्त्तयतीत्यभविष्यत् तदा शब्दग्रहणे श्रोत्रस्यैव स्वसामर्थ्यमवाभोत्स्यत तन्मा बोधीति श्रोत्रस्य श्रोत्रमित्युत्तरं बोध्यम् । तथाच ब्रह्मैव स्वशक्त्या श्रोत्रं शब्दप्रकाशक्षमं करोति, श्रोत्रं श्रवणे प्रवर्त्तयति चेत्यर्थः । "यः श्रोत्रे तिष्ठञ्छ्रोत्रादन्तरो यं श्रोत्रं न वेद यस्य श्रोत्रं शरीरं यः श्रोत्रमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः" [बृहदारण्यक ३।७।१९ ] इति श्रुतेः । श्रुत्यन्तरं च "येन सूर्यस्तपति तेजसेद्धः" [ तै० ब्रा० ३।१२।९।७ ] इति । स्मृतिश्च—

"यदादित्यगतं तेजो जगद् भासयतेऽखिलम्।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्॥" [गीता १५।१२] इति।

एवमुत्तरत्रापि बोध्यम्। एवं यद् ब्रह्म मनसो मनः, ब्रह्मैव स्वशक्त्या मनः सङ्कल्पविकल्पयोः प्रवर्त्तयति, "यो मनसि तिष्ठन्...मनोऽन्तरो यमयति" [बृहदारण्यक ३।७।२०] इति श्रुतेः। यद् ब्रह्म वाचः वागिन्द्रियस्य वाचं वागित्यर्थः पूर्ववत्। अत्र प्रथमार्थे द्वितीया। एवं हि समन्वयः स्यात् "यो वाचि तिष्ठन्..वाचमन्तरो यमयति" [बृहदारण्यक ३।७।१७] इति श्रुतेः। प्राणस्य सर्वेन्द्रियाधिनेतुः। प्राणः स परमात्मा, ब्रह्मैव स्वशक्त्या प्राणं सर्वेन्द्रियप्राणने प्रवर्त्तयतीत्यर्थः। "यः प्राणे तिष्ठन्...प्राणमन्तरो यमयति" [बृहदारण्यक ३।७।१६] इति श्रुतेः चक्षुषश्चक्षुः स परमात्मेति पूर्ववत्। "यश्चक्षुषि तिष्ठंश्चक्षुषोऽन्तरो...यश्चक्षुरन्तरो यमयति" [बृहदारण्यक ३।७।१८] इति श्रुतेः। एवं घ्राणरसनत्वचामपि ज्ञेयम्। वाचमिति कर्म्मेन्द्रियमात्रोपलक्षणं न तेषामपि स्वातन्त्र्यं कार्य्ये। परस्ताद् देवताब्रह्मसंवादेनाप्येतदेव तल्लीलया प्रदर्शितम्। न चात्मा कूटस्थो निर्विशेषोऽकर्त्ता वा, वेदान्तेषु तथाविधवर्णनानुपलम्भात्। किन्तु केनाप्यनुपहितः स्वयमेव सर्वकर्मक्षमः करोत्यखिलं कर्म्मजातं स्वशक्त्या चिद्रूपेति तत्त्वम्। एवं धीराः प्रज्ञावन्तः सर्वत्रात्मान्वीक्षां कुर्वन्तोऽन्तकाले अतिमुच्य शरीरमत्यर्थं त्यक्त्वा। पुनर्देहसम्बन्धाभाव एवात्रातिशयो न तु श्रोत्राद्यात्मभावपरित्यागः प्रमाणाभावात्। "स एवं विद्वानस्माच्छरीरभेदादूर्ध्वमुत्क्रम्यामुष्मिन् स्वर्गे लोके सर्वान् कामानाप्त्वाऽमृतः समभवत्" [ऐतरेय २।६] "य एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते" [छान्दोग्य ८।३।४] "शतं चैका च हृदयस्य नाड्यस्तासां मूर्द्धानमभिनिःसृतैका। तयोर्ध्वमायन्नमृतत्वमेति" [कठ २।६।१३] इति श्रुतिभ्यः। स्वर्गलोकश्च परमानन्दमयो ब्रह्मलोक एव "सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता" [तैत्तिरीय २।१] "स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति तेन पितृलोकेन संपन्नो महीयते" [छान्दोग्य ८।२।१] इति श्रुतिभ्याम्। न च देहं त्यक्त्वाऽस्मिन्नेव लोके तिष्ठति किन्त्वस्माल्लोकात् पृथिव्यादिलक्षणाद् प्रेत्यार्च्चिरादिमार्गेण प्रकर्षेण गत्वा। पुनरावृत्त्यभाव एवात्र प्रकर्षः, "ब्रह्मलोकमभिसंपद्यते न च पुनरावर्त्तते" [छान्दोग्य ८।१५।१] "य एतदक्षरं गार्गि विदित्वाऽस्माल्लोकात् प्रैति स ब्राह्मणः" [बृहदारण्यक ३।८।१०] इत्यादिश्रुतेः। अमृता ब्रह्मस्वरूपा भवन्ति ब्रह्मलोके इति शेषः, "ब्रह्म वेद ब्रह्मैव भवति" "गुहाग्रन्थिभ्यो विमुक्तोऽमृतो भवति" [मुण्डक ३।२।९] इति श्रुतेः। न त्वस्माल्लोकात् पुत्रादिष्वहंममाभिमानलक्षणात् असिद्धे स्वस्य लोकत्वाभावात् "लोकस्तु भुवने जने" इति कोषात्। पूर्वमति-

न तत्र चक्षुर्गच्छति न वाग् गच्छति नो मनः ।
न विद्मो न विजानीमो यथैतदनुशिष्यात् ॥
अन्यदेव तद् विदितादथो अविदितादधि ।
इति शुश्रुम पूर्वेषां ये नस्तद् व्याचचक्षिरे ॥३॥

मुच्येति श्रोत्राद्यात्मभावं परित्यज्येति व्याख्यानादगत्यात्र पुत्रादिष्वहंममाभिमानलक्षणादित्यर्थः कृतः, अतिमुच्य प्रेत्येतिपदद्वयसत्त्वात् कथञ्चिद् विभज्य व्याख्यातम्, अतिमुच्येत्यस्यैव देहेन्द्रियपुत्रमित्रादिष्वहंममभावं परित्यज्येत्यर्थस्य युक्तत्वात्। तर्हि प्रेत्यास्माल्लोकादिति व्यर्थम्। अस्मन्मते तु जगतो जडत्वानित्यत्वशीतोष्णत्वक्षुत्पिपासारोगशोकादिकलुषितत्वात् तत्त्यागेन निरामयब्रह्मलोकगतिर्मुक्तानाम्। न च बौद्धानामिव विश्वप्रलयो मोक्षे। विस्तरस्त्वाकरेऽनुसन्धेयः। प्रेत्य व्यावृत्येत्यपि नार्थः, "यो वा एतदक्षरं गार्ग्यविदित्वाऽस्माल्लोकात् प्रैति स कृपणः, अथ य एतदक्षरं गार्गि विदित्वाऽस्माल्लोकात् प्रैति स ब्राह्मणः" [ बृहदारण्यक ३।८।१० ] इति श्रुतेः। अत्र प्रैति पदद्वयस्य गत्यर्थत्वमकामेनापि वाच्यम्। यथाकथञ्चिद् बौद्धनीतेः संरक्षणप्रयास एव यथाश्रुतार्थापलापे बीजम् ॥२॥

तत्र ब्रह्मणि चक्षुर्न गच्छति न प्रसरति वाक् न गच्छति न च मनोऽपि गच्छति। मन इति बुद्धेरुपलक्षणम्। वाक्चक्षुर्मनसां बलवत्तरत्वात् तेषां ब्रह्मणि गत्यभावे ऽन्येषामपि गत्यभाव इत्यर्थात् सिध्यति। ब्रह्मणः प्रकाशशक्त्यैव हि प्रकाशशक्तिमन्तीन्द्रियाणि प्रकाशयन्ति जडं विषयप्रपञ्चम्, यथाग्निस्फुलिङ्गो गृहकोणम्। न च स्फुलिङ्गो वह्न्यंशो वह्निशक्त्यैव शक्तिमान् सन् वह्निमपि प्रकाशयितुं क्षमः, तथा चक्षुरादयोऽपि ब्रह्मेत्यर्थः। तथाच श्रुत्यन्तरं "येनेदं सर्वं विजानाति तं केन विजानीयात्? विज्ञातारमरे केन विजानीयात्?" [ बृहदारण्यक ४।५।१५ ] इति। आह च श्रीभागवतम् [ ११।३।३६ ]—

"नैतन्मनो विशति वागुत चक्षुरात्मा प्राणेन्द्रियाणि च यथानलमर्चिषः स्वाः ॥" इति। अतो न विद्मो न मन्यामहे ब्रह्म कीदृशमिति, अतो न विजानीमो यथा येन प्रकारेण शिष्याय कश्चिदनुशिष्यादुपदिशेत्। विज्ञातं हि वस्तु शिष्यायोपदेष्टुं शक्यं ब्रह्मणस्त्वविज्ञातत्वादुपदेशानर्हत्वमित्यर्थः।

तथा तत् इन्द्रियाग्राह्यं ब्रह्म, विदितात् साकल्येन ज्ञानगोचरीभूताद् घटपटादेर्विषयजातादन्यत्, तर्हि खपुष्पायितं ब्रह्म विकल्पस्य वस्तुशून्यत्वात् "शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः" [योगसूत्र १।९] इति तल्लक्षणात्, खपुष्पस्य तुच्छस्य विदितादन्यत्वात्, नेत्याह—

यद् वाचानभ्युदितं येन वागभ्युद्यते ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥४॥

अविदितादधीति। अविदितात् साकल्येन ज्ञायमानात् कदापि कस्यापि कथमपि यन्न ज्ञानगोचरीभवति तथाभूतात् खपुष्पादेरधि अधिकं भिन्नमिति यावत्। यद्यपि विदुषां विदितमेव ब्रह्म, "दृश्यते त्वग्र्यया बुद्ध्या" [ कठ १।२।१२ ] "मनसैवेदमाप्तव्यम्" "य एवं वेदाहं ब्रह्मास्मि" [बृहदारण्यक १।४।१० ] इति श्रुतिभ्यः। न त्वविदितादव्याकृतात् वेदान्तनये तस्य तुच्छत्वात् परेषां च अहमज्ञ इत्यादिप्रमाणैः प्रत्यक्षानुमानार्थापत्तिभिर्विदितत्वाच्च। इत्येवंप्रकारमाश्चर्य्यमयं तद् ब्रह्मेति शुश्रुम श्रुतवन्तो वयं पूर्वेषामाचार्याणां वाक्यं य आचार्य्या नोऽस्मभ्यं तद् ब्रह्म व्याचचक्षिरे व्याख्यां चक्रुः।

सर्व्वेन्द्रियप्रवर्त्तकमेव तत्त्वं ब्रह्मेति प्रकरणप्रतिपाद्यम्, विदिताविदितभिन्नत्वेनापि दुर्लक्ष्यमेवाश्चर्य्यं तत्त्वं विवक्षितं श्रुत्या न तु हेयोपादेयाभ्यामन्यत् स्वात्मभूतं ब्रह्म लक्षितलक्षणापत्तेः। न चास्मिन् प्रकरणे उक्तं स्वात्मभूतं ब्रह्मेति, ब्रह्मणो भिन्नाभिन्न एव जीव इति वेदान्तसिद्धान्तः, "अंशो नानाव्यपदेशादन्यथा चापि" [ब्रह्मसूत्र २।३।४२] इति न्यायात् "भेदाभेदाभ्यामंशत्वावगम" इति तत्रैव व्याख्या च परेषाम् ॥३॥

श्रोत्रस्य श्रोत्रमित्यादिपञ्चकेन यदुक्तं तदेव विवृणोति—यद् वाचेति। यत् सर्व्वप्रकाशसामर्थ्ययुक्तं स्वप्रकाशं तत्त्वं वाचा शब्देनानभ्युदितमप्रकाशितम्, येन च प्रकाशमानेन चिदात्मना वाक् अभ्युद्यते प्रकाश्यते, "यं वाङ् न वेद··यो वाचमन्तरो यमयति" [बृहदारण्यक० ३।७।१७] इति श्रुतेः, तदेव वागिन्द्रियाग्राह्यं वागिन्द्रियप्रकाशकमेव तत्त्वं ब्रह्मेति त्वं विद्धि जानीहि। यदिदं वेदोक्तमादित्यमनआदिकमुपासते ब्रह्माध्यारोपेण सेवन्ते लोकाः, "आदित्यो ब्रह्मेत्यादेशः" [छान्दोग्य ३।१९।१] इति "मनो ब्रह्मेत्युपासीत" [छान्दोग्य ३।१८।१] "स यो नाम ब्रह्म त्युपास्ते" [छान्दोग्य ७।१।५] इत्यादिश्रुतिभ्यः। इदमादित्यादिकं न ब्रह्म, "मनो ब्रह्मेत्युपासीत" "स यो नाम ब्रह्मेत्युपास्ते" इत्यादिना ब्रह्मत्वेनोच्यमानमपि मनआदिकं ब्रह्मेति न विद्यात् तेषां प्रतीकत्वेनाध्यारोपितत्वादित्यर्थः। तदुक्तं "न प्रतीके न हि सः" [ब्रह्मसूत्र ४।१।४] इति, "अप्रतीकालम्बनान्नयतीति बादरायणः" [ब्रह्मसूत्र ४।३।१४] इति च। न च पुराणाद्युक्तविष्ण्वादिप्रतिमासूपास्यमानं ब्रह्माध्यारोपितं तस्य प्राणप्रतिष्ठावाहनादिभिः स्थापितत्वात्। प्रतिमादिषु ब्रह्मण एवोपास्यत्वेन तदुपासनाया ज्ञानकर्म्मसमुच्चयरूपत्वात्, प्रतीके तु मनआदेरेवोपास्यत्वात्

Vol. IV (about 400 pages)—29 storiettes, hymns from the Rigveda with commentary, छात्री versus छात्रा, पतत्र versus पत्र, Goethe's maxims (original German with Sanskrit translation), Saratchandra's Niṣkṛti, on Pāṇini's क्त, महाभाष्य, विश्रम versus विश्राम, सेवका versus सेविका, अन्योन्य, 11 humorous skits. Rs. 6/8/-.

Vol. V (about 400 pages) 16 storiettes, 4 long stories, 12 poems, humorous skits, discussions on परःशत, भ्रातृव्य, सूनृता, आक्रोदाऽनास्यविहरणे, on the Anubandhas, on grammatical gender, Sanskrit equivalent of "horse-power", Tagore's poems, Language as fossil history, on Sāyaṇa's Bhāṣya **The Sivasūtras and the Sanskrit Alphabet**, Patañjali's Mahābhāṣya, Hymns from the Avesta, etc., etc. Rs. 6/8/-

Vol. VI (about 400 pages) 5 storiettes, 2 long stories, 1 Bhāṇa, Derivations of अश्वतर and पुत्र, आनोभद्रीयसूक्त with various commentaries, explanation of the Madhusūkta, Kālidāsa and Bhavabhūti, Mahābhāṣya (pp. 33-136), Rasamañjarī, etc., etc. Rs. 6/8/-

Vol. VII (about 400 pages) **Technical Terms and Technique of Sanskrit Grammar—Samāsa, Kāraka and Vibhakti.** Kālidāsa and Bhavabhūti (5 instalments). Was Pāṇini a Communist? Kālidāsa and Shakespeare. Greek Proverbs (64 pages). On तरप् and तमप्. On सूनृत and भ्रातृव्य. Meaning of शफोरू. 9 storiettes, 3 long stories, मृगया in Sanskrit Drama, etc., etc. 6/8/-.

Vol. VIII (about 200 pages) Short stories, long stories, humorous skits, महाभाष्यरत्नमञ्जूषा. Meanings of Sanskrit proper names. Sanskrit stanzas and their parallels from European languages. Sanskrit equivalent of bread. Notes and Queries. Tagore's short story. On देवानांप्रियः. On the derivation of कार्मुक, On Abhinavagupta. On Śārṅgarava and Śāradvata. Tagore's Urvashi. Common Errors. **So-called Solecisms of Kālidāsa.** Rs. 3/8/-.

Vol. IX (nearly 300 pages). **So-called Solecisms of Kālidāsa.** Literary Parallels. Common Errors. Technical Terms of the Mugdhabodha. Tagore's story and poems. Contradiction in Terms. On the correct derivation of प्रवीण, सिकता etc. वाग्मी vs. वाग्ग्मी. बिभीषण versus विभीषण. On फ, ढ, ख, छ, घ in Pāṇini. A new stanza from Vyāḍi's Saṃgraha. Meaning of रद विलेखने. सतीर्थ्य versus सतीर्थ. The Anubandhas र, क, प, उ, ष in Pāṇini, **The Technical Terms—Upasarga, Nipata, Karmapravacaniya, Gati, etc. Apurva in Mimamsa.** In Defence of the Padapāṭha. On ऊकालोऽज्झ्रस्वदीर्घप्लुतः. On वामदेव्यं साम. रेफ versus रकार. Rs 6/-

MANJUSHA ( Sanskrit Monthly Magazine )
*Registered No. C. 3278*



Printed and published by Sri Visvanath Chatterjee, M.A. from 8 Bhupendra Bose Avenue, Calcutta-4. Printed at the Gupta Press, 37/7 Baniatola Lane, Calcutta-9.

चन्द्रशेखर चन्द्रशेखर चन्द्रशेखर पाहि माम्।
चन्द्रशेखर चन्द्रशेखर चन्द्रशेखर रक्ष माम्॥

श्रीशिवः शरणम्

पञ्चदश-वर्षे ] November, 1960 [ तृतीया संख्या

# मञ्जूषा

सम्पादकः—श्रीक्षितीशचन्द्र-चट्टोपाध्यायः

## अप्पाशास्त्रिणां पत्राणि

व्यतीते मासि मञ्जूषा ८८पृष्ठात्मिकासीदिति वर्तमानाङ्कः षोडशपृष्ठात्मकः प्रकाश्यते।

अचिराच्च मञ्जूषाया अप्पाशास्त्रिस्मृत्यङ्कः प्रकाशयिष्यते, तदर्थं वाचकमहाभागाः श्रीमदप्पाशास्त्रिणां जीवनवृत्तान्त-विषयक-प्रबन्धप्रेषणायाभ्यर्थ्यन्ते। येषां च सविधे राशिवडेकरमहोदयस्य पत्राणि वर्तन्ते ते कृपया मञ्जूषायां प्रकाशनार्थं तेषां प्रतिलिपिप्रेषणेनानुगृह्णन्तु नः।

"संस्कृत-चन्द्रिकां" "सूनृतवादिनीं" च यथोचितमूल्य-प्रदानेन क्रेतुं सन्नद्धा वयम्।

*Office :* 8, Bhupendra Bose Avenue, Calcutta—4.
Minimum Annual Subscription : Rupees Six only.
Foreign—Twelve shillings.
Single copy : One Rupee.

# मञ्जूषाया नियमावली

मञ्जूषाया वार्षिकं मूल्यमवरतो रूपकषट्कम् । आश्विन (September)-मासतो वर्षारम्भः । ग्राहकैर्वर्षस्य प्रथमसंख्यात एव ग्रहीतव्यम् ।

२। प्रतिसौरमासं दशमदिने (आङ्गलमासस्य चतुर्विंशे दिवसे) 8, Bhupendra Bose Avenue, Calcutta 4 इत्यतो मञ्जूषा प्रकाश्यते ।

३। मञ्जूषायास्तावद् भागत्रितयं वर्तते । तत्र प्रथमे भागे देवभाषां प्रविविक्षूणां कृते सरलाः श्लोका आभाणका आख्यानानि नाटकानि च सन्निवेश्यन्ते । द्वितीये भागे दार्शनिका निबन्धा व्याकरणालङ्कारादीनां विमर्शः पाठविचारो जिज्ञासा मीमांसा च प्रकाश्यन्ते । तृतीये भागे सानुवादाः पारसीकानां गाथाः साङ्ग्लानुवादं निरुक्तं च प्रकाश्यन्ते ।

*वामनस्य काव्यालङ्कारसूत्रवृत्तिः* (प्रयोगाधिकरणम्) विविधकाव्योदाहरणमण्डितविविधव्याकरणमतसमन्विताभिनवसुविस्तृतटीकोपेता ।( अतिदुर्लभा ) २॥)

**सिद्धान्तकौमुदी**—लीलावतीसहिता (प्रथमो भागः) । मूल्यं १)

| | |
|---|---|
| Upasarga and other Technical Terms | Rs. 1/4/- |
| Convocation Address in Ancient India | As. 12 |
| Popular Etymology— | Re. 1/- |

**ECONOMY IN SPEECH**—(Manjusha, May 1958). It is indispensable to students of languages. Re. 1/-

**Patanjali's MAHABHASHYA (Paspasha or Introduction) with English Translation, exhaustive critical and explanatory notes, commentaries etc. Second Edition. Rs. 4/-**

| | |
|---|---|
| ऋग्वेदीयम् आनोभद्रसूक्तम् (पञ्चभाष्यसमन्वितम्) | २॥० |
| শব্দকথা—সরস, সরল ভাষাতত্ত্ব | ২৲ |
| ঊষার আলো—ছোট ছোট হাসির গল্পের সমষ্টি— | ৸০ |
| নক্ষত্রমালা—ধর্মবিষয়ক শ্লোক, সরল ব্যাখ্যা ও অনুবাদ | ।/০ |

Several sets of Vols. IV, V, VI, VII, X, XI, XII, XIII and XIV (400 pp. each) of the Manjusha are still available for Rs. 6/8/- per volume and only a few sets of Vol. VIII (200 pages) Rs. 3/8/- only. Vol. IXRs. 6/-. Only a few sets in stock. Order at once.

**श्रीविश्वनाथ-चट्टोपाध्यायः ।**

Phone :—55-4049 ८, भूपेन्द्र वसु आभेन्यू, कलिकाता ४

शरणं तरुणेन्दुशेखरः शरणं मे गिरिराजकन्यका ।
शरणं पुनरेव तावुभौ शरणं नान्यदुपैमि दैवतम् ॥

# मञ्जूषा

November, 1960. | १८८२-शकीयाग्रहायणस्य १५श-वर्षस्य तृतीया संख्या | Vol. XV No. 3

## आभाणकमाला

१। विचित्ररूपाः खलु चित्तवृत्तयः। भारविः।

So many men, so many minds.
Latin. Quot homines, tot sententiae.
So many men, so many opinions.

यावन्तो मनुजास्तावन्ति मतानि। नासौ मुनिर्यस्य मतं न भिन्नम्।

French. Autant de têtes, autant d'avis.
German. Viele Köpfe, viele Sinne.

बहूनि शिरांसि बहूनि मनांसि।

German. Tausend Köpfe, tausend Sinne.

सहस्रं शिरांसि सहस्रं मनांसि।

२। भिन्नरुचिर्हि लोकः। कालिदासः

So many men, so many tastes.
Quot capitum vivunt, totidem studiorum milia. HORACE, *Satires* ii, 1.

३। क्वचिद्वीणावाद्यं क्वचिदपि च हाहेति रुदितं
क्वचिन्नारी रम्या क्वचिदपि जराजर्जरवपुः।
क्वचिद्विद्वद्गोष्ठी क्वचिदपि सुरामत्तकलहो
न जाने संसारः किममृतमयः किं विषमयः॥ भर्तृहरिः।

Here is the sound of lutes, there screams and wailing ;
Here winsome girls, there bodies old and failing ;
Here scholars' talk, there drunkards' mad commotion—
Is life a nectared or a poisoned potion ?

Latin. Totam aeque vitam miscet dolor et gaudium.

The whole of life is a mixture of grief and joy.

निखिलं जीवनं दुःखसुखयोः संमिश्रणम् ।

The web of our life is of a mingled yarn, good and ill together. SHAKESPEARE, *All's well that ends well.*

जीवनजालं सदसन्मिश्रोर्णातन्तुमयम् ।

---

## शान्तः

[ योगवासिष्ठे मुमुक्षुव्यवहारप्रकरणम् १३ ]

अनुद्धतमनाः शान्तः साधुः कर्म करोति यत् ।
तत् सर्वमभिनन्दन्ति तस्येमा भूतजातयः ॥
श्रुत्वा स्पृष्ट्वा च दृष्ट्वा च भुक्त्वा स्नात्वा शुभाशुभम् ।
न हृष्यति ग्लायति यः स शान्त इति कथ्यते ॥
यः समः सर्वभूतेषु भावि काङ्क्षति नोज्झति ।
जित्वेन्द्रियाणि यत्नेन स शान्त इति कथ्यते ॥

[ भावि सुखादि न काङ्क्षति प्रारब्धप्रापितं च नोज्झति । ]

स्पृष्ट्वावदातया बुद्ध्या यथैवान्तस्तथा बहिः ।
दृश्यन्ते यत्र कार्याणि स शान्त इति कथ्यते ॥

[ स्पृष्ट्वा ज्ञात्वापि परकौटिल्यादीनीति शेषः । मोक्षोपायतया कर्तव्यानि कार्याणि । ]

तुषारकरबिम्बाभं मनो यस्य निराकुलम् ।
मरणोत्सवयुद्धेषु स शान्त इति कथ्यते ॥

[ मरणोत्सवयुद्धेषु निराकुलं भयरागक्रोधैरसन्तप्तम् । ]

स्थितोऽपि न स्थित इव न हृष्यति न कुप्यति ।
यः सुषुप्तसमः स्वस्थः स शान्त इति कथ्यते ॥
अमृतस्यन्दसुभगा यस्य सर्वजनं प्रति ।
दृष्टिः प्रसरति प्रीता स शान्त इति कथ्यते ॥

योऽन्तः शीतलतां यातो यो भावेषु न मज्जति ।
व्यवहारी न संमूढः स शान्त इति कथ्यते ॥

[ भावेषु विषयेषु । व्यवहारी सन्नपि न मज्जति नासज्जते । ]

अप्यापत्सु दुरन्तासु कल्पान्तेषु महत्स्वपि ।
तुच्छेऽहं न मनो यस्य स शान्त इति कथ्यते ॥

[ महत्सु चिरकालिकेषु । तुच्छे मिथ्याभूते नश्वरे देहादौ यस्याहमिति मनो नास्ति । ]

आकाशसदृशी यस्य पुंसः संव्यवहारिणः ।
कलङ्कमेति न मतिः स शान्त इति कथ्यते ॥

[ कलङ्कं रागादिलेपम् । ]

तपस्विषु बहुज्ञेषु याजकेषु नृपेषु च ।
बलवत्सु गुणाढ्येषु शमवानेव राजते ॥

---

## मञ्जूषायाः प्रशस्तिः

[ साहित्याचार्यस्य पं० हेमचन्द्रशर्मणः ]

नमो भवद्भ्यो 'मञ्जूषा'-सम्पादकमहोदयाः !
बाढं, पत्रिकया सार्द्धं चत्वारोऽङ्काः समागताः ॥
विज्ञापयामि कैः शब्दैर्धन्योक्तीस्तत्कृतेऽधुना ।
यस्मादनुगृहीतोऽहं भवद्भिः पुनरेव च ॥
अधिविश्वं समस्तानां भाषाणामुपरि स्थिता ।
भाषाणां भारतीनान्तु साहित्ये भूषणायिता ॥
साहित्य-वेद-वेदान्त-बृहद्व्याकरणान्विता ।
पुराण-न्याय-मीमांसा-सांख्य-योगसमन्विता ॥
छन्दो-ज्योतिरलङ्कार-नाट्यादि-विषयाप्लुता ।
असीम-शब्द-सौन्दर्यसारयुक्ता मनोहरा ॥
भूमे भरतभूपस्य विभूतिरिव विश्रुता ।
किं न यच्छेत वाग्देवी कल्पवल्लीव सेविता ?॥
कोऽङ्कयेन्मूल्यमेतस्याः समग्रेऽपि महीतले ।
दुर्दैवस्य प्रभावेण राहुणा चन्द्रमा इव ।
म्लेच्छग्रहगृहीतेयं म्लानतामधुना गता ॥

शाश्वतीमपि जल्पन्ति प्रज्ञाहीना मृतेति ताम् ।
तस्यां सञ्जीवनं दातुं 'मञ्जूषा' यतते ध्रुवम् ॥
रत्नानि यानि वर्तन्ते समाच्छन्नानि संस्कृते ।
'मञ्जूषो'द्घाटिता तेषां प्रकाशायेति मन्यते ॥
आभाणकानां वैविध्यं, शब्दार्थानां विवेचनम् ।
सूक्तयः, शब्दवैचित्र्यं, वैशिष्ट्यं संस्कृतस्य च ॥
रूपं युगानुरूपेण सुरवाण्याः प्रकल्पनम् ।
कथाः, कवित्वं, निखिलं 'मञ्जूषायां' विलोक्यते ॥
महार्घमणिरत्नानां मञ्जूषेव महोज्ज्वला ।
प्रेक्षावद्भिः प्रेक्षणीया 'मञ्जूषा' सुरवाक्प्रियैः ॥
माहात्म्यं सुरभारत्याः प्रथयन्ती दिनेदिने ।
भारते मञ्जु-'मञ्जूषा' पोषणं जुषतां चिरम् ॥ इति ।

---

स्वर्गताप्पाशास्त्रिणां

# लावण्यमयी

## नवमः परिच्छेदः

## परिणयकौतुकम्

अथ व्यतिगतेषु केषुचिद् दिवसेषु सुनिश्चितः श्रीमता रमेशचन्द्रमहोदयेन लावण्यमयी-सुधाकरयोरुद्वाहः । न खलु साक्षाद्विदितमेतेन कुलं योगिन्याः । किन्तु 'कुतो वा महात्मनामेवंविधानां दुष्कुलेषु प्रभवः? न हि लवणाकरेषु चामीकरस्य निष्पत्तिः सन्दृष्टा ।' इत्येवमाकलयन् सम्भाव्यैव समुन्नतकुलोद्गतत्वं श्रीमत्या योगिन्याः प्रसन्नतमेन चान्तरङ्गेण प्रोत्साहित आत्मजामस्या लावण्यमयीं तनयेनात्मनो विवाहयितुमैहिष्ट । उपालभन्त खल्वाचरितेनामुना रमेशमहोदयं पुरोभागिनः केऽपि । न पुनरुपालम्भमेनं गणयाञ्चकार श्रीमान् रमेशमहाभागः । अयुक्तः खलु कर्मणामेवंविधानां कालातिपात इति च मन्यमानो निर्णीय विद्वत्तमैः ज्यौतिषिकैर्विवाहदिनं निमन्त्रणपत्रिकाः प्राहैषीत् । अथ शनैः शनैः समुपतिष्ठमानैर्निचितमिव निरन्तरं प्राघुणिकैः सदनं श्रीमतो रमेशस्य । समाहितनानाविधसंस्कारं चैतदपरमिव दिव्यमन्दिरं महोत्सवमयमिव मानवमयमिव ध्वनिमयमिव संसदसंरम्भमयमिव च व्यभासिष्ट । संकल्पितश्चात्र महोत्सवे महीयसो धनराशेरुत्सर्गो निसर्गौदार्येण श्रीमता रमेशमहाभागेन । सज्जीकृता अशेषाः साहित्यसम्भाराः ।

वितीर्णश्च सुसज्जितश्चारुतरोपवनवलयितः सौध आत्मीयो वरवधूपक्षीयाणां निवासाय श्रीमता रमेशेन। तेषामपि व्ययः स्वयमेव निर्वाह्य इत्यासीन्मनसि श्रीमतो रमेशस्य। योगिनी पुनर्नान्वमन्यतामुष्यैवंविधामभ्यर्थनाम्। 'यावच्छक्यं स्वयमेवाहमात्मनो व्ययं निर्वाहयिष्यामी'ति सनिर्बन्धमेवैषा प्रावोचत्। तत एव च शिथिलीचकाराभिनिवेश-मात्मीयं श्रीमान् रमेशमहाभागः। इत्थमेतदशेषमपि सङ्घटितप्रायम्। किन्तु कः पुनरत्र कन्यायाः प्रदातेति न किल केनापि विज्ञातम्। न चापि तत्र तदानीं तथाविधः कोऽपि सन्दृष्टो यस्य नाम कर्मण्यत्राधिकारः स्यात्। न चाप्येतद्विषये कोऽपि योगिनी-मनुयोक्तुं प्रागल्भत।

अवसरेऽस्मिन् सर्वत एवाप्रकाशं व्याहरल्लोका 'जघन्यजातीया किल योगिनी। एतस्याश्च तनयायाः कुमारेणात्मनः पाणिं ग्राहयता न किल साम्प्रतमनुष्ठितं श्रीमता रमेशमहाभागेन। एतेन हि समुन्मूलितमिव गौरवमात्मनः कुलस्य जातेश्च।' इति। नैव पुनर्व्यापारितं जनवादेऽस्मिन् मनः श्रीमता रमेशेन।

अथ समुपस्थिते विवाहदिने श्रीमान् रमेशमहोदयो यथासङ्कल्पितं महीयसा विभवेना-त्मनस्तनयस्योद्वाहमङ्गलं निर्वर्तयामास। अवसरेऽस्मिन् ध्वनिमयमिवाभवन्मङ्गल-वादित्रनिर्घोषैरशेषं नगरम्। आसीच्च महान् संमर्दः। कन्याप्रदानावसरे पुनः सह योगिन्या कोऽपि नातिधवलितश्मश्रुः समुल्लसता कनकपिङ्गलेनाप्यन्तरान्तरा मृणाल-तन्तुधवलेन जटाकलापेन समुद्भासितशीर्षः प्रसन्नगम्भीराकृतिः पुरुषः कोऽपि पीठमारूढः कन्याप्रदानविधिं विधातुमारेभे। तस्मिंश्च व्यापारितविलोचनो रमेशमहोदयः सपदि विस्मयस्तिमितः समभूत्। पुलकितानि चाप्यस्यासीयानि गात्राणि। नियन्त्रितेव चासीदिदानीं वागेतस्य। प्रादुरभूच्च सर्वाङ्गीणः कम्पः। अथ यथाकथमपि विनिर्वृत्ते प्रदानविधौ श्रीमान् रमेशमहोदयः समाहूय भार्यामप्राक्षीत्।

रमेशः। प्रेयसि! अपि जानासि कस्य वा तनया लावण्यमयीति?

सरला। अथ किम्? सा किल योगिन्या दुहिता।

रमेशः। कच्चिदाख्यातवती विशेषतः कमपि वृत्तान्तं योगिनी श्रीमत्यै?

सरला। न खलु कञ्चिदपि। एतावत्तु प्राह निर्वृत्ते परिणये विशेषतो वक्ष्यामीति।

रमेशः। कच्चिन्निपुणमवेक्षितः श्रीमत्या प्रदाता कन्यायाः?

सरला। किमत्र निपुणं द्रष्टव्यम्? स किल महात्मा योगीन्द्रः। अयमेव च श्रीमत्या लावण्यमय्याः पितृदेवः। एष एव च साकं योगिन्या परिभ्रमति।

रमेशः। (सानन्दगद्गदम्) परं सत्यं धुरि किलेदानीं भाग्यवतां वर्तामहे येनायं महात्मा नः सम्बन्धी संवृत्तः। प्रेयसि! यः किल नरपतिरस्मदीयस्यास्य ग्रामस्य स एव नन्वयं भूसम्पत्तिमान् श्रीयुतः शशिशेखरमहाभागः।

सरला। ( सविस्मयम् ) कथम्! नरपतिः शशिशेखरोऽयं महाभागः ?

रमेशः। कोऽत्र सन्देहः ? सुनिपुणं किल मया निरूप्यायमभिज्ञातः। अहो! अनुग्राह्याः किल वयं दैवस्य येनेदानीं नृपात्मजा नो वधूः संवृत्ता।

सरला। प्रभवति सर्वथा मनोरथो धातुः।

रमेशः। अनुयुज्यतां तावदत्रार्थे समधिगत्यावसरं निगूढमेव योगिनी श्रीमत्या।

सरला। यदादिशत्यार्यः।

अथोपगता योगिनीं स्वभावसरला श्रीमती सरला समधिगत्यावसरं दयितसमादिष्टमर्थमप्राक्षीत्। आकर्ण्य चानुयोगमेतस्या न्यवीविदद् यथावदशेषमप्यात्मनो वृत्तं योगिनी। 'यदा किल प्रादुरभूद्राज्ञि प्रत्यवस्थायिनां गरीयान् प्रक्षोभस्तदा भूयांस एवामीभिः प्राणैर्वियोजिता अस्मदीयराष्ट्रे पुरुषाः। सम्भावितश्चात्र दुर्दैववशादपराधीति नरपालः सार्वभौमेन। ततः प्रभृति च योगीन्द्रवेषप्रच्छन्नः सह सहधर्मिण्या देशाद् देशान्तरं परिभ्रमति। अन्यत्पुनर्विदितमेव नश्वरितं श्रीमत्याः। भद्रे! बहिश्चरमुच्छ्वसितं किल मदीयं भवतीत्यत एव श्राविता रहस्यमिदम्। तत्तथा खल्ववधीयतां यथा नायमर्थः प्रकाशतां विन्देत।

सरला। तन्महाराज्ञी चन्द्रप्रभा खलु भवती ?

योगिनी। अथ किम् ?

सरला। ( सहर्षगद्गदं पादयोः प्रणिपत्य ) क्षम्यतां महाभागे! अजानत्या किल मयासि भूयिष्ठमायासिता। नूनं प्रसन्न इदानीं मे भगवान्, येनायमेवंविधः स्पृहणीयतमः सम्बन्ध आवयोः सङ्घटितः।

योगिनी तु सरभसमुत्थाप्यैनां गाढं परिषस्वजे। यत्सत्यमगोचरः किलायं वाचां तदानीन्तनस्तयोः प्रमोदव्यापारः। स्वयमेव तावदयं स्नेहरसपेशलेन मनसा विभाव्यतां सहृदयप्रवरैः।

निवेदितमप्येतद्योगिन्या वृत्तमात्मीयं नासीद्विहाय केवलं श्रीरमेशमहाभागं कस्यापि श्रवणयोर्विषयः। ततः पुनः सविशेषमेव महोत्सवेन च वैभवेन च निर्वृत्तो विवाहविधिः। शनैः शनैश्च प्रशान्तो महोत्सवसंरम्भः, विसर्जिताश्च यथोचितं सम्भाव्य यथागतं सम्बन्धिनश्च प्राघुणिकाश्च श्रीमता रमेशमहाभागेन। न किल केनापि महोत्सवेऽस्मिन् भूपतया गृहीतो योगीन्द्रो नापि वा महाराज्ञीति सम्भाविता योगिनी। निरवधिः किलेदानीं समुज्जृम्भितः प्रमोदपूरः कृतार्थयोर्लावण्यमयी-सुधाकरयोः। प्लावितावेवेदानीं निरर्गलं समुच्छलता प्रणयरसेन तौ निरतिशयं सुखं निरविशताम्।

---

## उपसंहारः

अथ व्यपगतेषु कतिपयेषु दिवसेषु समवगत्य निरपराधितां प्रशंसित आघोषणपत्रिकया महाराजः शशिशेखरः श्रीमता सार्वभौमेन। प्रतिपादिता पूर्वमात्मसात्कृता निखिलापि भूसम्पदेतस्य। अवबुध्य चैतत्प्रत्यागतावुपरागविमुक्तसुधाकरविनिर्मलौ श्रीमन्तौ चन्द्रप्रभाशशिशेखरौ नगरमात्मीयम्। ज्यौतिषिकसमादिष्टे च शोभने मुहूर्ते समहोत्सवं मन्दिरमात्मनः प्राविशताम्। तदनु च कियन्तंचन कालमनुभूय महाराजपदसौख्यं प्रत्यासन्ने वार्धके विना सुकृतातिशयं सुदुर्लभतरं वाराणसीवासमरोचयताम्। प्रतिष्ठमानाभ्यां च त्रिभुवनपावनसलिलया श्रीमत्या सुरसरिता समुद्भासितां विश्वनाथपदपवित्रितां श्रीमतीं वाराणसीं भूयिष्ठ एवात्मनो विभव एकमात्रायै दुहित्रे श्रीमत्यै लावण्यमय्यै प्रादायि। निरमायि च वाराणस्यां विशालतममपरमिव हिमशैलशिखरं श्रीशिवायतनं किमप्येताभ्याम्। तत्रैव च क्षपयितुमुपक्रान्त आयुषः शेषः।

इतश्च श्रीमान् रमेशमहोदयोऽपि विचिन्त्य सांसारिकभारोद्वहनक्षमं तनयं सफलीकर्तुकामो जीवितमात्मीयमनुगतः श्रीमत्या सरलया वैराग्यमापन्नो मुक्तपुरीं प्रायासीत्। नियुक्तवांश्चात्मनः पदे प्रौढप्रायं श्रीमन्तं सुधाकरम्। सुधाकरोऽपि श्वशुरस्य च पितुश्च सम्पदं समासाद्य सुव्यवस्थामेवैनामासेवमानः सर्वोत्तरलावण्यसमुल्लसितया सदानुगतया सहधर्मिण्या श्रीमत्या लावण्यमय्या समं तांस्तान् भोगान् भुञ्जानः सम्पादयंश्च लोकोत्तरैः कर्मभिर्दिगन्तसञ्चारिणीं कीर्तिं सुखमुवास। येषां च प्रागासील्लावण्यमय्या आभिजात्ये सन्देहस्तेऽपि विदितपरमार्थाः परं प्रमोदमासादयामासुः। अन्तरान्तरा च सुधाकरः सह भार्यया समुपसृत्य श्वश्रूश्वशुरौ च मातापितरौ च सम्भावयामास। गृहीताशीश्च तदुपदिष्टमध्वानमनुशीलयामास। सम्भावितश्चायं नानाविधोपाधिप्रदानादिभिः सदाचरितप्रसन्नेन श्रीमता सार्वभौमेन। आसंश्चास्य सुधाकरस्य श्रीमत्यां लावण्यमय्यां त्रिचतुराण्यनुरूपाण्यपत्यानि। एवं च समुपचिता सर्वतः श्रीः सुधाकरमहाभागस्येति शिवम्।

श्रीसदाशिवसमर्पणमस्तु।

---

## भूमिका

इह खलु जगति विद्यमानानां प्रायेण निखिलानामपि भाषाणां प्रकृतिभूता श्रीमती संस्कृतैव भाषेति समस्वरमेवैतत् स्वीक्रियते सर्वैः। किन्तु भाषान्तरेष्विव नास्यां भूयांसि गद्यकाव्यानि सन्दृश्यन्ते। गरीयांश्च प्राचां पद्यकाव्यप्रणयो न प्रावर्तयद् गद्यप्रणयने प्रायेणैतान्। संप्रति पुनर्गद्यकाव्यानां विशेषतश्च नव्ययैव शैल्या विरचितानामास्वाद एकान्तत एवोन्मुखानि भूयसामेव संस्कृतविदां हृदयानि। तदवश्यं पूरणीयोऽयममीषां

मनोरथ इति विचिन्तयद्भिरुपक्रान्तमिदानीं नव्यशैलीसमुद्भासितानां गद्यकाव्यानां प्रणयनं तत्तद्देशवासिभिर्विद्वद्भिः। प्रणीतानि च संसारचक्र-युगलाङ्गुरीय-प्रभृतीनि हृदयहारीणि गद्यकाव्यानि।

नव्यशैलीसमुल्लसिताश्च यावन्तो नामेदानीं भारते वर्ष उपन्यासास्तेषु वङ्गीयेन श्रीमता बङ्किमचन्द्रमहाशयेन संग्रथिता एव सर्वोत्तमा इत्यनेकेषां गद्यकाव्यमर्मविदामर्वाचीन-रसिकानामभिप्रायः। अत एव च तेनैव सन्दब्धमिदं लावण्यमय्यभिधानं गद्यकाव्यं संस्कृतभाषयानूद्य प्रियपाठकमहोदयेभ्यः समुपहृतमस्माभिः।

अत्र यद्यदनुचितमस्मद्देशीयाचाराणां यच्च विरुद्धमिव श्रीमतः सनातनस्य धर्मस्य तदेतदशेषमपि यथामति परिवर्तितमस्माभिः।

अवशिष्टाः पुनरत्र संस्करणे मुद्रणदोषाः केऽपि। ते च सति प्रसङ्ग आगामिनि संस्करणेऽवश्यं निराक्रियेरन्।

भवतु प्रयासोऽयमस्मदीयः प्रियपाठकमहोदयानां परितोषायेति शिवम्।

विनीतः प्रणेता

श्रीअप्पाशर्मा विद्यावाचस्पतिः।

---

# निपातनम्

कश्चनाध्यापकः पृच्छति—

Prin. Vaman Shivaram Apte's Sanskrit-English Dictionary पुस्तके दृश्यते—यल्लक्षणेनानुत्पन्नं तत् सर्वं निपातनात् सिद्धम् Mbb. इति। महाभाष्ये कुत्रैतद्वचनं वर्तते कृपया विलिख्यताम्।

## उत्तरम्

जयादित्यस्येदं वचनं न तु भाष्यकारस्य। तथाहि छन्दसि निष्टर्क्येति-सूत्रे [३।१।१२३] काशिकायां दृश्यते—यदिह लक्षणेनानुत्पन्नं तत् सर्वं निपातनात् सिद्धमिति। मुग्धबोधव्याकरणस्य मनीषाः [ ३४ ] इति सूत्रस्य टीकायां रामतर्कवागीशेन प्रमादादुक्तं—तथाच भाष्ये यल्लक्षणे-नानुत्पन्नं तत् सर्वं निपातनात् सिद्धमिति। तत्रैव दुर्गादासविद्या-वागीशेनाप्युक्तं—यल्लक्षणेनानुत्पन्नं तत् सर्वं निपातनात् सिद्धमिति भाष्यमिति।

## आकारप्रश्लेषः

पाणिहाटितः श्रीमत्सुहृत्कुमारभादुडो पृच्छति—नाज्झलाविति सूत्र आकारप्रश्लेषेण को लाभः अच्त्वेनैव दीर्घादीनां क्रोडीकारसिद्धेः ऊकालोऽज्ह्रस्वदीर्घप्लुत इति सूत्रेऽच्शब्देन ह्रस्वदीर्घप्लुतानां सर्वेषामचामविशेषेण ग्रहणात्। इति।

## उत्तरम्

न केवलमर्धमात्रालाघवेन पुत्रोत्सवं मन्यन्ते वैयाकरणाः, प्रश्लेषयोगविभागादिभिरपि पुत्रोत्सवं मन्यन्ते। टीकाकृद्भिर्महता यत्नेन प्रदर्शितं नाज्झलाविति सूत्रे वार्णसमाम्नायिकानामेवाचां ग्रहणं न पुनरणुदित्सूत्रप्राप्तानाम् इति। तत्र च ज्ञापकः कालसमयवेलासु तुमुन्निति सूत्रे वेलास्विति निर्देशः। परं तेनैव निर्देशेन नाज्झलाविति सूत्रेऽच्पदेन सर्वेषामेवाचां ग्रहणं न केवलं वर्णसमाम्नायगतानामित्यपि ज्ञापयितुं सुशकं प्रमाणानां सामान्ये पक्षपातात्।

## नतः नन्तुम्

भवानीपुरतः काचनाध्यापिका पृच्छति -- "नम्धातोः क्तप्रत्यये 'नतः' इति पदं भवति, तुमुन्प्रत्यये नतुम् वा स्यात् नन्तुम् वा ?" इति।

## उत्तरम्

वैयाकरणानां मतेन क्तप्रत्ययस्य कित्त्वात् तस्मिन् परे "अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति" [ ६।४।३७ ] इति नमतेरनुनासिकलोपः। तुमुन्-प्रत्ययस्य कित्त्वाभावात् सूत्रस्यास्य न प्रवृत्तिः। "नश्चापदान्तस्य झली"ति मोऽनुस्वारे, "अनुस्वारस्य ययि परसवर्णः" इत्यनुस्वारस्य नत्वम्। शाब्दिकानां मतेन क्तप्रत्यये प्रत्ययाद्युदात्तत्वाद् धातोरनुदात्तत्वाद् अकारलोपे नकारस्य च sonant-भावे तस्य चाकारे नतपदं सिध्यति। तुमुन्प्रत्ययस्य नित्त्वात् तुमुन्नन्तधातोराद्युदात्तत्वात् स्वरलोपाद्यभावः।

---

# वानरवैद्याः

स्टेट्समान्-पत्रे (Aug. 10, 1960) श्रीहरीन्द्रसिंहेन लिखितम्—

आसीत् कतिभ्यश्चिद् वर्षेभ्यः पूर्वं देरादुनपत्तनस्थारण्यगवेषणसंस्थायां कश्चन मालाकारः। स हि समित्युद्यानसमवेतेषु वानरेषु सविशेषं स्नेहवान् भक्तिमांश्चासीत्। स खलु तेभ्य आमिक्षामददात्, ते च प्रीतिपूर्वकं तां स्वीचक्रुः। एकदा कश्चन नवीनाध्यक्षः समितिसदनं सम्प्राप्तः। तस्य हि वानरेषु विद्वेष एवासीत्। स मालाकारमुवाच, समुत्सार्यन्तामिमे वानरा इति। मालाकार उवाच, आर्य, अतीव शान्ता इमे वानराः, लेशतोऽपि पादपानामनिष्टं नाचरन्ति। तन्न युज्यत एषामितो निःसारणमिति। अध्यक्ष उवाच, आमिक्षायां विषं संमिश्रय वानराणामन्तं विधेहीति। मालाकारः कथमपि तन्न सममंस्त।

ततश्चाध्यक्षप्रवरोऽपरं कमपि स्वोपदेशपालनाय समादिदेश। यदा च विषसंपृक्तामिक्षा प्रदत्ता तदा वानराः किमप्यनिष्टमुत्प्रेक्षमाणा अपससृः। व्यतिगते होरार्धकल्पे काले केचन वृक्षशाखया सह प्रत्यागत्यामिक्षां तया व्याघुट्य पाणिभ्यां वीजयामासुः, अन्ततश्चाध्यक्षस्तांस्तामामिक्षां भुञ्जानान् दृष्ट्वा परमं प्रमोदमवाप। सोऽमन्यत, इदमेवैषामन्तिमसागमनमिति। परं परेद्युरपि तान् समागतान् दृष्ट्वा स नितरां विस्मितोऽभवत्। ततः प्रभृति यदैवामिक्षा विषसंमिश्रा विधीयते स्म तदैव वानरास्तयैव रहस्यमय्या शाखया पूर्ववदेवाचरन्ति स्म। अध्यक्षस्य च क्लेशस्य सीमा नासीत्।

अथैकदा तरुकुलसमारोपव्याप्रतो मालाकारो भुजङ्गमेन दष्टः, स च "अब्रह्मण्यम्! अब्रह्मण्यम्!" इति मुक्तकण्ठं चुक्रोश। ततोऽसौ गृहं नीतः, वैद्यानयनाय च पुरुषः प्रेषितः। वैद्येनोक्तम्—प्राणापहारीदं दंशनमिति। मालाकारश्च दंशनेन तेनोपरत इति प्रतीयते स्म। यावच्च मालाकृतः स्वजनाः शवशय्यां सज्जयन्ति तावत् सपदि शून्यादिव प्रादुर्भूताः कतिचन वानराः। ते शवाधारमुपसृत्य मालाकृतो मुखं नासारन्ध्रे चाजिघ्रन्। यूथाधिपतेः सङ्केतेनैकदा वानरा वृक्षेषु प्रत्यावृत्य होरार्धत ऊर्ध्वं कतिचित् पत्राण्यादाय प्रत्यागत्य तानि मालाकृतस्तनौ निजघृषुः। ततश्च तस्य शरीरे प्राणाः प्रत्यावृत्ताः।

---

# भूतकरः

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

प्रियवाचकमहाभागाः, अतीतमस्माकमतीव मनस्तोषकरमिति भूतकरणविषये किञ्चिद्विलिखितम्। अद्य तस्य यमजभ्रातरं भूतकरमधिकृत्य किञ्चिदुच्यते। अनयोश्च भूतकरणस्यैव ज्येष्ठत्वमनुमीयते विकरणादिसादृश्यात्।

अथर्वप्रातिशाख्ये भूतकरणार्थं भूतकरशब्दस्य समुल्लेखो दृश्यते। तथाच तत्र पठ्यते—दुर्द्वयोर्भूतकरस्य लोप इति। अस्यार्थः—

पुनस्त्वा दुरप्सरसः पुनरिन्द्रः पुनर्भगः।
पुनस्त्वा दुर्विश्वे देवा यथानुन्मदितोऽससि ॥ [ अ० ६।१११।४ ]

इति निगमद्वये भूतकरणापरनाम्नो भूतकरस्याटो लोप उपलभ्यत इति।

---

# हृद्पिण्डस्य सहोदरौ

"रविवासरीय आनन्दबाजार पत्रिका"यां ( १९ शे भाद्र, १३६७ ) हृद्पिण्डस्य सोदरद्वितयं सन्दृष्टम्। तत्र प्रथमतः सम्पादकप्रबन्धे "विपदसङ्केत" नयनपथमापतितम्, ततश्च पुस्तकपरिचयप्रसङ्गेन "एतद्सत्त्वे" पदं प्रादुर्भूतम्।

---

# पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

## *मनोस्तत्त्वविद्, प्रातःराश-, वयोःज्येष्ठा, इतःस्ततः*

सुप्रसिद्धः खलु विक्रीतगवीरक्षणन्यायो भारते वर्षे। न खलु गौर्युगपद् विक्रेतुं रक्षितुं च शक्यते।

आङ्गलभाषायामाभाणको वर्तते—You cannot both eat your cake and have it न खल्वपूपं युगपद् भक्षयितुं संरक्षितुं च प्रभवसीति। फरासीसैरप्युच्यते—On ne peut pas avoir le drap et l'argent न खलु वस्त्रमपि क्रेतुं धनमप्यव्ययितं रक्षितुं च शक्यते इति। A.C. Benson-महोदयेनोक्तम्—There still remains the intensely human instinct which survives all the lectures of moralists—the desire to eat one's cake and also to have it इति। वङ्गभाषायामप्युच्यते—गडाढरचण्ड़ेर मत दुधओ खावे टामाको खावे ( गदाधरचन्द्र इव युगपद् दुग्धमपि पिबेत् ताम्रकूटधूममपि पिबेत् ) इति।

तन्नैतदाश्चर्यं यद् "रविवासरीय आनन्दबाजारपत्रिका"यां "रविवासरीय आलोचन्यां" ( २२शे श्रावण, १३६७ ) क-पृष्ठे दृश्येत—सामान्य किछु प्रातःराश सेरे यखन ओपरे एलुम् फ्रिटज तखनओ अगाध घुमुच्छे ( अल्पं प्रातराशं समाप्य यदोपर्यागच्छं तदापि फ्रिटज अगाधनिद्रामग्न आसीत् ) इति। प्रातःराशशब्दोऽयमानन्दबाजारपत्रिकाया अतीव प्रियः। पुनरपि रविवासरीयपत्रिकायां ( २रा आश्विन, १३६७, पृः च स्तः ३ )

अचिन्तनीयस्तम्भेऽचिन्तनीयोऽयं शब्दः साक्षात्कृतः। प्रातःसन्ध्या-शब्दे विसर्गो विद्यते, प्रातर्भोजन-शब्दे रेफो दृश्यते, प्रातःराशशब्दे विसर्गोऽपि विलसति रेफोऽपि विराजति। एवमेव गाथाः =आवेस्तायां गाथाओ। परं गाथाश्च=आवेस्तायां गाथाओसच।

"रविवासरीय आनन्दबाजारपत्रिका"यां दृश्यते—मनोस्तत्त्वविद् डा० म्याकजर्ज (१५इ श्रावण १३६७, पृः च, स्त० ३) इति। अचिन्तनीय-प्रबन्धे आपातदृष्ट्याऽऽचिन्तनीयमिदं पदं वर्तते। वस्तुतस्तु यथा लेशतोऽप्येतन्नाचिन्तनीयं तथाङ्गलफरासीसवाङ्गालाभाणकैः प्रतिपादितम्। शाब्दिकानां मतेन—

मनस्तत्त्व+मनोविद्=मनोस्तत्त्वविद्।

"रविवासरीय आनन्दबाजारपत्रिका"यां दृश्यते—ए पाडार मध्ये सर्वापेक्षा वयोःज्येष्ठा कातुपिसी (२९शे श्रावण १३६७, पृः ङ) पल्ल्यामस्यां सर्वेषु "वयोःज्येष्ठा" कातुपितृष्वसा इति। वयःकनिष्ठ+वयोज्येष्ठ=वयोःज्येष्ठ।

"रविवासरीय आनन्दबाजारपत्रिका"यां (१९शे भाद्र १३६७, पृ० ङ, स्त० १) दृष्टम्—इतःस्तत इति। इतः पूर्वम्+इतस्ततः=इतः स्ततः।

सर्वमेतत्प्रमापयति बेनसन्महोदयस्य वचनस्य सत्यताम्।

---

## पुनरपि "संज्ञा"

साहित्येर सर्वप्रधान एवं सर्वप्रथम संज्ञा हल बहु मनके आयत्त करा (साहित्यस्य सर्वप्रधाना सर्वप्रथमा च संज्ञा तावद् बहूनां मनसामायत्तीकरणम्) इति। आ० बा० प० (२२।४।६१, पृः क)।

---

## अस्तौषीत्

निरुक्तस्य स्कन्दमहेश्वरवृत्तौ (९।६) दृश्यते—अनावृष्ट्यपहते किल जीवलोके वसिष्ठो वर्षार्थी पर्जन्यमस्तौषीत् (पृः १४७) इति! अत्र कुम्भकर्णे भकारोऽस्तीति न्यायेनास्तौषीत्पदं प्रयुक्तम्। स्तुसुधूञ्भ्यः परस्मैपदेष्विति स्मृतेरस्तावीत्पदमेव व्याकरणानुयायि।

श्रु : अश्रौषीत् :: स्तु : $x$

$\therefore$ $x$ = अस्तौषीत्।

---

# आशीः

सा ते भवतु शत्रूणां या गतिः श्रूयते क्विपः ।
सार्धं बन्धुभिरङ्गस्य या परस्मैपदे सिचि ॥

सुभाषितरत्नकोशः १४५३ ।

क्विपः ककारस्य लशक्वतद्धित इतीत्संज्ञायां तस्य लोप इति लोपो भवति । वि-भागस्य च वेरपृक्तस्येति लोपो जायते । अङ्गस्य सिचि वृद्धिः परस्मैपदेष्विति वृद्धि र्भवति । मुद्रितपुस्तके "मा ते भवतु शत्रूणां या श्रुतिरि"ति पाठः, स च व्यक्तमेव प्रामादिकः ।

---

# व्योमनि चित्रकल्पना

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

नि येन मुष्टिहत्यया नि वृत्रा रुणधामहै । त्वोतासो न्यर्वता ॥ [ ऋ० सं० १।८।२ ] इत्यत्र भाष्यकृता सायणाचार्येण विलिखितम्—

ननु तिङ्ङतिङ इति निघातेन भवितव्यम् । न । द्वे ह्यत्र तिङ्विभक्ती । निविडया मुष्ट्या निरुणधामहा इत्यत्र श्रुतैका । अर्वता निरुणधामहा इत्यत्रानुषक्ता द्वितीया । तयोः समुच्चयार्थश्चकारो लुप्यते । तेन चादिलोपे विभाषेति प्रथमेयं तिङ्विभक्तिर्न निहन्यते । यथा नात्मना तृप्यति नान्यस्मै ददाति [ तै० सं० २।५।४।३ ] इत्यत्र हि समुच्चयार्थस्य च-शब्दस्य लोपात् तृप्यतीति प्रथमा तिङ्विभक्तिर्न निहन्यते, ददातीति द्वितीया तु निहन्यत एव । ननु तत्र द्वे तिङ्विभक्ती श्रूयेते, इह पुनरेकैव श्रुता । सैवोत्तरत्रानुषज्यते नान्या श्रूयत इति द्वितीयाभावात् कथमियं प्रथमा? न । अनुषङ्गलब्धद्वितीयापेक्षमपि प्राथम्यमुपजीव्य निघातनिषेधदर्शनात् । "पुरोडाशं चाधिश्रयत्याज्यं च" "प्रोक्षणीश्चासादयत्याज्यं च" [ तै० सं० १।६।९।३-४ ] इत्यत्र ह्यधिश्रयत्यासादयतीत्याख्यातयोः प्रथमवाक्यद्वयश्रुतयोरुत्तरवाक्यद्वयेऽनुषङ्गमपेक्ष्यैव प्राथम्यस्वीकारेण चवायोगे प्रथमेति निघातनिषेधो दृष्ट इति । इति ।

सर्वमेतदभित्तिचित्रायितम्, अत्र यद्वृत्तान्नित्यमिति नित्यमेव निघातप्रतिषेधात् ।

---

# क्रिया केवलमुत्तरम्

(Statesman, July 24, 1885)

कतिचिद्दिनानि यावत् कलिकाताया बडबाजारविभागे मल्लविद्यापारदर्शी कश्चन वीरो मल्लक्रीडानैपुण्यं प्रदर्श्य दर्शकानां मानसान्यावर्जयति । तत्र चैकदा पानमत्तः कश्चन मत्सरग्रस्तो मोहमदीयस्त्रिभिः सजातीयैः सह रङ्गभूमिमनुप्राप्य सामाजिकान् सम्बोध्यावदत्

काममयं विशालवपुः स्थूलकायश्च परमस्य स्थौल्यानुरूपं सामर्थ्यं वर्तते वा न वेत्यत्र गरीयान् मे संशय इति। तच्छ्रुत्वा मल्लतल्लजः किमप्यनुक्त्वा मोहमदीयं ग्रीवायां गृहीत्वा शून्ये विधृतवान्। सामाजिकाश्च परमं प्रमोदमवाप्तवन्तः।

---

## विप्रतिषिद्धम्

Sunday Statesman पत्रे (July 24, 1960) James Cowley-महोदयस्य London Notebook इत्यत्र दृष्टम्—these undesirable "come-overs" should be taught *a* sharp *lessons* इति। अस्मदीयेन पण्डितम्मन्येन केनचन ज्ञातिनापि प्रायेण प्रतिदिनमेवोच्यते—आज एकटा चमत्कार *articles* लिखेछि (अद्य खलु परमसुन्दरमेकं प्रबन्धान् व्यरचयम्) इति।

---

## अहो औत्तराधर्यम्

मनोमोहनमहोदयस्य सहधर्मिणी प्रातरुत्थाय यावद् बहिरागच्छत्, तावत्कश्चन विक्रेता प्रविश्यावदत्, आर्ये! दृश्यतामियं वैद्युतसम्मार्जनी। अनया खल्वल्पीयसैवानेहसा गृहभूम्यादीनां सम्मार्जनं सम्पद्येत। एतदर्थं लेशतोऽपि प्रयासो नापेक्ष्यते इति। मनोमोहिन्या किमपि वक्तुं प्रयतितं परं विक्रेतुर्वदनकुहरसमुत्सारितशब्दप्रवाहपरिप्लाविता सा वर्णमात्रमप्युच्चारयितुमवसरं नालभत। अन्ते च यदा श्वासग्रहणार्थं स मुहूर्तकालं व्यरमत्, तदा गृहिण्योक्तम्—वर्तत एवास्मदीयभवने सम्मार्जनीयम् इति। तच्छ्रुत्वा क्षणं प्रतिपत्तिमूढो विवर्णवदनोऽसावनिमेषदृष्ट्या तां विलोक्याचिरादेव प्रकृतिमापन्नोऽवदत्—किमिति प्रथमत एवैतद् भवत्या नोक्तम्? किमिति समयस्य मेऽपचयो विहितः? इति।

---

## विषवैद्यस्य वैशारद्यम्

कलिकाताया उपकण्ठे श्रीरामपुरे सुशान्तदोलुइसमाख्यो दशवर्षो बालोऽगष्टमासस्य त्रिंशे दिवसे प्रातः सर्पेण दष्टो द्रुतं धावित्वा गृहं प्राप्तः, तत्र च विचेतनोऽवस्थितः। स सर्वथोपरत इति सर्वेषां प्रतीतिरासीत्। ततश्च सन्निहिताद् ग्रामात् कश्चन विषवैद्यः (ओझा) समानीतः। तेन च बालस्य नासारन्ध्रयोरधस्तादोषधयो धृताः मन्त्राश्च समुच्चारिताः। होराया अनन्तरं बालोऽसौ प्रथमतः सञ्चचाल ततश्चोत्तस्थौ। (Statesman, August 31, 1960)

---

# स्वरसंज्ञाविमर्शः

( पूर्वतोऽनुवर्तते )

तावत्सम्पर्केण वायुनाभिव्यक्तो गानस्वरः प्रथमः, तस्य षड्ज इति नाम। तदुक्तं नारदशिक्षायाम्। नासां कण्ठमुरस्तालु जिह्वां दन्तांश्च संश्रितः। षड्भिः सञ्जायते यस्मात्तस्मात् षड्ज इति स्मृतः॥ इति। नारदीयशिक्षा पूर्वमुक्तैव। तत ऊर्ध्वं क्रमेणासावुद्गच्छन्द्वितीयेन वृत्तेन मण्डलगतद्वितीयभागेनोदेति। तस्य द्वितीयभागस्य वैशिष्ट्येनार्द्धाधिकमण्डलभागस्योदयेन कुमेरौ तावान्भाग उदितः सुमेरौ तावतो भागस्यादर्शनेन स्वल्प एव भागोऽस्तार्थमवशिष्टो भवति। तत्र कुमेरौ भूयसो भागस्योदयेन तत्रोदितस्यादित्यस्य ऋषभत्वेन वर्णनाया मन्त्रे प्रतिपादनादयं भूयान् भागोऽपि ऋषभत्वेनोच्यते इति तच्छब्दस्यादिममक्षरमृइत्यस्योच्चारणसौकर्याय रेभावं कृत्वा तदादिममक्षरमेतस्य द्वितीयस्वरस्य नामत्वेन व्यवह्रियते। कुमेरावुदितस्य ऋषभशब्देन बोधनं मन्त्रे। स च मन्त्रः—चत्वारि श्रृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य। त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यां आ विवेश॥ इति। अत्र महतो देवस्यादित्यस्य मर्त्येष्वावेशवर्णनेन तस्य कुमेरुसम्बन्धिना वृषभशब्देन तस्य ग्रहणं कृत्वा मन्त्रे वृषभस्वभावानुरोधेन रोरवीतीति रोरूयमाणत्वमुच्यते। अयमेव प्रकारो नारदीयशिक्षायामुक्तः। वायुः समुत्थितो नाभेः कण्ठशीर्षसमाहतः। नदत्यृषभवद् यस्मात्तस्मात्स ऋषभः स्मृतः॥ इति। अयं कुमेर्वभिप्रायेणोर्ध्वं भासमानोऽपि सुमेर्वभिप्रायेण षड्जापेक्षयोच्च एव भवतीति। तत ऊर्ध्वं क्रमेणोद्गच्छंस्तृतीयेन वृत्तेन मण्डलगतेन तृतीयेन भागेन पूर्णतयोदितो भवति। आदित्यस्योदयार्थमस्तमयार्थं च सुमेरुकुमेर्वभिप्रायेण परिक्रमत्रयापेक्षेति पूर्वं विस्तरान्निरूपितम्। परिक्रमस्यैव च पूर्वपश्चिमवृत्तरूपतेत्युक्तमेव। एवं चासौ पूर्णतयोदितः, तत्र गवां किरणानां प्रवेशः। आदित्यस्योदयोत्तरं तत्र किरणाः प्रविष्टा भवन्तीत्ययमर्थ आजिवर्णनेन बहुषु स्थलेषु वेदे प्रतिपाद्यते, तदपि वर्णितं विस्तरेण। एवञ्चासौ मण्डलस्य तृतीयभागो गवां धारक इति तस्य गांधारशब्देन व्यवहारः। गोशब्दाभेदेन लौकिकीनां गवामसौ प्रिय इति तच्छब्देन वचनं नारदीयशिक्षायाम्। तदुक्तं—गावः प्रगीते तुष्यन्ति गान्धारस्तेन हेतुना। श्रुत्वा चैवोपतिष्ठन्ति सौरभेया न संशयः॥ इति। अयमपि तृतीयस्थानत्वं प्राप्तः सुमेर्वभिप्रायेणोच्च एव भवति। तदभिप्रायेण हि तत्रास्तं गच्छद्बिम्बमधो गच्छतीति प्रतीतिः। तत्र प्रथमो भागः पूर्वमस्तं गतोऽधस्तात्ततो द्वितीयो भागस्तदुपरिष्टात्तृतीयोऽपि तदुपरिष्टाद्भवतीति प्रतीतेः। अत एवैतरेये [१८।५] "तस्य वै देवा आदित्यस्या स्वर्गाल्लोकादवपातादबिभयुस्तं पञ्चभी रश्मिभिरुदवयन्नि"त्यादिना तस्य रश्मिभिरुद्वयनस्य वर्णनम्। यथा

कुमेर्वभिप्रायेणोदयस्तदानीमेव सुमेर्वभिप्रायेण तस्यास्तमयः सोऽपि सुमेरौ पूर्वापरवृत्तत्रयेण क्रमेण भवति। तयोर्भेदाभिप्रायेणोभयोरुभयत्वेन कल्पितयोर्बिम्बयोर्मध्ये भेदकोऽव्यक्ततेजःसंवलितप्रदेशकल्पनया स तेजोभागो द्वयोरस्तोदितबिम्बमध्यवर्तित्वेन कल्पनया मध्यमो भवतीति तस्य मध्यमस्वरत्वम्। अत एव स्वराणां गाने देवताविशेषसम्बन्धाभिप्रायेण नारदीयशिक्षायामुच्यते। अग्निगीतः स्वरः षड्ज ऋषभो ब्रह्मणोच्यते। सोमेन गीतो गान्धारो विष्णुना मध्यमः स्वरः॥ इति। तत्र पूर्वोक्तरीत्या गाथातोर्गमनार्थत्वेन "अग्निगीत" इत्यनेन षड्जवर्णनप्रकारेण स वायुरग्नौ गीतोऽग्निगत इत्यग्निभावं प्राप्त इति वर्णनम्। तत्रैवाग्निगीतोऽग्निना गीत इति कल्पना। अग्नेरप्यादित्यत्वेनाग्निगीत इत्यस्याग्निभावप्राप्तिवर्णनस्यैवौचित्यात्। आदित्यस्यास्तं यतोऽग्निभावप्राप्तिरग्नौ प्रवेश इत्यादिवर्णनानामप्ययमेवार्थ उचित इति। एवं सति अग्निभावप्राप्तिरग्निगीत इत्यनेन तत्र षड्जस्वर इति। एवं मध्यस्थाने बिम्बस्य ब्रह्मभावप्राप्तिः सैव च ब्रह्मणागीतत्ववचने उच्यते। एवं संपूर्णोदितबिम्बदशायां कुमेरौ तृतीयस्य गान्धारस्य स्वरस्य सोमभावप्राप्त्या सोमगीतत्वमुच्यते। एवं मध्ये कल्प्यमानाव्यक्ततेजोरूपस्य बिम्बशेषभागस्य वा विष्णुरूपप्राप्तिर्विष्णुगीतेत्युच्यते। अत एव बिम्बस्य दण्डनिपातनन्यायेन वृत्तमाने द्वयोर्निपात्ययोस्तत्त्वेन कल्प्यमानयोर्बिम्बयोर्मध्ये कल्प्यमानान्तरारूपस्याव्यक्तस्य तेजस आज्यशब्देन ग्रहणं कृत्वा तदाज्यरूपं द्रव्यं तेजो वा विष्णोरुपांशुयागे द्रव्यत्वेन दर्शपूर्णमासादिषूक्तं संगच्छते। आज्यशस्त्रादिस्थले आज्यशब्दनिर्वचनस्य ब्राह्मणोक्तस्य "यदाजिमायंस्तदाज्यानामाज्यत्वम्" [ ता० ७।२।१ ] इत्यस्य विवेचनावसरे विस्तरेण प्रपञ्चितमन्यत्र। एवञ्चासौ मध्यमस्वरो विष्णुगीतो विष्णुभावापन्न इत्यादिकमुच्यमानं संगच्छते। एवञ्च मध्यमस्वरस्य विष्णुरूपत्ववर्णनादव्यक्ततेजःस्थले विष्णोः सम्बन्धस्य वर्णनेन मध्येकल्पितान्तरास्वरस्य मध्यमत्वम्। सोऽप्युक्तषड्जापेक्षयोच्च एव। ततः कुमेर्वभिप्रायेणोदितस्य सुमेर्वभिप्रायेणास्तं यद्बिम्बाभिप्रायेण त्रयः स्वराः। तथाहि पूर्वापरवृत्तेन प्रथममस्तं यद्बिम्बभागः स पञ्चमस्थानत्वं प्राप्तः पञ्चमस्वर इत्युच्यते सोऽपि मध्यमापेक्षयोच्च एव। एवं द्वितीयेन पूर्वापरवृत्तेनास्तमितो बिम्बस्य द्वितीयो भागः स धैवत उच्यते। एतस्य धैवतत्वेन वचने निमित्तं नारदशिक्षायामुच्यते। निर्ह्रासो यस्य वृद्धिश्च ग्राममासाद्य सोमवत्। अतिसन्धीयते यस्मादेतान्पूर्वोत्थितान् स्वरान्। तस्मादस्य स्वरस्यापि धैवतत्वं विधीयते॥ इति। (क्रमशः)

## अप्पाशास्त्रिराशिवडेकराणां पत्राणि

येषां सविधे स्वर्गतानामप्पाशास्त्रिराशिवडेकराणां संस्कृतभाषामयाणि पत्राणि वर्तन्ते ते कृपया मञ्जूषायां प्रकाशनार्थं तेषां प्रतिलिपीः प्रेषयन्त्विति सनिर्बन्धमभ्यर्थयामहे।

# Manjusha

Vol. IV (about 400 pages)—29 storiettes, hymns from the Rigveda with commentary, छात्री versus छात्रा, पतत्र versus पत्र, Goethe's maxims ( original German with Sanskrit translation), Saratchandra's Niṣkṛti, on Pāṇini's क्त, महाभाष्य, विश्रम versus विश्राम, सेवका versus सेविका, अन्योन्य, 11 humorous skits. Rs. 6/8/-.

Vol. V (about 400 pages) 16 storiettes, 4 long stories, 12 poems, humorous skits, discussions on परःशत, भ्रातृव्य, सूनृता, आजो दाऽनास्यविहरणे, on the Anubandhas, on grammatical gender, Sanskrit equivalent of "horse-power", Tagore's poems, Language as fossil history, on Sāyaṇa's Bhāṣya. **The Śivasūtras and the Sanskrit Alphabet.** Patañjali's Mahābhāṣya, Hymns from the Avesta, etc., etc. Rs. 6/8/-

Vol. VI (about 400 pages) 5 storiettes, 2 long stories, 1 Bhāṇa, Derivations of अश्वतर and पुत्र, आनोभद्रीयसूक्त with various commentaries, explanation of the Madhusūkta, Kālidāsa and Bhavabhūti, Mahābhāṣya (pp. 33-136), Rasamañjarī, etc., etc. Rs. 6/8/-

Vol. VII (about 400 pages) **Technical Terms and Technique of Sanskrit Grammar—Samāsa, Kāraka and Vibhakti.** Kālidāsa and Bhavabhūti (5 instalments). Was Pāṇini a Communist? Kālidāsa and Shakespeare. Greek Proverbs (64 pages). On तरप् and तमप्. On सूनृत and भ्रातृव्य. Meaning of शफोरू. 9 storiettes, 3 long stories, मृगया in Sanskrit Drama, etc., etc. 6/8/-.

Vol. VIII (about 200 pages) Short stories, long stories, humorous skits, महाभाष्यरत्नमञ्जूषा. Meanings of Sanskrit proper names. Sanskrit stanzas and their parallels from European languages. Sanskrit equivalent of bread. Notes and Queries. Tagore's short story. On देवानांप्रियः. On the derivation of कार्मुक, On Abhinavagupta. **On Śārṅgarava and Śāradvata.** Tagore's Urvashi. Common Errors. **So-called Solecisms of Kālidāsa.** Rs. 3/8/-.

Vol. IX (nearly 300 pages). **So-called Solecisms of Kālidāsa.** Literary Parallels. Common Errors. Technical Terms of the Mugdhabodha. Tagore's story and poems. Contradiction in Terms. On the correct derivation of प्रवीण, सिकता etc. वाग्मी vs. वाग्ग्मी. बिभीषण versus विभीषण. On फ, ढ, ख, छ, घ in Pāṇini. A new stanza from Vyāḍi's Saṁgraha. Meaning of रद विलेखने. सतीर्थ्य versus सतीर्थ. The Anubandhas ट, क, प, उ, ष in Pāṇini, **The Technical Terms—Upasarga, Nipata, Karmapravacaniya, Gati, etc. Apurva in Mimamsa.** In Defence of the Padapāṭha. On ऊकालोऽज्झ्रस्वदीर्घप्लुतः. On वामदेव्यं साम. रेफ versus रकार. Rs 6/-

MANJUSHA ( Sanskrit Monthly Magazine )
*Registered No. C. 3278*

# आनोभद्रीयं सूक्तम्

पञ्चभाष्यसमन्वितम् ।

The most inspiring hymn in the Rigveda (i. 89) with five commentaries in Sanskrit inclding a modern one unfolding the significance of each word and expression, English translation, copious English notes etc., etc. Price : Rs. 2/50.

# ईशोपनिषद्

*edited for B. A. Students by*

**Kshitishchandra Sastri**

**Vidyāvāchaspati**, M. A., D. Litt.

*In the Press*

## Greek Proverbs

( For Students of Sanskrit )

with their Latin analogues and exhaustive explanation in English of all the Greek and Latin forms, parallel proverbs from Sanskrit, Bengali, Hindi and Marathi. Indispensable to all students of language. Rs. 2/-

# "संस्कृतचन्द्रिका" "सूनृतवादिनी"

"संस्कृतचन्द्रिका" ( विशेषतश्चतुर्दशवर्षस्य पञ्चदशवर्षस्य च ), "सूनृतवादिनी" चापेक्ष्येते अस्माभिः । तदर्थमुचितं मूल्यमपि प्रदीयेत । कृपया मञ्जूषा-सम्पादक-सविधे विलिख्यताम् ।

Wanted to buy "Sanskrita Chandrikā" and Sūnṛta-vādinī. Please write to the Editor, Manjusha giving details.

**VISVANATH CHATTERJI**
**8, Bhupendra Bose Avenue,**
CALCUTTA—4
Phone : 55-4049

Printed and published by Sri Visvanath Chatterjee, M.A. from 8 Bhupendra Bose Avenue, Calcutta-4. Printed at the Gupta Press, 37/7 Baniatola Lane, Calcutta-9.

चन्द्रशेखर चन्द्रशेखर चन्द्रशेखर पाहि माम्।
चन्द्रशेखर चन्द्रशेखर चन्द्रशेखर रक्ष माम्॥

श्रीशिवः शरणम्

पञ्चदश-वर्ष ] February, 1961 [ षष्ठी संख्या
USHA MEMORIAL NUMBER

# मञ्जूषा

सम्पादकः—श्रीक्षितीशचन्द्र-चट्टोपाध्यायः

## सूचिः



## अप्पाशास्त्रिणां पत्राणि

अचिरादेव मञ्जूषाया अप्पाशास्त्रिस्मृत्यङ्कः प्रकाशयिष्यते, तदर्थं वाचकमहाभागाः श्रीमदप्पाशास्त्रिणां जीवनवृत्तान्त-विषयक-प्रबन्धप्रेषणायाभ्यर्थ्यन्ते। येषां च सविधे राशि-वडेकरमहोदयस्य पत्राणि वर्तन्ते ते कृपया मञ्जूषायां प्रकाशनार्थं तेषां प्रतिलिपिप्रेषणेनानुगृह्णन्तु नः।

*Office* : 8, Bhupendra Bose Avenue, Calcutta—4.
Minimum Annual Subscription : Rupees Six only.
Foreign—Twelve shillings.
Single copy : One Rupee.

# मञ्जूषाया नियमावली

मञ्जूषाया वार्षिकं मूल्यमवरतो रूपकषट्कम् । आश्विन (September)-मासतो वर्षारम्भः । ग्राहकैर्वर्षस्य प्रथमसंख्यात एव ग्रहीतव्यम् ।

२। प्रतिसौरमासं दशमदिने (आङ्ग्लमासस्य चतुर्विंशे दिवसे) 8, Bhupendra Bose Avenue, Calcutta 4 इत्यतो मञ्जूषा प्रकाश्यते ।

३। मञ्जूषायास्तावद् भागत्रितयं वर्तते । तत्र प्रथमे भागे देवभाषां प्रविविक्षूणां कृते सरलाः श्लोका आभाणका आख्यानानि नाटकानि च सन्निवेश्यन्ते । द्वितीये भागे दार्शनिका निबन्धा व्याकरणालङ्कारादीनां विमर्शः पाठविचारो जिज्ञासा मीमांसा च प्रकाश्यन्ते । तृतीये भागे सानुवादाः पारसीकानां गाथाः साङ्लानुवादं निरुक्तं च प्रकाश्यन्ते ।

*वामनस्य काव्यालङ्कारसूत्रवृत्तिः* (प्रयोगाधिकरणम्) विविधकाव्योदाहरणमण्डितविविधव्याकरणमतसमन्वितामिनवसुविस्तृतटीकोपेता ।( अतिदुर्लभा ) २॥)

**सिद्धान्तकौमुदी**—लीलावतीसहिता (प्रथमो भागः) । मूल्यं १)

Upasarga and other Technical Terms — Rs. 1/4/-

Convocation Address in Ancient India — As. 12

Popular Etymology— — Re. 1/-

**ECONOMY IN SPEECH**—(Manjusha, May 1958). It is indispensable to students of languages. Re. 1/-

**Patanjali's MAHABHASHYA (Paspasha or Introduction) with English Translation, exhaustive critical and explanatory notes, commentaries etc. Second Edition. Rs. 4/-**

ऋग्वेदीयम् आनोभद्रसूक्तम् (पञ्चभाष्यसमन्वितम्) २॥०

শব্দকথা—সরস, সরল ভাষাতত্ত্ব ২৲

ঊষার আলো—ছোট ছোট হাসির গল্পের সমষ্টি— ৸০

নক্ষত্রমালা—ধর্মবিষয়ক শ্লোক, সরল ব্যাখ্যা ও অনুবাদ ।/০

Several sets of Vols. IV, V, VI, VII, X, XI, XII, XIII and XIV (400 pp. each) of the Manjusha are still available for Rs. 6/8/- per volume and only a few sets of Vol. VIII (200 pages) Rs. 3/8/- only. Vol. IXRs. 6/-. Only a few sets in stock. Order at once.

श्रीविश्वनाथ-चट्टोपाध्यायः ।

Phone :—55-4049 ८, भूपेन्द्र वसु आभेन्यू, कलिकाता ४

शरणं तरुणेन्दुशेखरः शरणं मे गिरिराजकन्यका ।
शरणं पुनरेव तावुभौ शरणं नान्यदुपैमि दैवतम् ॥

# मञ्जूषा

February, 1961. | १८८२-शकीयफाल्गुनस्य १५श-वर्षस्य षष्ठी संख्या | Vol. XV No. 6

## आभाणकमाला

१। विषकुम्भं पयोमुखम् ।

वङ्गीयः। भितरे गरल, बाइरे सरल ।

अन्तर्गरलं बहिः सरलम् ।

वङ्गीयः। मुखे खुब मिठे, निमनिसिन्दे पेटे ।

मुखेऽतिमधुरमन्तर्निम्बकं सिन्दुवारकम् ।

The sting is in the tail.

शङ्कुस्तावत्पुच्छे वर्तते ।

French. A la queue gît le venin.

लाङ्गूले वर्तते विषम् ।

Youthful lusts and worldly delights...carry honey in their mouths, but they have a sting in their tails. WILLIAM SECKER.

यौवनसुलभाः कामाः पार्थिवाश्च प्रमोदा मुखे मधु बिभ्रति, पुच्छेषु पुनस्तेषां शङ्कुर्वर्तते ।

२। Too many cooks spoil the broth.

The more cooks, the worse potage (broth).

German. Zu viele Köche verderben den Brei.

French. Trop de cuisinières gâtent la sauce.

यत्रातिबहवः दास्तत्र सूपस्य दुर्गतिः ।

( वङ्गीयः ) एक हँसेले तिन राँधुनी पुडे मरे तार फेन-गाळुनी ।

युगपत् पाचिकास्तिस्रो यद्येकस्मिन्महानसे ।
फेनस्य गालिका तत्र दाहेन मृत्युमाप्नुयात् ॥

अनेक सन्न्यासीते गाजन नष्ट ।

बहुभिक्षुर्हता यात्रा ।

३ । Beggars must not be choosers.

भिक्षाकैः किमपि न प्रत्याख्यातव्यम् ।

वङ्गीयः । भिक्षार चाल तार आवार काँड़ा आर आकाँड़ा ।

को वा भिक्षालब्धे तण्डुले कुट्टिताकुट्टितविचारः ?

व । मोटे मादुर नाइ, तार उत्तर शिउरि ।

व । मूले नेइ मादुरी तार उत्तर शियरी ।

कट एव नास्ति तत्र को वोत्तरशिरस्त्वादिविचारः ।

व । मोटे मा राँधे ना तार तप्त आर पान्ता ।

न जातु पचते माता कोष्णं पर्युषितं किनु ।

Beggars and Borrowers must be no chusers (choosers.). T. FULLER.

French. Il ne choisit pas qui emprunte.

ऋणमिच्छता किमपि न प्रत्याख्यातव्यम् ।

French. Faute des souliers, on va nu-pieds.

पादुकाभावे नग्नपादाभ्यामेव व्रजति मनुजः ।

---

# वेदार्थविमर्शः

( पूर्वतोऽनुवर्तते )

दक्षिणस्यामुक्तवृत्ते गमनावधिस्थाने एकं पादं न्यस्यति तत्र स्थितस्य तस्य स प्रथमः पादविन्यास इति कल्पना ततोऽन्तरा विषुवबिन्दुक्रान्तिबिन्दुसम्पातस्थले स्थितः स तस्य द्वितीयः पादविन्यासस्तत उत्तरस्यां दिशि याम्योत्तरवृत्ते गमनावधिस्थाने तृतीयः पादविन्यासः । एवमसौ गच्छन् द्रुतगतिपुरुषस्यैकक्रमादूर्ध्वं द्वितीयक्रमन्यासावसरे तदीयस्वाभाविकगतिस्थले पादद्वयन्यासे यावन्तं भूभागं न्यासद्वयमध्ये परित्यजति तदपेक्षयाऽधिकभूभागः परित्यक्तो भवतीति तस्य द्रुतगतित्वम् एवमसावादित्यो दक्षिणत उत्तरां गच्छन् दक्षिणस्यामुक्तयाम्योत्तरवृत्ते उक्तविषुववृत्तक्रान्तिवृत्तच्छेदबिन्दुतो दक्षिणस्यां

सार्द्धत्रयोविंशत्यंशावसानस्थले एकं पादं न्यस्य सार्द्धत्रयोविंशत्यंशपरिमितं प्रदेशमतिक्रम्योक्तपातबिन्दौ द्वितीयं पादं न्यस्यति ततस्तृतीयपादन्यासश्चोत्तरस्यामुक्तवृत्ते उक्तवृत्ततः सार्द्धत्रयोविंशत्यंशविदूरिते तद्दिशि गमनस्यावधिभूर्न भवति। एवं सत्येतस्य पदन्यासे भूयसो भागस्यातिक्रमणेनैतस्योरुगायशब्देन वर्णना वेदे। स चोक्तरूपस्त्रिपाद्विष्णुः। स च दक्षिणोत्तराविरतं गच्छति। द्विपाच्च भुवस्तादृशे सर्वोच्चपार्श्वप्रदेशे वृत्ताकारं परिभ्रमन्नसौ द्विपाद् वृत्ताकारभ्रमणे उक्तत्रिपदो मध्यमपादन्याससम्मुखमागच्छति, ततो विदूरं गच्छति चेति गृहीत्वोक्तं द्विपात् स भुवः पार्श्वे वृत्ताकारं परिभ्रमन्नादित्यस्त्रिपादमुक्तरीत्या याम्योत्तरे वृत्ते विक्रममाण आदित्यस्तं मध्यस्थानगतमभ्येति सम्मुखमागत्य तदेकतामापद्यते मध्यमस्थाने। ततोऽपसरति च भ्रमणार्थमिति तदिदमभिप्रेत्योक्तं मन्त्रे—द्विपात् त्रिपादमभ्येति पश्चात् [ऋ० १०।११७।८] इति। भुवो विषुववृत्ततः सविधसम्बन्धिनं देशं स गच्छन्नसावादित्यो दक्षिणोत्तरा पुरस्तात्पश्चाच्चेति सर्वदिक्सम्बद्धश्चतुष्पादुच्यते। स चोक्तविधश्चतुष्पात् द्विपदमुक्तविधानां सम्मुखप्रकाशनमभिप्रेत्य गच्छति। द्विपदां पक्तीःभिस्वरे सम्मुखप्रकाशने पश्यन्नुपतिष्ठमानः सम्मुखं समीपं प्राप्तो भवतीति। एवमेवापरापरे भेदा वर्णनानुसारेण तत्र तत्र तत्तन्नामभिरूहनीयाः। तस्य चादित्यस्य यज्ञरूपत्वम्। तत्र यज्ञकल्पनायां प्रथमतस्त्रयः पदार्था अपेक्ष्यन्ते। यजमानः, देवता, द्रव्यं चेति। तत्त्रितयमप्यादित्यरूपमेव—आदित्य एव यजमानः, स एव देवता, स एव च द्रव्यम्। तदुक्तं पुरुषसूक्ते "यज्ञेन यज्ञमयजन्त देवा" इति। यज्ञ आदित्यरूप एव। तदुक्तं यजुर्ब्राह्मणे "ते देवाः सत्त्रमासत ऋद्धिपरिमितं यशस्कामास्तत्र मखं यश आर्च्छत्" इत्यादिना। तत्र यशस्तेजो लब्धुं देवा मखश्च प्रवृत्तास्तेषां मध्ये मखेन यशो लब्धम्। मखश्च यज्ञः, यज्ञनामसु तच्छब्दपाठात्। किञ्च, गोपथब्राह्मण उच्यते मखशब्दस्य व्युत्पत्तिर्माखो मख इति। खशब्दआकाशस्य बोधकस्तत्प्रतिषेधः। पूर्णो मख इति आदित्यस्य यशसा तेजसा परिपूर्णत्वमिति आकाशाभावरूपत्वं तदेव पूर्णत्वं गृहीत्वा "पुरुषं वै देवाः पशुमालभन्त" इति ब्राह्मणे प्रतिपादितम्। यज्ञेन आदित्येन यज्ञं तमेव देवाः किरणस्वरूपाः समयजन् यजनक्रियाऽपि आदित्यक्रियारूपिण्येवेति। तदेतदौपाधिकभेदकल्पनां विना न संभवति। तदौपाधिकभेदकल्पनास्वरूपमपि तत्रैव मन्त्रे संसूचितम्। तदुक्तं तत्र—"तानि धर्माणि प्रथमान्यासन्" इति। यज्ञेन यज्ञस्य देवैर्यजनं तद्रूपं तत्प्रभृतिकर्मजातं प्रथममासीत्। अत्र प्रथमशब्दो न कालपरः किन्तु देशपरः। प्रथमः पूर्वः पूर्वदिक्सम्बद्धः। पूर्वदिक्सम्बन्धं गृहीत्वा पूर्वप्रथमप्राग्दिशब्दैर्व्यवहार आदित्यादीनाम्। तत्तु "देवानां माने प्रथमा" [ऋ० १०।२७।२३] इति मन्त्रव्याख्याने "अग्निः पूर्वेभिर्ऋषिभि"रितिवर्णनावसरे प्रतिपादितम्। एवं सत्यूर्ध्वोक्तपुरुषसूक्तीयमन्त्रेऽपि प्रथमशब्देन पूर्वाचिनवशतः प्रथमानि पूर्वाणि पूर्वदिकानि अर्थात्कुमेरु-

स्थान्यासन्। तत्रैवादित्यादीनां पूर्वाश्रनेनोक्तविधशब्दैर्व्यवहारः। किञ्च यज्ञेन यज्ञस्य यजनं भेदकल्पनयैकदेशस्थितस्यादित्यस्य परस्मिन्देशे दानं तद्वशत एव तत्रत्यादित्य-संदर्शनमिति गृहीत्वा पूर्वस्मिन्देशे चासन्दर्शनात्तस्य तत्र दानं तद्देवैः कृतमिति कल्पना। देवाः सुमेरुनिवासिन इति तैर्यज्ञस्यादित्यरूपस्य दानमर्थात्सुमेरौ भवति सुमेरावस्तमितस्य कुमेरावुदयात्तत्र दानरूपयागसंपादनं देवैरिति वर्णनेन देशरूपोपाधिवशतो भेदकल्पनया वर्णनम्। देवाः किरणा अप्युपाधिवशात आदित्यरूपा एव। एवं सति दाता आदित्यो देयं द्रव्यमप्यादित्य एव, देवताप्यत्र यज्ञरूप आदित्य एव, तानि च कर्माणि पूर्वाणीति विशेषणात् पराण्यपि भवेयुः। तानि कुमेरुत आदित्ययागादिना, स च यागस्तद्देशस्थैः किरणैरेव। ते च तद्देशीया किरणा न देवशब्देनोच्यन्ते उच्यमाना अपि वा साध्यादिशब्दै-र्विशिष्योच्यन्ते, यथा पुरुषसूक्ते "यत्र पूर्वे साध्याः सन्ति देवाः" इति। एवं च क्वचन केवलदेवशब्देन तेषां निर्देशः साध्यदेवपरः। यथा "देवानां माने" इत्यत्र। किन्तु कुमेरु-देशस्थानां तेषां पित्रादिशब्दैर्वर्णना। सा चोभयविधा यज्ञकल्पना "पुरुषं वै देवाः पशु-मालभन्त" "सुमत्पद्वग्दे" इति होतृजपीयाक्षरपङ्क्तियज्ञेन च विस्पष्टमुक्ता स्थलान्तरेऽपि तत्र तत्र वर्णने व्यक्ता। यज्ञानुष्ठानार्थं देशापेक्षा, स च देशो वेदिरूपः। वेदिशब्देन विशिष्टा परिष्कृता भूमिर्गृह्यते। तस्या वेद्याः पूर्वस्यां दिशि होमाधाराहवनीयाख्याग्नि-स्थानपर्यन्तता। स च वेद्याः पूर्वान्त इत्युच्यते। ततः पश्चात्प्रवर्तमानायाः परान्तविज्ञान-मपेक्षितम्। स च परोऽन्तो मन्त्रे प्रश्नपूर्वकं प्रोच्यते। तदुक्तं "पृच्छामि त्वा परमन्तं पृथिव्या" इति प्रश्नः, "इयं वेदिः परो अन्तः पृथिव्या" इत्युत्तरम्। तत्र वेदिः पृथिव्याः परोऽन्त इति वर्णनाद्वेद्यवसानं पृथिव्या अप्यवसानमिति भवेदिति गृहीत्वोच्यते "एतावती वै पृथिवी यावती वेदि"रिति। तत्रापि वेद्यन्तविज्ञानार्थं परो मन्त्र उच्यते—षष्टिश्चाध्वर्योर्नवतिश्च पाशा अग्निहोतारमन्तरा विचृत्ताः। सिनन्ति पाकमतिधीर एति इति। प्राकृत्या वेद्याः स्वरूपमत्र वर्ण्यते। सा च प्राकृती वेदिर्दर्शपूर्णमासादिरूपेष्विष्टादि-षूपयुज्यते। सा च दैनन्दिनादित्यगतिनिबन्धनी। आदित्येन दैनन्दिनगत्या तेन वृत्तरूपेण परिभ्रम्यते। अत एवैकस्मिन्दिवसे पूर्वस्यामुदितः क्रमेणाम्बरतलमधिरुह्य क्रमेणास्तं गतः पुनर्द्वितीयदिवसे पूर्वस्यामुदितो भवति। एषा वृत्ताकारा तस्य गतिरादित्य-मण्डलेन षष्टिकलात्मकैकांशभागरूपेण दण्डनिपातन्यायेन मीयमाना एकस्मिन्वृत्ते परपर-षष्ट्यधिकशतत्रयवारं निपातनेन पूर्यत इति प्रतिवृत्तं तावन्तोऽंशाः कल्प्यन्ते। (क्रमशः)

———

कवीन्द्र-रवीन्द्रस्य

# "रोत्स्यामि गमनं तव"

( "येते नाहि दिब" )

[ अनुवादकः—भट्टपल्लीस्थ-श्रीविष्णुपदभट्टाचार्यः ]

सद्यः समागतमिदं दिवसस्य मध्यं द्वाराद् बहिश्च शकटो गमनाय सज्जः ।
वर्षावसानसमये सवितुः प्रकाशः सञ्जायते खरतया क्रमशोऽविषह्यः ॥१॥
शून्योपचाल्य-सरणौ क्षितिरेणु-पुञ्जो माध्याह्निकेन मरुताऽस्त्यपनीयमानः ।
प्रच्छाय-पिप्पल-तलातत चीवराऽसौ स्वापञ्च भिक्षु-रमणी जुषते श्रमार्ता ॥२॥
मन्ये प्रदीप्त-तपनातप-निर्मितेयं निस्तब्ध-निःस्वन-निशा स्फुरतीव विष्वक् ।
सन्दृश्यते न भवने मम तावदस्मिन् सर्वश्रम-प्रशमनी दिवसीय-सुप्तिः ॥३॥
पूजा-विराम विरतौ सममाश्विनेन स्वां कर्म-भूमिमभितोऽहमितो यियासुः ।
बध्नाति रज्जुभिरतो मम वस्तुजातं सम्भ्रान्त-भृत्यनिकरस्त्वरितं समग्रम् ॥४॥
अन्योन्य-हूतिभिरथोत्कट-विप्रलापैः कोलाहलः समभवत्तुमुलो गृहान्तः ।
यात्रोचितोपकरणाहरणप्रसक्ता चङ्क्रम्यते स्म परितो मम गेह-लक्ष्मीः ॥५॥
भारं दृषद्गुरुमसौ हृदये दधाना रुद्धाश्रु-सिक्त-नयना परिदेवनाय ।
नाविन्दताणुसमयं, क्रम-वर्धमानं द्रव्योच्चयं न मनुते तदपि प्रकामम् ॥६॥
दृष्ट्वा मयोक्त "महह क्रियते किमेतत् किं मे भवेद् घट-पटैः पिठरैरियद्भिः ।
किं तल्प-पेटक-शरावक-काचपात्रै राष्ट्राहृतैश्च बहुभिर्विविधैश्च भाण्डैः ॥७॥
एषु प्रतीष्य कतिचित् परिहाय शेषं यानी"ति वाक्यमसकृद् यदभून्मयोक्तम् ।
कस्यापि कर्णमविशन्न हि तज्जनस्य ( प्रत्युक्तमेतदनयाऽपि वचः स्वकीयम् ) ॥८॥
"कस्यापि तन्न विदितं विधिना यदिष्टं देशान्तरे प्रवसतस्तव नाम दैवात् ।
तैस्तैः प्रयोजनमहो यदि वस्तुभिः स्याल्लभ्यानि तानि तु कुतस्तदहं न जाने ॥९॥
"एतेऽणुतण्डुलचयाश्च सुवर्ण-मुद्रास्ताम्बूलगुच्छकमिदं क्रमुकाण्यमूनि ।
द्वित्रा इमे च कठिना गुड-पाक-खण्डाः[१] संरक्षितानि पिहितानन-हण्डिकायाम् ॥१०॥
"पक्वानि लाङ्गलि[२]-तरोः कतिचित् फलानि प्रत्तानि[३], भाण्डयुगलं क्षव[४]-तैल-पूर्णम् ।
आम्रातकश्च[५] सहकारफलस्य चूर्णं 'सेर'-[६]द्वयञ्च पयसामिह रक्षितानि ॥११॥

---

१ गुडपाकः—पाटालीति भाषा । २ लाङ्गली = नारिकेलः । ३ प्रत्तानि = प्रदत्तानि ।
४ क्षवः=राजिका राईसरिषेति भाषा । ५ आम्रातकः = आमसत्तेति भाषा । तथाहि राजनिर्घण्टे—
"पक्वस्य सहकारस्य कटे विस्तारितो रसः ।
घर्मशुष्को मुहुर्दत्त आम्रातक इति स्मृतः ॥
६ सेरम्—स्वनामख्यातो देशप्रचलितो भारपरिमाणविशेषः । शरावः ।

"काचादिपात्र-गतमौषध-जातमेतन्—मृष्टान्नमत्र निहितं मृदमत्र-गर्भे ।
भोक्तव्यमेतदखिलं स्मृति-पूर्वकं भो नात्र भ्रमोऽस्तु, शिरसा शपथो ममायम् ।।"१२।।
व्यर्थः क्षयो हि वचसामनया वितण्डा भारो धराधर इवोच्छ्रित एव जातः ।
दृष्ट्वा मयाऽथ घटिकाह्वय-काल-यन्त्रं कान्ता-मुखार्पितदृशोक्त"महं प्रतिष्ठे" ।।१३।।
श्रुत्वैव मामक-वचो नमितोत्तमाङ्गी प्रावृण्वती च नयने वसनाञ्चलेन ।
अश्रूण्यमङ्गलकराणि निगूहमाना साऽस्थाद् दिगन्तर-विवर्तित-कातरास्या ।।१४।।
द्वाराद् बहिश्च वयसा चतुरब्दिका मे सन्तिष्ठते स्म दुहिताऽन्यमना निषण्णा ।
कालेन नूनमियता स्नपिता हि पूर्वं वत्साऽभविष्यदसकौ दिवसान्तरेषु ।।१५।।
आस्यार्पितेऽन्नकवलेऽक्षिपुटौ तदीयौ सुप्त्याऽजनिष्यत तदैव निमीलितौ च ।
कर्मान्तरार्पितमना जननी दिनेऽस्मिंस्तत्-पर्यवेक्षणविधौ न हि तत्पराऽऽसीत् ।।१६।।
वेलेयती व्यपगता दुहितुस्तथाऽपि स्नानं तथाऽशनमहो न गते समाप्तिम् ।
बम्भ्रम्यते स्म मम तावदुपान्तलग्ना च्छायेव सा क्षणमियन्तमनुव्रजन्ती ।।१७।।
मौनेन विस्मृत-निमेष-विलोचनाभ्यां यात्रोद्यमांश्च निखिलान्मम वीक्षते स्म ।
कान्ताऽधुना किमपि सा विमृशन्त्यशब्दं द्वारान्त्य-भूमि-शरणाऽऽस्त रहो निषण्णा।।१८।।
यावन्मयोक्त"महमेष चलामि वत्से !" तावद्विवर्ण-वदना च विषण्ण-नेत्रा ।
"यात्रा मया प्रतिहता भविता त्वदीये"त्युक्त्वाऽपि नासनमसावजहात् स्वकीयम्।।१९।।
द्वारं न रुद्धमनया, न धृतौ करौ "त्वां रोत्स्यामि यान्तमि"तिमात्रमुदीर्य वाक्यम् ।
स्नेह-प्रभुत्वमुदघोषि मनो-निगूढं कालात्ययेऽपि विहतं न तु मत्-प्रयाणम् ।।२०।।
का त्वं कया क्षमतयाऽद्य कुतस्त्यया वा "रोत्स्यामि प्रस्थितिमितो भवतो"ऽज्ञकन्ये ।
इत्थं त्वमात्थ, कतमं नु चराचरेऽस्मिन् रोद्धुं क्षमाऽसि मनुजं तनु-दोर्युगेन ।।२१।।
मद्गेह-निर्गमपथान्तिकमास्थिता त्वं सक्षोभ-खेद-विधुरं वपुराददाना ।
स्पर्धा-भरेण ननु कं नियुयुत्ससे रे स्नेहं निजाणु-हृदयोच्छलमाश्रयन्ती ।।२२।।
दुःखाभिभूतमनसोऽतिभिया ह्रिया वा स्वाकाङ्क्षितार्थविशदी-करणं हि युक्तम् ।
नेष्टं प्रयाणमिति केवलमत्र वाच्यं रोत्स्यामि यानमिति कोऽपि न वक्तुमीष्टे ।।२३।।
यावच्छ्रुतं शिशुमुखाद् गलितं वचस्ते स्नेह-प्रभाव-भव-शक्ति-समूर्जितं तत् ।
संसार एष कुतुकान्वितहास-पूर्वं व्याकृष्य मामदवयद् गृहतोऽपि तावत् ।।२४।।
त्वां केवलं परिभवोच्छलदश्रुनेत्रां द्वारैकदेश-परिकल्पित-भूमि-पीठाम् ।
चित्रार्पिताङ्ग-लतिकामिव वीक्षमाणः सम्प्रस्थितोऽस्मि निलयान्नयने प्रमार्जन् ।।२५।।
सोऽहं व्रजन्नुभयतः सरणीं मदीयां शालेयजातमनयं विषयं दृशोर्मे ।
भूयिष्ठ-शस्य-विभवैरिव नम्र-कायं रौद्रञ्च शारद-रवेरुपसेवमानम् ।।२६।।

स्वच्छाय-बद्ध-नयनो द्रुगगोऽश्व-पार्श्वे वीतस्पृहो गमयतीव दिनं समग्रम् ।
आभाति पूर्ण-सलिला शरदागमेऽसौ गङ्गा प्रचण्ड-गति-वेग-भरेण भीमा ॥२७॥
शुभ्राम्बु-वाह-शकलाः सुकुमार-कायाः सद्योभवा इव गवां धवलाङ्ग-वत्साः ।
पानेन मातृपयसां सुहिताः समन्ताद् राजन्ति नील-गगने ससुखं शयानाः ॥२८॥
आच्छादनेन रहितां प्रखरार्क-भासा तप्तामिमां युग-युगान्तर-लब्ध-खेदाम् ।
आचक्रवालविततामभितो धरित्रीं नेत्रे निबध्य सहसा श्वसितं मयाऽपि ॥२९॥
सर्वा क्षितिः परिवृता, गगनञ्च सर्वं दुःखेन येन तदहो ! किमिव प्रगाढम् ।
यावच्चलामि वचनञ्च शृणोमि तावद् "यात्रा मया प्रतिहता भविता तवे"ति ॥३०॥
आमेदिनी-परिसरं नभसोऽसितस्य प्रान्तावसक्तमखिलं तटमश्नुवाना ।
रंरण्यतेऽन्तरहितेयमनादि-वाणी "रोत्स्यामि यानमि"ति शश्वदुदीरिता च ॥३१॥
को नाम तीव्रतमसः कवलान्मुमूर्षुं दीपार्चिषं नु परिरक्षितुमात्तयत्नः ।
आकर्षतीव तरसा शतशो ब्रुवाणा "रोत्स्यामि यानमि"ति दर्पविमिश्र-वाचम् ॥३२॥
व्याप्यावनीञ्च दिवमत्र जगत्-प्रपञ्चेऽनन्तेऽ"हमत्रभवतो गमनं निरोत्स्ये" ।
मन्ये पुरातनतमा स्फुरतीयमुक्ति र्मन्ये प्रगाढतमरोदनमेतदेव ॥३३॥
यात्रां विहन्तुमथ कोऽपि तथाऽपि नालं दूर-प्रयाणमपि सङ्कटते तथाऽपि ।
एवंविधैव नियतेः परिवृत्ति-शून्या राजत्यनादिसमयात् प्रभृति प्रवृत्तिः ॥३४॥
कल्पान्त-सागरमभि स्रवताऽविरामं सृष्टि-प्रवाह-तरसा व्यपनीयमानाः ।
सर्वे प्रसारित-समुद्यत-बाहु-पाशा "यात्रा मया प्रतिहता भविता त्वदीया" ॥३५॥
इत्यक्षराणि बहुशः समुदीरयन्तः संश्रित्य कार्मुक-शर-प्रखरञ्च रंहः ।
धावन्त्यखण्ड-गतयो ज्वलदग्नि-नेत्रा दिक्प्रान्तमार्त-निनदैः परिपूरयन्तः ॥३६॥
( इति युग्मकम् । )

आहूय वक्त्रनुगता लहरी पुरोगां "यात्रा मया प्रतिहता भविता तवे"ति ।
कस्यापि नैव विशति श्रवणं वचस्तत् प्रत्युत्तरं न किमपि प्रतिपाद्यते वा ॥३७॥
"रोत्स्यामि यानमि"ति मर्मभिदार्तनादो बालायमान-भुवनस्य वचो-विलासः ।
कण्ठस्वरेण दुहितुर्मम जृम्भमाणो दन्ध्वन्यते श्रुति-पथं परितोऽतिधावन् ॥३८॥
अद्धा सनातनमिदं हि विधेर्विधानं—केनाऽपि वस्तु किमपि प्रतिपद्यते चेत् ।
तन्नूनमस्य सहसा भवति प्रनष्टं सम्पद्यते न शिथिलाऽस्य तथाऽपि मुष्टिः ॥३९॥
कन्या ममेव वयसा चतुरब्ददेश्या सोऽकुण्ठित-प्रणयज-स्मयतः समुच्चैः ।
आहूय तद्धि वचनं कथयन्निवास्ते "यात्रा मया प्रतिहता भविता तवे"ति ॥४०॥

म्लानं मुखञ्च, सजले नयने च, गर्वः खर्वीकृतः प्रतिपलं प्रतिदण्डमस्य ।
विद्रोहिवत्त्वगणिताभिभवोऽस्य रागो "रोत्स्यामि यानमि"ति घोषयतीव तारम् ॥४१॥
इत्थं पराभवमसौ बहुशोऽपि विन्दन् वाचाऽनयैव बहुशो विवृणोति भावम् ।
"यस्मिन् मनो हि रमतेऽतितरां मदीयं मत्तः सुदूरविषयं किमसौ प्रगच्छेत् ॥४२॥
"विश्वे किमस्ति सदृशं स्पृहयाऽनया मे सर्वातिगं निरवधि प्रबलं विहस्तम् ।"
उक्त्वैवमेव पुनरेव सदर्प-घोषं ब्रूते "मयाऽद्य गमनं तव बाधितं स्यात्" ॥४३॥
हा हा तदैव पुरतः परिपश्यतोऽस्य श्वासानिलोद्धतमिवाणुरजो विशुष्कम् ।
तत्-प्रेम-भाजन-जनो लयमेति सद्यो नेत्रे च तस्य भवतो गलदश्रुसिक्ते ॥४४॥
आवर्जितेन शिरसा स हृतावलेपो विच्छिन्नमूलविटपीव लुठत्यवन्याम् ।
उच्चैस्तु घोषयति तन्मनसोऽनुरागो "भङ्गो न जातु भविता विधि-दत्त-वाचः ॥४५॥
"तत्-स्वाक्षराङ्कितलिपेर्द्वयमेव लब्धं—स्वत्वं चिरन्तनमिदं, गुरु-सङ्गरश्च ।"
स्फीतोरसा हि पुरतः प्रभविष्णु-मृत्योर्ब्रूते "भवान् न भवती"ति कृशाङ्ग-यष्टिः ॥४६॥
धृष्टेन तेन वचसा हसतीव मृत्युः प्रेमाऽमरस्तु मरणाकुलितोऽप्यनन्तम् ।
व्याप्यैव संसृतिमिमां सभयं समुत्कं चङ्क्रम्यतेऽश्रमिव हन्त विषण्ण-नेत्रे ॥४७॥
न्यस्येव विश्वमवसाद-कुहेलिकायामाशा क्रमं निविशते स्वयमुज्झिताशा ।
आश्लिष्य लोकमिव तिष्ठति मोघ-बद्धं निर्बोध-कातर-जडीकृत-बाहु-युग्मम् ॥४८॥
लोले प्रवाह-सलिले शयितेव काचिच्छाया विराजति चिर-स्थिरतां प्रपन्ना ।
कस्याऽप्यधो-निपतिता जलदस्य माया नेत्राम्बु-वर्षिण इव प्रतिभाति सा मे ॥४९॥
तद्व्याकुलत्वमियदङ्घ्रिप-मर्मरेषु श्रोत्रेण बोध-विषयीभवति स्फुटं मे ।
मध्याह्न-तप्त-पवनोऽलस-निस्पृहोऽसौ क्रीडत्यलीकमिव नीरस-शाखि-पर्णैः ॥५०॥
वेला प्रयाति च शनैरिह पिप्पलाधश्छायाऽपि दीर्घतरतां क्रमशोऽभ्युपैति ।
रोदित्यनन्त-मुरली[1] बत दूर-शून्ये विश्वाध्वनीव[2] कृषकेप्सित-गीतिरागैः ॥५१॥
आकर्ण्य ताञ्च वसुधा विमनायमाना सूर्यांशु-पीत-कनकाञ्चल-संवृताङ्गी ।
दिग्व्यापिनि त्रिपथगा-तट-शस्य-वप्रे सस्तालकेव ललनाऽस्ति रहो-निषण्णा ॥५२॥
दूरस्थ-नील-गगन-प्रहिताक्षि-युग्मं मूकं तदीय-सुमुखं चतुरब्दिकायाः ।
द्वारान्त-लीन-विधुर-व्यथितान्तराया म्लानाननेन दुहितुः सममीक्ष्यते स्म ॥५३॥

———

१ अनन्त-मुरली = अनन्तस्य मुरलीति विग्रहः ।
२ दूरशून्ये विश्वाध्वनि = विश्वस्य प्रान्तर इत्यर्थः । "प्रान्तरं दूरशून्योऽध्वा" इत्यमरः ॥

# स्वरसंज्ञाविमर्शः

( पूर्वतोऽनुवर्तते )

अयं च चतुर्थः स्वरः षड्जरूप इति तस्य कण्ठस्थानतोच्यमानाऽपि सङ्गता। षड्जस्य षड्भ्यो जातत्वस्य नारदीयानुसारेण पूर्वोक्तत्वात्तस्य कण्ठस्थानत्ववर्णनमपि युज्यते। एवं कुमेरुगतोदयानुसारेणादित्यबिम्बभागेषु स्वरत्रयं व्यवस्थाप्य सुमेरुगतास्तमित-बिम्बाभिप्रायकस्वरत्रयव्यवस्थापनार्थमुच्यते नारदशिक्षायाम्—"मन्द्रं त्वेवोपजीवन्ति पिशाचासुरराक्षसाः" इति। दिनादिव्यवहारसाधिका न वस्तुत आदित्यस्य गतिः, किन्तु पृथिव्या गतिस्तादृशी। तां तद्गतिमादित्ये समारोप्यादित्यगतिरिति व्यवह्रियते, यथा नौकायां चलन्त्यां तद्गता गतिरचलति तीरादावारोप्यते। तदुक्तमैतरेयब्राह्मणे "न ह वा एष कदाचनास्तमेति नोदेती"त्यादिना। एतदन्यत्र प्रपञ्चितम्। एवं सति सुमेर्वादौ भागे उदयास्तमयसाधिका पृथिव्या नीचैरुच्चैर्गतिः। यदा पृथिवी नीचीना भवति तदानीं सुमेरुप्रदेशे आदित्यस्योदयप्रतीतिः। यदा चोच्चैर्गतिशालिनी तदा तत्र तस्यास्तमयप्रतीतिः। एवं कुमेरौ तद्विपरीतभानम्। एवं सति नीचीनायां पृथिव्याम् आदित्यबिम्बस्य यो भागः क्रमेणोदितो दृश्यते तद्विपरीतदिशि तद्विपरीतक्रमेणास्तमितत्वप्रतीतिः। एवं सर्वत्र। तदनुसारेण मध्यमस्वरमारभ्य क्रमेण २-३-४ प्रथमराशिमापन्ना वैपरीत्येन भाने द्वितीय-राशितां गता नि-ध-प-रूपा भवन्ति। तत्र शिक्षायां पञ्चममारभ्य स्थानवर्णनेनोच्यते —क्रुष्टस्य मूर्धनि स्थानमित्यादि। एवं सति गानस्वरक्रमे चतुर्थस्वरस्य मूलगानस्वरक्रमे प्रथमस्य षड्जस्य पश्चादवरोहिणो निस्वरस्य मन्द्रत्वेनोच्यमानस्योरःस्थानत्वमुच्यते—मन्द्रस्योरसि तूच्यते इति। स्वरोपजीवनस्थलेऽपि "मन्द्रत्वेनोपजीवन्ति पिशाचासुरराक्षसा" इति शिक्षायाम्। तत्र पञ्चममारभ्य कथनतात्पर्यं तु पूर्वमेवोक्तम्। मध्यमस्य स्थाना-भिप्रायेण मध्यमत्वप्रकटनम्, पञ्चमस्य मध्यमेनाव्यवधानबोधनं चेति। तथा सति मौलिकगानस्वरक्रमे षड्जऋषभगान्धाराणां प्रथमराशिरूपत्वमवरोहे पञ्चमधैवतनिषा-दानामेवं क्रमेणैव द्वितीयराशित्वं राशिद्वयमध्यमस्थानयोगेन च मध्यमत्वमिति। अव-रोहक्रमे मध्यमस्याव्यवधानबोधनाय गृहीतः पञ्चमः सर्वोच्चो भवतीति तत एव सर्वेऽवरोह-क्रमेण सामसु भासन्ते। अयं तु सर्वोच्च एव भवतीति। अत एव तस्य सामप्रारम्भ-स्थले षष्ठस्य धैवतस्य ततोऽवरोहिता न भवतीति। एवं च स्वराणां मध्ये मध्यमेति-नामतः पञ्चमेतिनामतश्च लोकप्रसिद्धगानस्वरक्रम एव पूर्वः, सामगानार्थस्वरक्रमस्त्वर्थ-विशेषाभिप्रायेण तद्विपरीत इति। वैपरीत्यं चावरोहित्वादित्युक्तम्। स्वराणां सप्तत्वं चादित्यसम्बन्धनिबन्धनमिति नारदशिक्षाद्यनुरोधेन प्रदर्शितम्। तत्रैकमात्रस्वरस्य न सामत्वं किन्तु स्वरसमूहस्य। समूहास्तु नानाविधा भवन्तीति नानाविधत्वं साम्नाम्। तत्र सामशब्देन पूर्णस्य साम्नो ग्रहणं, तच्च तिसृभिर्ऋग्भिरिति तस्यैव स्तोत्रियत्वं ब्राह्मणोक्तं प्रदर्शितमेवोपरिष्टात्। तत्र साम्नां स्वरसमूहत्वेऽपि तत्प्रदर्शनायोपादीयमान-

र्गादिगतभेदेनापि भिन्नता भवतीति सामब्राह्मणे साम्नां चातुर्विध्यमुक्त्वा स्वारं निधनवत्, ऐळमृक्सममिति, तेषां प्रकाराणामेकस्मिन्स्वाररूपसाम्न्येवान्तर्भावादेकविधमेव सामस्वार-रूपमेव, तच्चादित्यरूपमेवेत्युक्तं, तच्चान्यत्र प्रदर्शितम्। अत एवर्क्सम्बन्धेनापि साम्नो भेदेन सामनामसु प्रमंहिष्ठीयं कयाशुभीयं यज्ञायज्ञीयमिति व्यवहारः। अभिप्रायविशेषेण ऋषिसम्बन्धस्य विवक्षणादपि सामनामानि भवन्ति यथा वामदेव्यं वासिष्ठमिति। स्वातन्त्र्येणापि सामसु नामप्रवृत्तिर्यथा रथन्तरं बृहदिति। तदेवं साम्नामनेकविधत्वं गृहीत्वा सामवेदस्यानेकभेदत्वं चरणव्यूहे उक्तं—सामवेदस्य किल सहस्रभेदा आसन्। अनध्यायेष्वधीयानास्ते शक्रेणाभिहताः प्रनष्टा इति। व्याकरणभाष्यादिषूच्यते वेदानां शाखाभेदवचनप्रस्तावे "सहस्रवर्त्मा सामवेद" इति। पुराणेष्वप्येवमेव। तत्र वर्त्मभेदादिशब्दानां शाखापरत्वम्। अत एव चरणव्यूहे विनष्टावशेषाणां कथनप्रसङ्गे राणायणादीनां सामवेदशाखानामुल्लेखः सङ्गच्छते। यद्यपि व्याकरणभाष्यादिषु सहस्रवर्त्मेत्यादिना सहस्रभेदनिश्चयवत्त्वं प्रतीयते तथापि चरणव्यूहकारस्य संप्रदायतस्तद्-भाववत्त्वं प्रतीयते। अत एव तेन किल-शब्दः प्रयुक्तः—सामवेदस्य किल सहस्रभेदा आसन्निति। तत्रोभयत्र सहस्रशब्दः सङ्ख्याविशेषो दशशतीरूपस्तत्परो वा असङ्ख्यार्थको वेति निश्चयाभावः। चरणव्यूहकारेण कतिपयभेदविशेषे हेतुरुक्तः—अनध्यायेष्वधीतास्ते शक्रेणाभिहताः प्रनष्टा इति। कथं कदेमे भेदा अनध्यायेष्व-धीताः कथं वा शक्रेणेमे हता इति कालस्थानविशेषाद्यनवगमः। कैश्चन ब्राह्मणे-षूच्यमानस्येन्द्रेण यतिवधस्यानेन सम्बन्धो मन्यते। तत्र हि इन्द्रेण यतीनां साला-वृकेभ्यः प्रदानमैतरेये उच्यते, सामब्राह्मणे तु इन्द्रेणेमे यतयो विनाशिता इत्युच्यते। उभयत्र यतयः क इमे कुतो वेन्द्रेण तद्विनाश इति हेतोरनुल्लेखः। तत्र स्यात्सम्भवोऽनध्या-येष्वध्ययनं तेषां दोष इति तेषां वधात् तेषु प्रसिद्धभेदानां विनाश इन्द्रेणेति। ते तु यतयः सहस्रं समासन्। ऋङ्मन्त्रेषु तेषां सहस्रसङ्ख्यानिर्देशः। तत्र सहस्रशब्दस्याप-रिमितार्थकत्वम्। तथा सति तेषां सामवेदिनां याः शाखास्ते नियमव्युत्सादनपूर्वमधीयते स्म तास्तेषां विनाशेन विनष्टा इति। यतिवधे कतिपयेऽवशिष्टा इति सामवेदब्राह्मणे उच्यते—तेषां त्रयोऽत्राशिष्यन्त बृहद्गिरिः पृथुरश्मिः रायोवाजश्चेति। तेषां संभरणे यतिभिः प्रार्थिते इन्द्रेण स्वयं तद्भर्तृत्वमुक्तम्। तैश्च त्रीणि सामानि दृष्टानि बार्हद्गिरं पार्थरश्मं रायो-वाजीयमिति। तत्फलनिर्दिष्टशस्तद्वशतश्च तेभ्य इन्द्रेण ब्रह्मचर्यादिप्रदानमिति वर्णनेन ततो ऽवशिष्टाः काश्चन सामवेदशाखा राणायणीप्रभृतय इति। परन्त्वत्र कल्पने बह्विवासामञ्जस्यं प्राप्नोतीति तदेतन्नाद्रियते। वेदे आदित्यस्यैवैकस्य स्तव इति कल्प इन्द्रत्वमादित्यस्यैव। तथा सति तस्याजातशत्रुत्ववचनेन शत्रुविनाशादिकं मायिकमिति वचनाद्यतिवधोऽप्यन्य-थोपपादनीयः। स चेन्द्रस्यापराधव्याख्याने पुरस्ताद् विस्तरेण निरूपितः। (क्रमशः)

———

## साम्यम्

प्रियवाचकमहाभागाः, संसारेऽस्मिन्नसारे कदापि सुखमेवोपतिष्ठते कदापि पुनर्दुःखम्। अवितथं खलूक्तं कविप्रवरेण कालिदासेन—

कस्यात्यन्तं सुखमुपनतं दुःखमेकान्ततो वा
नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण ॥

इति। परं सुखे वा दुःखे वा मनसः साम्यमवश्यं संरक्षणीयम्, अद्वैतं सुखदुःखयोरवश्यं सम्पादनीयम्, एष आदेश एष उपदेश एषा वेदोपनिषत्। तथाच ऋग्वेदे श्रूयते—

समानमेतदुदकमुच्चैत्यव चाहभिः।
भूमिं पर्जन्या जिन्वन्ति दिवं जिन्वन्त्यग्नयः॥

इति। एकमेवेदमुदकम् ऊर्ध्वमाक्रामति ग्रीष्मकाले, ततश्च सम्प्राप्तायां प्रावृषि पुनरपि वर्षकर्मणाधः पतति। मेघा भूमिं प्रीणयन्ति, वह्निः पुनर्दिवं प्रीणयति। उदकं पुनरेकमेव। एतेनोच्यते—सर्वथास्माभिर्विवेकिभिर्भवितव्यम्। सुखमापतितं निर्विकारं सेवनीयम्, दुःखं समुपनतमपि तथैव निर्विकारं भोक्तव्यमिति। गीतायामपि भगवतोक्तम्—न प्रहृष्येत् प्रियं प्राप्य नोद्विजेत् प्राप्य चाप्रियम्। स्थिरबुद्धिरसंमूढ इति, इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मन इति, समः शत्रौ च मित्रे च तथा मानापमानयोः शीतोष्णसुखदुःखेष्विति, तुल्यनिन्दास्तुतिरिति, समत्वं योग उच्यते इति च। (We must take with "equal thanks fortune's buffets and rewards.")

---

## काक-शृगाल-कथा

[ श्रीफटिकलाल-दासः ]

कदाचिदेको वनकृष्णकाको धनाढ्यगेहादपहृत्य पूपम्।
नदीतटावस्थितवृक्षशीर्षे चञ्च्वा गृहीत्वा निषसाद सद्यः ॥१॥

अपूपवासेन स वासवृक्ष आमोदितोऽभूत्पवनेरितेन।
तद्गन्धमाघ्राय शृगाल एकस्तत्रोपतस्थे रसनातिलौल्यात् ॥२॥

पूपं बुभुक्षुश्चतुरः स फेरुरुपायमेकं मनसा विमृश्य ।
सम्बोध्य काकं निजबन्धुनाम्ना चाटुं सुचारुं गिरमाचचक्षे ॥३॥

"दिष्ट्याद्य दृष्टे विषयं गतोऽसि पुरातनस्त्वं सुहृदां वरो मे ।
किं वार्तमस्तीति वदात्मवार्तां निशम्य यां सौम्य शमं लभेय ॥४॥

किं प्राज्यभोज्यं सुलभं त्वया भोः प्रियंवदा किं सततं प्रिया ते ॥
किमात्मजानां कुशलं तवास्ति कुर्वन्ति किं ते वचनं च पित्रोः ॥५॥

त्वत्कल्पलोकं प्रतिवेद्मि बन्धो न जातु जातो विधिरप्रसन्नः ।
जना गुणाढ्या यदि यान्ति दुःखं तस्यैव निन्दा प्रचरिष्यतीह ॥६॥

अहो मनोज्ञं तव पक्षपक्ष्म गात्रस्य वर्णोऽपि तमोऽतिशेते ।
क नाम तिष्ठेत्पुरतस्तवात्र कुमारपत्रं स हि चित्रपक्षः ॥७॥

न वेद को वा वयसां कुलेऽस्ति न ते सदृक्षो भुवनेषु कश्चित् ।
गुणैरगण्यैः समलङ्कृतोऽसि बुद्धया च वाचस्पतिकाव्यतुल्यः ॥८॥

एको हि दोषो गुणसन्निपाते तवास्ति मन्ये ननु मित्रवर्य ।
स कथ्यते चेन्नहि बन्धुवर्गैः संशोधनं तस्य कथं कदा स्यात् ॥९॥

कण्ठोद्भवं हा तव गीतमेकं श्रुतं मया नो मधुवासरेऽपि ।
विना हि गीतं सकलाऽन्यविद्या बन्ध्येव नारी विफला मतात्र ॥१०॥

त्वज्जातिपुष्टः स हि कोकिलोऽपि वनं कुहूभिसु खरीकरोति ।
अतः कवीनां परमं प्रियः स गुणा गुणज्ञे पदमर्चनायाः ॥११॥

आशंसते मद्धृदयं तु नित्यं रूपानुरूपो भवतोऽस्त्वि कण्ठः ।
असाम्प्रतं तद् यदि वञ्चिताः स्युस्त्वत्कण्ठगीतैर्मृगपक्षिणोऽत्र ॥१२॥

एवंविधोक्तैः श्रवणाभिरामैर्धृतः स काको हतचित्तवृत्तिः ।
यावत् समुच्चैर्गत एव गातुं पपात वक्त्रात् तदपूपखण्डम् ॥१३॥

उल्लम्फ्य तस्योपरि वञ्चकोऽसौ तदेव तूर्णं बुभुजेऽतिलौल्यात् ।
काकस्य का-का-ध्वनिरुच्चचार श्रुत्वाप्तभोजः प्रशशंस तं सः ॥१४॥

"ध्रुवं हि बन्धो मधुरः स्वरस्ते ततोऽपि मिष्टस्त्वयमेव पूपः ।
जातोऽस्मि धन्यो ह्यशनेन तस्य ददामि तस्मादुपदेशमेकम् ॥१५॥

"सुधीजनानां ग्रहणस्य योग्यं कदापि न स्यात्प्रियचाटुवाक्यम् ।
प्रवञ्च्य मूर्खांश्चलचित्तवृत्तीञ्जीवन्ति धूर्ताः सततं जगत्याम् ॥"१६॥

# श्रीमदप्पाशास्त्रिणां पत्ररत्नमञ्जूषा

( ३ )*

श्रीशिवः शरणम् ।

वाई
सं. चं. शाखाकार्यालयः
श्रा. शु. १३।१८२७

स्वस्ति ।

सविनयं सप्रणयं सप्रणामं सबहुमानं चावेदकः ।

प्रियमहाभागाः ! चिरमेव कृतज्ञोऽस्मि श्रीमत्सु ।

इदमिदानीमधिगतं पुस्तकात्मना परिणतमिव पीयूषं श्रीमतां कृतिः प्रबन्धरत्नं भट्टबाणाख्यम् । एकान्ततः खल्वेतत्प्रीणयति मामकं चेतः । करतलपतितमात्रमेवैतत्सुनिर्भरं समाक्रम्य मे चित्तमात्मनः पठने प्रावर्तयत् । अपठिषं च परित्यज्य कार्यान्तराणि प्रतिक्षणं नवं नवमेव प्रमोदमनुभवन्नस्य प्रस्तावनाम् । अद्राक्षं च विषयानुक्रमणीम् । अभिलष्यामि चाचिरादेवैनमामूलान्तं पठितुं चालोचयितुं च । सर्वथा सानन्दं सादरोन्मेषं चाभिनन्दामि व्यवसायमिमं प्रियपण्डितप्रवराणाम् ।

अवालोकिषि किलास्य प्रस्तावनायां भामहनामोल्लेखम् । भूयांसः किलोदाहरन्ति भामहपद्यान्यालङ्कारिकाः । किन्तु कोऽयमेतत्प्रणीतोऽलङ्कारग्रन्थ इति नाद्यापि विज्ञायतेऽस्माभिः† । केवलं तु महात्मनाऽनेन प्रणीता कात्यायनीयप्राकृतसूत्राणां वृत्तिः प्राकृतप्रकाशाख्या नयनगोचरीकृताऽस्माभिः । मन्यामहे शक्येतानया कदाचिद्विनिर्णेतुं समय एतस्येति ।

---

*स्वर्गत-पं० पारखी पाण्डुरङ्गशास्त्रिभ्यः श्रीमदप्पाशास्त्रिभिः प्रेषितं पत्रमिदं तेषां पुत्ररत्नैः पं० काशिनाथशास्त्रिभिरस्मभ्यं प्रदत्तम् । तेभ्यश्चैतदर्थं सहस्रशो धन्यवादा वितीर्यन्ते । कविप्रवरः श्रीमान् भट्टबाण इति प्रबन्धे श्रीमदप्पाशास्त्रिभिर्विलिखितम्—महाराष्ट्रभाषायां पुनश्चरितमस्य महाकवेः संग्रथितवद्भिरतिमात्रमेवोपकृतं महाराष्ट्रीयाणां प्रियसुहृद्भिरस्माकं पारख्युपाह्वैः श्रीमत्पाण्डुरङ्गशास्त्रिमहाभागैः । एतदेव च प्रायेणोपजीव्य प्रबन्धमेनमारचयितुमिच्छाम इति ।

† भामहस्य काव्यालङ्कार इदानीं मुद्रित उपलभ्यते । स दण्डितः प्राचीन इति केचन मन्यन्ते, अर्वाचीन इत्यपरे ।

*शीलाभट्टारिकामधिकृत्य च प्रकाशितः कश्चन प्रबन्धः काशिक्या मित्रगोष्ठी-पत्रिकया। तत्र पुनः कियन्तिचिदस्याः पद्यान्युदाहृतानि नैव पुनर्निर्णीतः समयः।

गद्यकाव्यविरचनायां दण्डिन एव प्रथमश्रेणी-प्रतिष्ठत्वमभिप्रेयते कैश्चिदर्वाचीनैः। यथा चैतत्तथा भारतरत्नपण्डितश्रीमदम्बिकादत्त-व्याससाहित्याचार्य-संग्रथितायां गद्यकाव्यमीमांसायां स्पष्टम्। किन्तु मतमिदमनूद्यावश्यं खण्डनीयमिति मे बुद्धिः। अतः संस्करणान्तरेऽवश्यं व्यापारयिष्यन्त्यन्तःकरणं प्रियमहाभागा इत्याशासे। वयं तु बाणमेव श्रेयांसमाकलयामः।

गरीयः किलोपकृतं प्रबन्धमेतं प्रणयद्भिः प्रियमहोदयैर्महाराष्ट्रीयाणामिति प्रमोमुद्यते नश्चेतः। अपरापरानपि कविप्रकाण्डानधिकृत्यैवमेव विरचय्य प्रबन्धानुद्धास्यतां महाराष्ट्रभाषाभाण्डागारमिति प्रार्थयामहे।

कादम्बर्याः खल्वितिवृत्तं कथासरित्सागरतो बृहत्कथाया वा संगृहीतं भट्टबाणेन। तदेतदपि प्रबन्धेऽत्रावश्यमुल्लेखनीयमिव प्रतिभाति। प्रणयपूर्वं किलैतन्निवेद्यते तत्स्वीक्रियतां यद्युचितम्।

प्रचीयतां प्रतिक्षणमधिकाधिकं प्रेमेति शिवम्।

विनीतवशंवदो
विद्यावाचस्पतिपदविडम्बनः श्रीअप्पाशर्मा
सं-चं-स० सम्पादकः

---

## दुषधातोरिव क्वापि दोषसम्पत्तये गुणः

मञ्जूषायाः ८३तमे पृष्ठ "हृत्पिण्डस्य प्रतिद्वन्द्वी...दिक्भ्रान्त पथिकेरा" इति पठित्वा नूनं विस्मयविमूढाः सञ्जाता बहवो वाचकमहाभागाः। अस्माभिर्विलिखितं "हृद्पिण्डस्य प्रतिद्वन्द्वी"ति। यथाऽशुद्धे हृद्पिण्डशब्दे घोषवदघोषयोः साहचर्यं तथा दिक्भ्रान्तशब्देऽपि वैपरीत्येन सन्दृश्यत इति भावः। केनापि "संशोध्य" हृत्पिण्डस्येति विहितम् !!!

षष्टितमे पृष्ठे दृष्टं "पुनर्मुद्रिता" इति। मुद्रणालये कापि महिला वर्तते वा ?

---

* यः कौमारहरः स एव हि वर इत्यादीनां सुप्रसिद्धानां पद्यानां विरचयित्री शीलाभट्टारिका ख्रिस्तीये नवमशतके प्रादुर्भूतेति बहवोऽभिप्रयन्ति। विस्तरस्तु श्रीमता यतीन्द्रविमल-चतुर्धुरीणेन विरचिते Sanskrit Poetesses ग्रन्थे द्रष्टव्यः।

# अनुबन्धविमर्शः

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

घ-

घानुबन्धाश्चत्वारः प्रत्यया अष्टाध्याय्यामुपलभ्यन्ते। ते च घः घञ् घिनुण् घुरच् इति। घानुबन्धस्य फलं पाणिनिना प्रदर्शितं—चजोः कु घिण्ण्यतोः [ ७।३।५२ ] इति। चकारजकारयोः कवर्गादेशो भवति घिति ण्यति च प्रत्यये परत इति तदर्थः।

ततः परवर्ति सूत्रं न्यङ्क्वादीनां च [७।३।५३] इति। तस्य चार्थः— न्यङ्कु इत्येवमादीनां कवर्गादेशो भवति। न्यङ्क्वादिषु मेघः निदाघः अवदाघः अर्घः इति घञन्ताः पठ्यन्ते। एतस्माच्च प्रतीयते मेघादिशब्देभ्य एव घकारः पाणिनिना गृहीत इति।

घः—पुंसि संज्ञायां घः प्रायेण [३।३।११८]। करणाधिकरणयोश्चेति पूर्वसूत्रात् करणाधिकरणयोरित्यनुवर्तते, तेनायमर्थः "पुंलिङ्गयोः करणाधिकरणयोरभिधेययोर्धातोर्घः प्रत्ययो भवति, समुदायेन चेत्संज्ञा गम्यते। दन्तच्छदः। उरश्छदः।...घकारः छादेर्घे० [ ६।४।९६ ] इति विशेषणार्थः।" इति काशिका। छादेर्घेऽद्व्युपसर्गस्येति सूत्रेण छादेरङ्गस्याद्व्युपसर्गस्य घप्रत्यये परत उपधाया ह्रस्वो विधीयते। केवलेऽस्मिन् प्रत्यये परत एव तत्कार्यं भवतीति बोधनाय पुंसि संज्ञायामिति सूत्रे प्रत्ययस्य घित्त्वं विहितम्।

घञ्—पदरुजविशस्पृशो घञ् [ ३।३।१६ ] इत्यादिभिः सूत्रैर्घञ् विहितः। प्रत्ययस्य घित्त्वात् पाकः त्यागः रागः रोगः इत्यादयः सिध्यन्ति। ञित्त्वादेषामुत्सर्गत आद्युदात्तत्वं भवति।

घिनुण्—शमित्यष्टाभ्यो घिनुण्। संपृचानुरुधाङ्यमाङ्यसपरिसृसंसृजपरिदेवि-संज्वरपरिक्षिप-परिरट-परिवद परिदह-परिमुह-दुष-द्विष-द्रुह दुह-युजाक्रीड-विविच-त्यज-भजातिचरापचरामुषाभ्याहनश्च [ ३।२।१४१-२ ] इत्यादिभिः सूत्रैर्घिनुण् प्रत्ययो विहितः। अत्र द्वैतीयीके सूत्रे चोः कुत्वार्थं घित्त्वं प्रत्ययस्य। अत एवोक्तं काशिकायां—घकार उत्तरत्र कुत्वार्थः। उकार उच्चारणार्थः। णकारो वृद्ध्यर्थ इति। सर्वेष्वेव सूत्रेषु ताच्छील्यादीनां वर्तमानत्वादविशेषेण घिनुण् विहितः। अभिविधौ भाव इनुण् [ ३।३।४४ ] इतीनुण्प्रत्ययोऽपि दृश्यते।

घुरच्--भञ्जभासमिदो घुरच् [ ३।२।१६१ ] इति सूत्रेण घुरच् विहितः। भञ्जेः कुत्वार्थं प्रत्ययस्य घित्वमावश्यकम्। भासुरेति पदं कुरचापि सिध्यति, मेदुरार्थं पुनरुरजपेक्ष्यते। सर्वमिदं विभाव्य लाघवार्थं श्रवणसौष्ठवार्थं चाचार्येण "भञ्जभासमिदो घुरच्" "विदिभिदिच्छिदेः कुरच्" इति सूत्रद्वितयं विरचितम्। चित्त्वादन्तोदात्तत्वम्।

तद्धितप्रत्ययानामप्यादौ घकारो दृश्यते, स पुनरनुबन्धो न भवति। तस्य स्थाने आयनेयीनीयियः फढखछघां प्रत्ययादीनाम् [ ७।१।२ ] इति सूत्रेणेयादेशो विधीयते। घादयश्च तद्धितप्रत्ययाः—घ घच् घन् घस्। किमिदंभ्यां वो घः [ ५।२।४० ] इति सूत्रेण वकारस्य घत्वं विहितं तत्रापि घस्य इय् भवति।

घ—क्षत्राद् घः [४।१।१३८], अपोनप्त्रपांनप्तृभ्यां घः [ ४।२।२७ ] महेन्द्राद् घाणौ च [ ४।२।२९ ] राष्ट्रावारपाराद् घखौ [ ४।२।९३ ] समुद्राभ्राद् घः [ ४।४।११८ ] सहस्रेण सम्मितौ घः [४।४।१३५] नक्षत्राद् घः [४।४।१४१] यज्ञर्त्विग्भ्यां घखञौ [५।१।७१ ]।

घच्—घच्छौ च [४।४।११७]। चित्त्वादन्तोदात्तत्वम्। अत एव घच् छौ इतिच्छेदः, न पुनः घ छौ इति।

घन्—शुक्राद् घन् [४।२।२६] तुग्राद् घन् [४।४।११५] पात्राद् घंश्च [ ५।१।६८ ] [ बह्वचो मनुष्यनाम्नष्ठज्वा] घनिलचौ च। प्राचामुपादेरडज्वुचौ च [ ५।३।७९-८० ]। नित्त्वादाद्युदात्तत्वम्।

घस्--[ ऋतोरण्। ] छन्दसि घस् [ ५।१।१०६ ]। सित्त्वात्प्रातिपदिकस्य पदसंज्ञा, तेन ऋत्वियशब्दसिद्धिः।

घोऽपि तद्धितप्रत्ययो वर्तते। स च तरप्तमपोः संज्ञा, तरप्तमपौ घः [ १।१।२२ ] इति। घकालतनेषु कालनाम्नः [ ६।३।१७ ] घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु प्रकृत्या [ ६।३।४३ ] किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे [ ५।४।११ ] नाद् घस्य [ ८।२।१७ ] इत्यादिषु सूत्रेषु तस्य साम्राज्यम्। (क्रमशः)

———

॥ श्रीगणेशाय नमः ॥

# वीरभा

मूललेखिका—स्व० क्षमादेवीराव    नाटककर्त्री—सौ० लीलारावदयालुः

द्वेष्टा स्वस्य परस्य सेवनपटुर्वंशस्य मृत्युर्ध्रुवं
सोढव्योऽश्रुतपूर्वरीतिक-बलात्कारोऽपि बाढं नृभिः।
ये देशाभ्युदयप्रसक्तहृदयास्तेऽर्थांस्तृणीकुर्वते
सत्सङ्गादतिदुर्जनोऽपि जगति प्रायो भवेत् सज्जनः॥

सूत्रधारः। विज्ञापयामि महानुभावान्।

बहुवर्षाणि देशार्थं हीनपक्षावलम्बिना।
कृषिकाणां सुमित्रेण कृतो येन महोद्यमः॥

तस्यैवाद्य खल्वस्मदीयदेशपितुः संस्मरणेन प० क्षमारावरचितां कथां प्रयोक्तुमुद्यता वयम्।

[ दृश्यम्। गुर्जरदेशे बोरसदग्रामान्तरे हरिदासनाम्नः कस्यचित् कृषकस्य कुटीरम्। वामतः प्राङ्गने खट्टोपविष्टाः काश्चित् स्त्रियो वीरभां प्रतीक्षमाणा दृश्यन्ते। शिलोपविष्टा तर्कुहस्ता वृद्धा जननी चिन्ताकुला प्रतीयते। दक्षिणतश्च कुटीरे स्वल्पसम्भारसंयुतः प्रकोष्ठः, यत्र दोलैका, खट्वायुग्मं, चुल्लिका, कानिचिद्भाण्डानि च विद्यन्ते। क्वचिद् गवां हम्बारवः श्रूयते, क्वचित् तर्कुनादश्च। प्रदोषकालः। ]

जननी। ( सखेदम् ) नाद्युतापि प्रतिनिवृत्ता सा। ( निश्वस्य ) देवो रक्षतु।

प्रथमा। ग्रामाद् ग्रामं पर्यटन्ती सा विलम्बिता नूनम्।

द्वितीया। अतिनिन्द्यः खलु मत्ताधिकारिणां तदाचारः। ये लीलावतीं कपोले ताडयामासुः।

प्रथमा। श्रुतं च मया—दृष्ट्वा तामविरुन्धानां सहमानां च दुष्कृतिम्।
वृद्धमन्युः पुनः साध्वीं प्रजहार खलाधमः॥ इति।

द्वितीया। प्रहारैरवसीदन्ती दीना सा मूर्च्छिता निपपात। ननु तत्प्रतीकारोऽपि चिन्तनीयो वीरभया।

जननी। अथ किम्? चतुरा मे सुता।

प्रगल्भा च प्रतिद्वन्द्वे बलिभिः पुरुषैरपि।
व्यस्माययज्जनान् सर्वान् स्वया सा कायसम्पदा॥

अपि च, जानासि जातु सा रात्रौ निर्गते निजभर्तरि।
लुण्टाकेन प्रविष्टेन युद्ध्वा तं निरकासयत्॥

प्रथमा। आं, जानाम्येतत्। अथ तव पुत्रोऽपि...

द्वितीया। विदेशीयवस्त्रनिषेधे यानस्य पुरतः शयानो निजप्राणानपि व्यसृजत्।

सर्वाः। अहो दैवगतिः! धन्योऽसौ वीरः।

जननी। ( सखेदम् ) हा! केवलमेकैव सुता मे। ( अश्रूणि मार्जयति। )

प्रथमा। अथ शावकोऽपि स्तनन्धयः।

जननी। आम्। दिष्ट्या वंशाङ्कुरो मातृहीनः पौत्रोऽयं प्रदत्तो दैवेन।

द्वितीया। तेनैव प्राणप्रिय बालं क्षणमपि न त्यजति। ( विदूराच्छकटशब्दः श्रूयते जनघोषश्च—"जयतु वीरभा!" "जयतु वीरभा!" इति। )

सर्वाः। ( सौत्सुक्यम् ) आगता वीरभा। [ मध्यवयस्का निर्व्याजमधुरवक्त्रा देशसेविकासहाया वीरभा प्रविशति। तस्याः स्कन्धे प्रलम्बते जालकोषो यत्र डिम्भः स्वपिति। ]

जननी। ( वीरभामुपेत्य ) अहो! कियान् श्रमः सोढस्त्वया?

वीरभा। ( मातरमालिङ्ग्य ) न श्रान्ताऽस्मि मातः! प्रयाणं तु शकटेनैव कृतमस्माभिः। ( शिशुः प्रबुध्य रोदिति। जननी च तमादाय चुम्बति। )

जननी। बुभुक्षितोऽसि खलु वत्स!

वी०। ग्रामे ग्रामे ग्रामिकैः परिपूर्णं भोजिता वयम्। श्रूयतां भगिन्यः! ( अन्ये नरा नार्यश्च समायान्ति ) या कुलस्त्री लीलावती दिवानिशमस्मत्कृते प्रायस्यत् सैव तपस्विनी राजभृत्यै भृशमवमानिता।

सर्वे०। अहह! घोरं खलु तत्। किं करणीयम्?

वी०। शोभनकर्मैर्माननना तस्या अस्माभिः कर्तव्या।

प्र०। कथमिव?

वी०। मौनप्रस्थानायोजने र्धर्षणं विरोद्धव्यम्।

प्रा०। परं दुःसाध्यं खल्वेतत्।

द्वि०। नूनमतिबीभत्सं धर्षणं रक्षकैः कृतम्।

वी०। किं तावता? ग्रामे ग्रामे गत्वा सम्मेलनीया ग्राम्याः।

योऽत्याचारः कृतो घोरः प्रतिग्रामनिवासिषु।
स बलात् प्रत्यवस्थेयः क्रान्त्वा विघ्नशतान्यपि॥ (सर्वा मौनमासते।)

अये, कस्माद् बिभीत भद्राः। न लेशतोऽपि शङ्कास्थानमस्ति। अहो!

प्र०। ( नतानना ) कर्तव्येषु सभर्तृकाः परायत्ता वयम्।

वी०। अथ चेद् यूयं निश्चितचित्ता न कदापि रोधकाः स्युर्भर्तारः। ( विरम्य ) सत्याग्रहानुरूपमेव स्यान्नारीप्रस्थानम्।

ग्र० । अप्येवम् ?

वी० । यत्र कुत्रापि गत्वा, सर्वेऽपि—अङ्गना वा पुरुषा वा क्ष्वेलनीयाः ।

सभारम्भनिषेधो यस्तस्य वृत्तः किलावधिः ।
अस्मद्विघटनायाद्य प्रभवन्ति न रक्षिणः ॥

( काश्चित् स्त्रियः संशयापन्नमानसाः, अपराश्च मन्दमर्मरैः शब्दैः संमतिं सूचयन्ति । )

वी० । ( नरान् प्रति ) अयि बान्धवाः ! युष्माभिरप्यस्य प्रस्तुतस्य गौरवमवगन्तव्यं काले च साहाय्यं विधेयम् ।

नराः । अथ किम् ! ( तेषां मध्यतः शुकनासो दीर्घकायो ग्रामाधिपो वीरभामुपेत्य )

ग्रामाधिपः । किमनुष्ठीयतेऽद्य ?

वी० । अपि ग्राम्यैर्भूकरं दापयितुम् आगतो भवान् ?

ग्रा० । ( तर्जनीं विधुन्वन् ) फलितं न्यायभङ्गस्य नचिरादेव ज्ञास्यसे ।

वी० । ( रुदन्तं डिम्भं सान्त्वयन्ती ) अवेह्यस्मद्विनिश्चितम् ।

ग्रा० । किं तत् ?

सर्वाः । यावन्न लभ्यतेऽस्माभिः स्वराज्यं चिरकाङ्क्षितम् ।
तावन्नैव प्रदास्यामः प्राणान्तेऽपि भुवः करम् ॥

सर्वे० । ( हसन्तः ) राज्यभृत्येभ्योऽपि निश्चयोऽयं मुदा विनिवेद्यताम् ।

ग्रा० । अलमतिप्रसङ्गेन । गृहकार्यमेव युक्तं स्त्रिया न पुनरन्याय्यप्रोत्साहनम् ।

वी० । किमत्रान्याय्यम् ? अद्यैव यात्राया निषेधस्तु समाप्तः ।

ग्रा० । ( सरोषम् ) त्वादृशाः कुहका लोकविध्वंसहेतव एव । न्यायभङ्गोऽयं च सर्वथा विपदावहः ।

सर्वे० । मैवं मैवम् ।

ग्रा० । श्रूयतां भद्राः । ( निर्भर्त्सयन् )

तीव्रदण्डास्पदं नूनं भविष्यथ न संशयः ।
भविष्यति यदोच्छेदो भारतस्य समन्ततः ॥
तदैव नायकस्तोमश्चक्षुरुन्मीलयिष्यति ॥

वी० । हिंसा न कथमपि शान्तिसाधनम् । असन्तोषस्य मूलकारणं शासकैस्तत्त्वतो ज्ञेयम् । ( क्रुद्धक्षुभितलोकानां मर्मरध्वनिः श्रूयते । )

ग्रा० । किमज्ञानां प्रलापैः । ( सावहेलं निष्क्रान्तः । )

वी०। अस्तु! सख्यः! अहिंसासत्यव्रतेनैव वयं बद्धाः, महात्मना च धर्मैकनिष्ठतां शिक्षिताः स्मः।

सर्वे०। नूनम्।

वी०। दीपद्वयमिदं मोहतमोविध्वंसकारणम्।
स्वातन्त्र्यरूपमोक्षस्य पदवीं दर्शयिष्यति॥

सर्वे०। युक्तमेतत्। सत्यमेतत्।

वी०। तद् बोरसदस्य चतुःशाले राष्ट्रियध्वजहस्ताः सुसज्जिता गमिष्यथ।

प्र०। बाढम्।

द्वि०। तथास्तु।

अन्याः। अवश्यं गमिष्यामः।

वी०। प्रत्येकस्माद् ग्रामात् स्त्रीणां द्वयं द्वयमधिष्ठाय पताकां श्रेणीभूय च क्रमेणैव बोरसदाङ्गने समेयात्। (विरम्य) किं युष्माभिर्विनिश्चितम्?

सर्वाः। अवश्यम्। अथ किं, वीरभे, आम्। सज्जाः स्मः।

प्र०। अस्त्वेवम्, किन्तु सर्वासां त्वमेवाग्रगामिनी भव।

वी०। भवतु। (परितो विलोकयन्ती जननीं प्रति) क्व नु मे स्वामिपादाः? न कुत्रापि दृश्यतेऽसौ?

सैनिकः। (सखेदम्) हन्त! करं साधयितुं तव क्षेत्रं विक्रीणते रक्षकाः।

वी०। कुर्वन्तु ते यथेष्टम्। जानामि तद्विभीषिकाम्।

अन्यः। भद्रे! क्षेत्रविक्रयात् प्रागेव तव पतिः कार्पासानि समुच्चेतुमगात्।

जननी। (चिन्ताकुला) इतो द्विक्रोशमात्रदूरे खल्वस्मद्ग्रामः। न जाने कस्मादेवं चिरायते।

सैनिकः। (सान्त्वयन्) अलं चिन्तया, साध्वि, गच्छामि तदन्वेषणाय।

जननी। (निश्वस्य) अपराह्णो व्यतीयाय सायं सन्ध्यापि निर्ययौ।
तथापि वीरभाभर्ता नागतो गृहमात्मनः॥

वी०। (लालयन्ती) एहि मातः, स्तोकं विश्रम। (शय्यां रचयति) पाकविधिं निर्वर्तयामि। क्षुधित एव प्रत्यागमिष्यत्यसौ। (मातरं शय्यां नीत्वा, वीरभा बहिरागच्छति।) (नारीः प्रति) अथ मध्याह्नात् पूर्वमेवाशु बोरसदाङ्गनं प्राप्तव्यम्।

सर्वाः। भवतु भगिनिके! प्रस्थानाय सम्प्रति वयं सर्वाः सज्जाः स्मः। (स्वराज्य-विजयनिर्घोषमुदीरन्त्यः प्रहर्षुला निष्क्रान्ताः।)

पटीक्षेपः

## द्वितीयं दृश्यम् ।

[ अपरेद्युः सूर्योदयकालः । जननी खट्वायां सुखं स्वपिति, डिम्भश्च स्वदोलायाम् । त्रापुषदीपहस्ता वीरभा ससंभ्रमं प्रविशति । ]

वी० । अम्ब ! अम्ब ! केनापि चोरितं गोधनमास्माकीनम् ।

जननी । ( प्रबुद्धा ) किं ब्रवीषि ?

वी० । ( जननीमुपेत्य ) अम्ब, रिक्ताद्य गोशाला, गावश्च सर्वा लुण्ठिताः ।

जननी । ( कम्बलमपास्य, उत्थाय ) किं वृद्धया सह परिहससि ? ( वीरभां स्पृशन्ती ) किं वृत्तम् ? ब्रूहि मां वत्से । कस्माद् वा खिन्नासि ?

( प्रतिवेशिनः प्राङ्गनं प्रविशन्ति । )

वी० । ( विलपन्ती, सगद्गदम् ) यदा गोष्ठपार्श्वमगच्छं द्वारमुत्कीलितमासीत्, तालं च भुवि पतितम् । शून्यं च गोष्ठम् ।

जननी । ( सक्रोधम् ) अहह ! धिगेतान् स्तेनशासकान् !

प्रतिवेशी । तेषामेव चेष्टितमेतत् ।

वी० । किं वक्ष्यति भर्ता श्रुत्वैतत् ! अद्यापि तु न निवृत्तोऽसौ ।

जननी । मितभाषी शान्तोऽपि नूनं कुप्येत् ।

प्रति० । राजपुरुषैरेवापनीता गावः ।

अपरः । कः सन्देहः ?

अन्यः । अलं विलापेन सौम्ये, न हि दुरासदा गावः । सपद्येवान्विष्यामः ।

वी० । ( शिरो विधुन्वती ) अन्वेषणमपि तु व्यर्थम् । वेद्मि के तस्करास्ते ।

प्रति० । कथन्नु सन्त्रासयन्त्यस्मान् स्वदेशजान् इमेऽधिकारिणः ! तथापि गवेषयिष्यामः । ( इति निष्क्रान्ताः प्रतिवेशिनः । वीरभा च स्खलद्गत्या कोष्ठं प्रविश्य, दोलां मन्दं मन्दमान्दोलयति, ततश्च गृहकर्मणि निरता दृश्यते । कुटीरं परितो वायोराकुलस्वनः श्रूयते । ) हा ! न जाने कुतश्चिरायत एतावत् ।

[ विदूराज्जीर्णगर्गरशकटस्य शब्दः श्रूयते । ततश्च पादध्वनिः । वीरभा सौत्सुक्यं प्राङ्गनं गच्छति, वृद्धा च तामनुसरति । रक्तलिप्ताम्बरधरं गृहस्वामिनं हरिदासमुद्धृत्य शनैः शनैः प्रविशतः सैनिकौ । ]

वीरभा । अविहा ! अविहा । किं घोरमापतितम् ! ( क्रन्दति । )

जननी । ( अवनम्य ) हा पुत्रक ! हा पुत्रक ! विसंज्ञोऽसि किम् ?

सैनिकः । ( मन्दस्वरेण ) मौनमाश्रयतां तावत् । शब्देन विक्षुब्धः स्यादसौ ।

वीरभा । ( कोष्ठं निर्दिशन्ती ) तत्रैव नेयः । ( सैनिकौ शयने हरिदासं स्थापयतः ।

सैनिकः। ( उपांशु ) नोपरोध्योऽसौ, सुखं स्वपितव्यमित्यादिष्टं वैद्येन। ( वीरभा जलमानीय व्रणानि प्रक्षालयति। अन्ये च द्वारमुपसर्पन्ति। )

जननी। अहो, सौम्य, ब्रूहि किन्नु वृत्तम्।

सैनिकः। यदासौ निजक्षेत्रे तूलबीजमचिनोत्, तदा क्रूरै रक्षकैरसौ ग्रामप्राग्रतोऽनायि। ततश्च क्रुद्धो ग्रामाधिपस्तं तर्जयामास। "देहि रे भूकरं, नोचेत् ते मस्तकं चूर्णयिष्यामि" इति।

जननी। } धिङ् नरपशून्!
वीरभा। }

द्वितीयः सैनिकः। निराकृत्य यदा वाक्यं तव भर्ता निरुत्तरः।
अवज्ञया स्थितो धीरः सत्याग्रहबलोर्जितः॥

सैनिकः। तदानमय्य तद्देहं स्वस्तिकीकृत्य तत्करौ।
संस्पर्श्य च पदाङ्गुष्ठौ चिराय स्थापितो बत॥

वी०। अहह! मम प्राणवल्लभ, कथं पीडितोऽपि? ( अश्रूणि मार्जयति। )

अन्यः। हठादेवमवष्टब्धं कशाघातैः पर्यायेण चछटच्छटिति रक्षकौ प्रजह्रुः।

जननी। धिङ् नरवेतालौ।

सैनिकः। ततश्चैनं प्रतिद्वादशघातान्ते ततर्जतुः।

जननी। गर्हितं खलु।

सैनिकः। ऊचतुश्च—"रे मूढ, झटिति ब्रूहि, करं दास्यसि वा न वा?
नो चेद् वक्रस्वभावस्य सदृशं फलमाप्नुयाः॥"

अन्यः। अथ तर्जितस्ताडितश्चापि निर्भयः स्थितोऽसौ निश्चलात्मा पर्वतराडिव।

जननी। जानामि धीरोऽसौ खल्वस्मज्जामाता, सहिष्णुश्च।

सैनिकः। ततः शठौ स्वामिनस्ते प्रताडनं भूयोऽपि प्रारभेताम्।

जननी। अहो! पिशाचौ नन्वेतौ।

सैनिकः। परःशतप्रहारान्ते पपात मूर्छितो भुवि।
तितिक्षावर्मनद्धोऽपि यातनां सोढमक्षमः॥

अन्यः। तावच्च मामुपायान्तं रक्षिचत्वरपार्श्वतः।
आहूय रक्षकः कश्चिन्मद्वशे तं समार्पयत्॥

वीरभा। ततस्ततः।

अन्यः। अनैषं सवयस्योऽहं रुग्णशालां पतिं तव।
प्रत्यग्रनिर्मितां लोकै रासग्रामनिवासिभिः॥

सै०। भिषजा च तत्र सम्यगुपचरितम् ।

सै०। अचिराद्वैद्यशालायां क्षणं संज्ञामवाप्य सः ।
बलात्कारकथामेतामब्रवीन्मां समासतः ॥

वी०। कथमत्र चिकित्स्येत? रामग्रामस्तु दूरे वर्तते ।

जननी। यानमपि तु न विद्यते ।

सै०। अलं क्लेशेन, मातः! नेदानीं चिन्तावकाश इति प्रतिपादितं वैद्येन। समाश्वसिहि!

अन्यः। सुखं शेते। गच्छावस्तावत्। अन्येऽपि देशसेवकाः परिचर्याः!

वी०। महती कृपा! उपकृता वयं ननु। ( निष्क्रान्तौ सैनिकौ। )

( विदूराद् वेदनाशब्दा हाहाकाराश्च श्रूयन्ते—"हतशासकाः" "शासकत्र् वाः" इति शब्दाश्च। )

पटोक्षेपः।

[ होराद्वयं व्यतीतम्। हरिदासमुपचरन्ती वीरभा दृश्यते। तन्मुखोपान्ते सा पात्रं धारयति। असौ च शनैः शनैः पिबति। ]

हरिदासः। ( मन्दस्वरेण ) अपि त्यक्तः प्रस्थानसंविधिस्त्वया?

वी०। न हि त्यक्तः। अचिरादेव प्रयास्यामः।

जननी। ( साश्चर्यम् ) किन्तु नालमिदं कष्टं यदन्यत् काङ्क्ष्यते पुनः?

वी०। अस्मान् संत्रासयितुमुद्यताः खलु रक्षकाः। तेनैव न कथमपि त्याज्यो निश्चयोऽयम्।

हरि०। प्रयातु भवती। अचिरादेव रूढव्रणो भवेयम्। ( इति नेत्रे सम्मील्य स्वपितुं प्रयतते। )

[ वीरभा शिशुं जालकोशे निवेश्य, स्कन्धे तमुल्लम्बयति, ततश्च दक्षिणहस्तेन राष्ट्रियध्वजं धारयन्ती द्वारमुपसर्पति। ]

जननी। ( नैराश्यविह्वला ) कथं गच्छसि विहाय स्वपतिम्?

वी०। स्वस्थोऽस्ति साम्प्रतम्। अद्य चावश्यकं मत्प्रस्थानम्।

जननी। हा! पूर्वमेव विपन्नाः स्मः। ( विरम्य ) डिम्भं तु मुञ्च। मा नैषीस्तम्। अत्रैव सुरक्षितः स्यात्।

वी०। ( डिम्भं चुम्बन्ती ) मा भैषीर्मनागपि। ( सहेलम् ) अम्ब! कृशयोरपि मे बाह्वोः सारं त्वं नहि बुध्यसे। ( इति प्राङ्गनमुपसर्पति। )

( नेपथ्ये ) इत्युक्त्वा परिहासेन वीरभा ध्वजधारिणी ।
उत्कन्धरा दृढश्रद्धा निर्जगाम कुटीरतः ॥
अनुजग्मुश्च तामन्याः सोत्साहा ग्रामयोषितः ।
वन्दे मातरमित्यादिजयघोषपुरःसरम् ॥
जननी वीरभायास्तु स्थितासीत् प्राङ्गने बहिः ।
वीक्षमाणा महद् वृन्दं यावन्नयनगोचरम् ॥
उच्चैरुच्चैरभूत्तासां निर्घोषस्य प्रतिध्वनिः ।
अथ मन्दायमानः सञ्छनैरश्रव्यतां गतः ॥

( वन्दे मातरम् इत्यादयो ध्वनयः श्रूयन्ते । अत्रान्तरे जननी व्याकुलाकर्णयति । वारं वारं विलपन्ती पुनश्च बद्धाञ्जलिः प्रार्थयते । )

( नेपथ्ये ) अथ सङ्गम्य तन्मध्ये स्वजनैश्चिरमागता ।
प्रस्थानं रचयामास विधानज्ञा यथाक्रमम् ॥
पृथक् पृथग् विभज्यैवं जनतां स्वयमग्रगा ।
निर्भयं ध्वजहस्तानां योषितां मूर्धनि स्थिता ॥
प्रचचाल ततो गुर्वी जनयात्रा प्रहर्षिणी ।
महता जनघोषेण जनयन्ती मुहुर्मुहुः ॥
प्रतिध्वनितरङ्गाणामावर्तानम्बरार्णवे ।
दिव्यसन्देशगाम्भीर्यं समन्तादनुकुर्वतः ॥

[ अथ नेपथ्यादेव भीषणतुमुलनादः श्रूयते, स्त्रीपुरुषाणां विवादनिर्ह्रादाः, मनुष्याणाम् उच्चपादघातध्वनिः, जयघोषाः "जयतु जयतु लीलावती," "हतो विदेशी" "जयतु जयतु महात्मा" इत्यादयः, लगुडप्रहारशब्दः, आग्नेयास्त्रनादाः स्त्रीणामार्तस्वनाश्च ।]

( नेपथ्ये ) रक्षकः । ( सुनिष्ठुरं क्रोशन् ) स्वराज्यं युष्माभिः काङ्क्ष्यते किल ? तच्च विन्दत । ( सम्मर्दशब्दः । )

रक्षकः । भो अनार्याः ! स्वगृहान् गच्छत द्रुतम् ।

वी० । मा तावत् । आर्या ननु वयम् । निषेधस्यावधिर्व्यतीतः । सख्यः ! प्रयातव्यम् ।

रक्षकः । ( गर्जन् ) अयि दास्याः पुत्र्यः ! गच्छत स्वस्वगेहानि ! डिम्भेभ्यः स्तन्यं दत्त, अथवा विटान् सन्तर्पयत । न किञ्चिदिह वः कार्यं विद्यते ।

अन्यः । यथेष्टं कुरुध्वं गोष्ठेषु ।

स्त्रीणां वृन्दम् । जयतु लीलावती ! जयतु लीलावती ! विजयतां महात्मा !

रक्षकः । अथ चेन्न निवर्तध्वे, तीव्रताडनमाप्स्यथ ।

स्त्रियः। यथेष्टं क्रियताम्। न वयं कातराः। ( चीत्कारशब्दः। )

[ डिम्भस्य खेदनम्। लगुडताडनम्। "हा हे" त्यनवरतं क्रन्दनध्वनयः श्रूयन्ते। ]

वी०। सख्यः! प्राणव्ययेनापि रक्षत ध्वजान् सर्वतः।

रक्षकः। देहि पताकाम्। मुञ्च ध्वजम्।

अन्यो रक्षकः। मुञ्चैनम्।

स्त्री०। नहि! नहि!

अपराः स्त्रियः। नैव, नैव! ( आग्नेयास्त्रधभद्धभद्ध्वनिः, आर्तयोषितां वदनकुहरात् कातरोक्तयः "हा! हताः स्मः! देवो रक्षतु!" इत्यादयः। )

रक्षकः। नाधुनापि त्यजन्ति हठं पुंश्चल्य इमाः। तत् पश्यामः।

सैनिकः। ( नेपथ्ये ) हा हन्त! महानुपद्रवोऽयम्!

अन्यः सैनिकः। वनितावृन्दं नानादिग्भ्यः समायातम्।

सैनिकः। जानासि। मदोन्मत्ता नरा एते ध्वजानपजिहीर्षवः।
निर्घृणं ताडयामासुर्वृद्धाश्च तरुणीरपि॥

अन्यः सै०। प्रहृता अपि मानिन्यो न यान्ति शरणं शठान्। प्रत्युत, मुमूर्षवो भूमाववाङ्मुखं शेरते।

सै०। ध्वजादिषु चापहृतेषु, उरसि पीडिताः परां व्यथां सहमाना निश्चला निपतन्ति।

( प्राङ्गने ) जननी। भयङ्करं खल्वेतत्।

सै०। आग्नेयास्त्रविकुण्ठाग्रैः काश्चित्पृष्ठे विमर्दिताः।
इतराश्च नितम्बेषु पादुकाभिः प्रताडिताः॥

अन्यः सै०। निराक्रोशमसह्यवेदनां सहमानाः स्तब्धाः प्रतीयन्तेऽमूः।

सैनिकः। पार्ष्णिभागस्थास्तु महाव्यथां सहन्ते। काश्चिद्द्रोणीभिराकृष्टाः, अपराश्च पादैः प्रहृताः।

जननी। अहह! अतिघोरमेतत्। ( पुनरप्याग्नेयास्त्रध्वनिः श्रूयते। )

सै०। पश्य! याः स्तनयोर्मध्ये ध्वजान् गोपयन्ति, ता अपि कुट्टिताः शठैः, इतराश्च सफूत्कारं विद्राविताः।

जननी। ( क्रन्दन्ती ) हा, किं भवेन्मम वीरभायाः? देव! रक्ष ताम्।

अन्यः। कोऽयं नरो यो नारीणामुपचारकर्मणि संलग्नो दृश्यते?

सै०। स तु वैद्यः, द्य एव प्राप्तो मोहमय्याः।

अन्यः सै०। स्वदेशीयमण्डलेन (congres-) प्रेषितः स्यात्। एहि गच्छावस्तावत्। आवाभ्यामपि विधेयं किञ्चित् साहाय्यम्।

सै०। आम्, मूर्च्छिता योषितो रुग्णालयं प्रापयितव्याः। ( निष्क्रान्तौ )

जननी। ( विलपन्ती ) हा, हतभाग्यास्मि नूनं, विवशा च। कथं गन्तव्यं मया ? दुर्बलोऽयं कायः। कथं वा हरिदासं त्यजेयम् ? ( इतस्ततो व्याकुला किंकर्तव्यतामूढा परिक्रामति, ललाटं च ताडयति। )

[ "जयतु वीरभा !" "जयतु वीरभा !" इति शब्दः श्रूयते, ततश्च पादध्वनिः। मूर्छितवीरभान्वितां शिबिकां वहन्तौ सैनिकौ प्रविश्य। ]

सैनिकौ। मातः, भीषणो लगुडप्रहारः संवृत्त, भूरि च विक्षता भवत्सुता।

जननी। ( शिबिकामुपेत्य, क्रन्दति ) हा पुत्रि वीरभे। ( सैनिकाय प्रकोष्ठं निर्दिशति। सैनिकौ शिबिकां प्रकोष्ठं नीत्वा वीरभां शयने स्थापयतः। हरिदासोऽपि शनैरुत्थाय खञ्जन्, शयनमुपेत्य, स्वभार्यां सस्नेहं स्पृशति। )

सैनिकौ। अलं सन्तापेन ! अचिरादेव स्वस्था स्यादिति भिषजोक्तम्। (द्वारमुपसर्पतः। ) अन्या अपि नार्यः स्वगेहं नेयाः। ( इति निष्क्रान्तौ। )

[ वीरभा स्वभर्तृमातृभ्यामुपचरिता शनैः शनैः संज्ञां लभते। प्रबुध्य, नेत्रे उन्मीलयन्ती स्वकराभ्यामेवोरोदेशं स्पृशति, सहसा च स्मृतमध्याहृत्ता विवर्णाननत्वमधिगच्छति। ]

वी०। ( दीर्घं निश्वस्य, मन्दं विलपति ) हा हा ! कुत्र मे बालरत्नम् ?

जननी। ( सगद्गदम् ) न युक्तं तुमुले नेतुं शिशुमित्यसकृन्मया ?
अहो बोधितपूर्वापि त्वमनैषीर्हठाद् बत ॥

हरि०। ( सान्त्वयन् ) मा शुचः सर्वथा कान्ते, विलापोऽद्य निरर्थकः।
रक्षितो हि भवेद्वत्सो दैवात् केनापि साधुना ॥

वी०। ( रुदती ) कथमन्वेषणीयोऽसौ ? विवशाः स्मः।

हरि०। अलं विषादेन। कश्चित्प्रातिवेशिकोऽन्वेषणाय गमिष्यति।

वी०। तत्तु न सम्भवति। सर्वेऽपि ग्रामीणा वीरसदं गताः।

ज०। हा ! कुतो नीतोऽसौ ! हा किं वा भवेन्मम प्राणप्रियस्य !

वी०। ( सशिरःकम्पम् ) किं बहुना !

भारतीवीर्यशश्चिह्नं मया केतुः सुरक्षितः।
तदर्थे किल हा हन्त दत्तं मूल्यं महत्तमम्।
त्यक्तसर्वस्वया नाथ दैवोपहतया मया ॥

( चोलान्तगूढं ध्वजवस्त्रमपनयति। विदूराज्जयघोषः श्रूयते। )

जननी। अहो धन्या अमी लोका हृदि येषां मनागपि।
बलात्कारः सुघोरोऽपि भयं नाजीजनत् क्वचित् ॥

ह० । न वेत्सि ? स्वराज्येप्सामहावह्निर्वर्धते स्माधिकाधिकम् ।
सत्याग्रहैकनिष्ठानां हृदयेषु निरन्तरम् ॥
वी० । प्रस्थानं यदि कार्यं नः श्वोऽपि, सज्जा वयं स्थिताः ।
सकृदेव विनश्यन्ति न पुनर्द्विः शरीरिणः ॥
ह० । नूनमेवम् । जातस्य चेद् ध्रुवो मृत्युर्देशकार्ये वरं मृतिः ।
जीवनं न तु दासस्य देशद्रोहविधायिनः ॥
( दूरादस्पष्टो रोदनध्वनिः श्रूयते धेनूनां च विह्वला आरावाः । )
वी० । ( कर्णौ दत्त्वा समुत्सुका ) अये ! किमेतत् ?
हरि० } ( द्वारमुपसर्पन्तौ ) अहो ! सैनिकः पुनरागतः ।
ज० }
सै० । ( सस्मुखम् ) प्रियमावेदये किंचित् ! दृश्यताम् !
( धृतार्भकः खद्दरवेष्टितः कश्चित् परिचितः प्रविशति । )
ग्रामाधिपः । एष वो बालपुत्रः । ( हरिदासस्य हस्तयोः समर्पयति । )
ह० । ( प्रहृष्टः ) कुत्र नु लब्धो पुत्रकः ? धन्योऽसि खलु, निपुणश्च ।
ग्रा० । किमत्र नैपुण्यम् ?
अपश्यं सार्भकां भार्यां धन्यां ते तुमुले यदा ।
ध्वजरक्षापरिव्यग्रां तदा चिन्ताकुलोऽभवम् ॥
ततश्छिन्ना मया रज्जुः शिशुकन्थावलम्बिनी ।
स्कन्धात्त्वदीयभार्याया अपनीतश्च बालकः ॥
सर्वे । ( समकालम् ) अहो सौजन्यम् ! धन्योऽसि महाभाग !
ग्रा० । धेनवोऽपि सुरक्षिता मया ।
वी० । कथमनृणा स्याम् !
ग्रा० ( निवार्य ) यद्यस्ति मयि विश्वासः सौम्याः, श्रूयतां मम वचनम् ।
सर्वे । कथ्यतां तावत् ।
ग्रा० । तच्छ्रूयताम् । जीवनस्यात्मनो वृत्तं राक्षसीयं चिराश्रितम् ।
एषोऽस्मि दिवसानेतान्नियुक्तो घोरकर्मसु ॥
दुर्जातत्रात्ययुक्तेषु सञ्जातोऽतिजुगुप्सितः ॥
ह० । ततस्ततः ।
ग्रा० । यदाहमेकदाश्रौषं वर्ण्यमानानि युक्तिभिः ।
सत्याग्रहस्य तत्त्वानि बान्धवानां पुरस्त्वया ॥

वी० । ( मृदुस्वरं ) परिवर्तितचित्तोऽयं प्रतीयते खलु ।

आ० । अथ किम् ।

नितरां व्याकुलोऽभूवं लज्जितो दुरितैर्निजैः ।
स्त्रीजनस्याभ्यवस्कन्दान्निवृत्तं च मनो मम ॥

जननी । तत् कस्मादद्यैव क्रूरकर्मणि प्रवृत्तोऽभूद् भवान् ?

आ० । मातः ! किन्तु खलु करणीयं मादृशेन दासेन ? अधिकारिभिरेवादिष्टमेवम् ।

अथ च—असहाया यदापश्यमहिंसातत्पराः स्त्रियः ।
युध्यमाना बलात्कारदुर्मदैः पुररक्षिभिः ॥
अक्षमो रक्षितुं रक्ष्याः प्रेक्ष्य च क्षोभितं शिशुम् ।
कक्षमूले तमाक्षिप्य क्षिप्रमागामलक्षितः ॥

वी० । ( पुत्रमालिङ्ग्य ) साधु कृतं भद्र ! धर्मज्ञोऽसि, सदयोऽसि नूनम् ।

आ० । विवशास्ते मदोद्रेकादासन् सहचरा मम ।
दिष्ट्या निवृत्तपानोऽहं नोचेत्तत्सदृशं किल ।
आचरिष्यमहं चापि नृशंसैः सह संगतः ॥

वी० । साधु भोः साधु ! स्मरामि रक्षिणां मद्यस्य दुर्गन्धं श्वासदूषकम् । प्रशंसनीयो भवतस्त्यागः ।

आ० । इदानीं च रक्षिकार्यमपि त्यजाम्यहम् ।

ह० । केन हेतुना ?

आ० । सत्याहिंसासरणिमनघां येऽनुयाता महान्तः
क्षुद्रः कश्चित् परिचरणकृत् तादृशानामहं सन् ।
घोरं कारागृहमनुगतो मार्जयिष्याम्यघं स्वं
मृत्युः श्रेयाननशनजनिर्दास्यतो दुर्जनानाम् ॥

पटीक्षेपः

## नामधातोरुदाहरणम्

A red-faced crook who makes a living by hanging around on the edge of the financial world and *yess-ing* [ ओमयित्वा ] everybody. He has *yessed* [ ओमितवान् ] me for years....A very different person, now this J. B. Hoke, from the respectful underling who had *yessed* [ औमयत् ] Mr. Frisby for so many years. WODEHOUSE, *Big Money*, Chapter VIII.

# नाथ-सम्प्रदायः

[ श्रीगजानन-लक्ष्मण रेगे, बी-ए ]

( पूर्वतोऽनुवर्तते )

अथाचारधर्मः ।

आचारप्रभवो धर्मो धर्मस्य प्रभुरीश्वर इति तत्त्वं नाथपथस्याभिमतम्। नाथ-सम्प्रदाये योगप्रक्रियायै महत्त्वपूर्णं स्थानं दीयते तथा धर्माचरणायापि। शरीर-दार्ढ्यार्थमेव तैरासनगतविशेषा आयोजिताः। शरीरस्यानामयत्वे तेषां कटाक्षः। काय-सम्पदभिलाषो नैहिकसुखाय किन्तु समाधिसाधनार्थमस्त्विति तैः प्रतिपाद्यते साग्रहम्। यमनियमयोर्महत्त्वं जानन्त्येव नाथाचार्याः। "नात्यश्नतस्तु योगोऽस्ति न चैकान्त-मनश्नतः।" जालन्धरेणोक्तम्—

थोडो खाइ लो कलपै। झलपै घणो खाइ लै रोगी।
दुहूं पखांकी सन्धि विचारै। ते को विरला जोगी॥

नाथाचार्याणां मते मुमुक्षूणां सर्वाश्रमेषु संन्यासाश्रमः श्रेष्ठः। अभ्युदयनिः-श्रेयसयोरेकसंश्रयदुर्लभत्वाद् गृहस्थाश्रमत्यागाद्विना योगमार्गाचरणं योगमार्गस्य विडम्बनं खलु। गृहस्थसंन्यासधर्मयोः सहभावित्वमशक्यमिति मन्यन्ते नाथाचार्याः। उक्तं च मुकुन्दभारतीभिः—

कलजुगमध्ये कोण जोगी बोलिए।
परजा जोगी रहै कहां? गृहे गृहे।
भवै कहां? अन्नपाणी बोलै कहां।
मैं तौं वाणी। ॐ नमो दैत्याय।

ननु गृहमेधिभिर्योगाभ्यासारम्भो नाचरितव्यः सुखोपभोगावसान इन्द्रियोपशमे च सोऽनुष्ठेय इति। न। यस्मिन्वयस्यङ्गं गलितं पलितं मुण्डं दशनविहीनं जातं तुण्डं तस्मिन्वयसि स आचरितुं कथं शक्यः? गृहस्थाश्रमे यमनियमौ शास्त्रोक्ता नियता आचाराश्च सर्वथा पालयितव्याः, सति जराजर्जरितदेहे योगसाधना न शक्या। आत्मोन्नतिः शारीरस्वास्थ्यहेतुः। सत्यं गृहस्थाश्रमाभावे गृहस्थानां योगिनां च शरीरयात्रापि न प्रसिध्येत्, जगतो व्यवहारोऽपि भवेदुत्सन्नः। तथापि गृहस्थाश्रम-धर्माचारान् प्रतिदिनमनुतिष्ठतां गृहस्थव्यापारव्यापृतानामुच्चभूमिकावस्थानमशक्य-मित्यपि सत्यम्। उत्तमाधिकारकाङ्क्षिणां गृहत्याग एव श्रेयान्। "असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु। नित्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु॥" इति भगवद्वचनात्। अपि

च तारुण्यावस्थोत्थितो वैराग्योद्भव एव यमनियमादिद्वारा समाधिसुखाय प्रकल्पत इति तेषां सिद्धान्तसारः।

### लोकस्थितिः

नाथसम्प्रदायिन इष्टदेवताऽऽराधने अलख (अलक्ष) शब्दं प्रयुञ्जते। तेनैव शब्देन गुरुः शिष्यमामन्त्रयति। आदिशशब्दपूर्वकं शिष्यस्य गुरुं प्रति प्रतिवचनम्। भैक्ष्ययाच्ञायां स्वामिनं प्रति प्रयोगोऽलखशब्दस्य। अलख (अलक्ष्य) शब्देन परमात्माऽभिप्रेतः। शिखसम्प्रदायस्य गुरुर्नानकमहाभागः साधुशिरोमणि महात्मा कबीरश्च ध्यानार्थमलखशब्दं प्रायुञ्जातामिति तत्तत्प्रणीतग्रन्थयोः पठ्यते। नाथपथस्य धर्मगुरवः "कानफाटे जोगिन" इति नाम्नाऽभिधीयन्त इतरैर्जनैः। दीक्षाग्रहणसमये साम्प्रदायिकाः कर्णवेधनं कृत्वा रन्ध्रद्वये काचमयानि काष्ठमयानि शृङ्गमयाणि वा वर्तुलाकाराणि कृष्ण-कुण्डलानि धारयन्ति। इयं योजनान्त्रवृद्ध्यण्डवृद्धिपरिहारिकेति तैः समर्थ्यते। गले च सेली नाम कृष्णसूत्रमुपयुज्यते। तथाहि पठ्यते सुश्रुतसंहितायाम्—

शङ्खोपरि च कर्णान्ते त्यक्त्वा यत्नेन सेवनीम्।
व्यत्यासाद्वा सिरां विध्येदन्त्रवृद्धिनिवृत्तये॥ चिकित्सास्थानम् अध्याय १८

कृष्णसूत्रनिबद्धैका शिट्टी (whistle) नादाभिधाना उत शृङ्गनादाभिधाना नादानुसन्धान-प्रतीकत्वेनोपयुज्यते। 'जोगिनः' सर्वाङ्गेषु भस्मधारणं कुर्वन्तो भैक्षेण जीवनयात्रां निर्वर्तयन्ति। जोगिनो वेषः श्रीगुरुदेवदत्तात्रेयस्य वर्णनेन संवदति। सम्प्रदायस्यास्य दत्त-सम्प्रदायेन भूरि साम्यं दृश्यते। दृश्यतां कविना 'महादेवसुतेन' कृतं दत्तात्रेयवर्णनम्—

जय जय दत्तराज योगी। जय जय महाराज योगी।
शैली शृङ्गी कन्या झोली। विभूत लगाया तनमो॥
कोटि चन्द्रमा तेज झूलत है। चले आपने गतमो॥
शङ्ख चक्र और त्रिशूल विराजे। गले बडी बनमाला।
जोगदण्ड अवधूत दिगम्बर। बनारस रहनेवाला॥

उत्तरप्रदेशे महाशिवरात्रिपरदिने बटिका-भोजन-समारोहो महता संरम्भेण क्रियते। भक्तदालिपोलिका तैलपक्काम्लबटका विशेषेण परिवेषणीयाः। एतद्दिनं गोरक्षनाथा-परनामधेयभोलेदिनमिति सम्बुध्यते। स्वगुरवे श्रीमत्स्येन्द्रनाथाय शिष्येण गोरक्षनाथेन स्वीयं नेत्रं बटकस्थानेऽर्पितमिति श्रूयत आख्यायिका। अस्तु।

नाथपथस्यैव समकालका बृहन्महाराष्ट्र-महानुभव-लिङ्गायत-भागवत-दत्तपथेत्यादयो नैकविधाः सम्प्रदायाः समुदिताः। एतेषु दत्तसम्प्रदायो नाथपथस्य संनिकृष्टत्वेन

वर्तत इति प्रतिभाति। दत्तसम्प्रदायस्य प्रमुखाचार्यौं जनार्दनस्वाम्येकनाथमहाभागौ नाथपथानुगृहीता इति श्रीमदेकनाथमहाराजेन स्वयं कथितमासीद् गुरुपरम्परावर्णनप्रसङ्गे। तत्रोक्तम्—

ध्यानीं बैसोनि शङ्कर। जपे रामनाम सार॥
पार्वती पुसे आवडी। काय जपतां तातडी॥
मन्त्र तो मज सांगा। ऐसो बोलतसे दुर्गा॥
एकान्तीं नेऊन। उपदेशी राम अभिधान॥
तेंचि मच्छिन्द्रा लाधलें। पुढें परम्परा चालि लें।
तोचि बोध जनार्दनीं। एका (एकनाथ) लागतसे चरणीं॥

एतत्तु चिन्त्यम्। भागवता एवात्र प्रमाणम्॥

नाथाचार्याणां परमं ध्येयं—गुरुकृपादृष्टिः, सा च स्थाने स्थाने विस्तरेण वर्णिता ज्ञानेश्वरमहात्मभिर्यथार्थदीपिकायाम्।

विषयव्याळें मिठीं। दिधलिया तुरेताठीं (मूर्छा)॥
ते तुम्हिये गुरुकृपादृष्टि। निर्विष होय॥
आधारशक्तीचिया अङ्कीं। बाढविशीं कौतुकीं॥
हृदयाकाशपल्लवीं। परियें देसीं निजें॥
प्रत्यग्ज्योतीची ओवाळणी। करिशी मन पवना ची खेळणीं॥
आत्मसुखाचीं बाळलेणीं। लेवविशी॥

महाराष्ट्रे नाथपथस्योदयस्त्रयोदशशतकात्प्रागभवदिति सुस्पष्टम्। मुम्बयीप्रदेशान्तः सातारामण्डले नागनाथ-सिद्धेश्वर-रेवणसिद्धानां देवायतनानि स्थाने स्थाने दृश्यन्ते। तथाच निवृत्तिनाथ-ज्ञानदेव सोपाननाथानां ( ज्ञा० १२७१-१२९३ ) मन्दिराणि यथाक्रमं त्र्यम्बकेश्वर-आलंदी-सासवड-ग्रामेष्वद्यापि दृश्यन्ते। भारते च नाथपथस्योदयः ख्रिस्ताब्दस्य दशमशतकस्योत्तरार्धे एकादशशतकस्य च पूर्वार्धे समभवदित्यनुमीयते॥ इति शिवम्॥

---

# प्रतिद्वन्द्विनः प्रभावः

## सुवितम्-दुरितम्

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

संहितासु सुवित-शब्दोऽन्तरान्तरोपलभ्यते। स खलु दुरितशब्दस्य प्रतिद्वन्द्वी, तस्य चार्थः सुकृतमिति। यथा दुर् इत शब्दयोः संयोगेन दुष्कृतबोधकस्य दुरितशब्द-

स्योत्पत्तिः, तथैव सु इत इत्यनयोः संयोगेन सुवितशब्दस्योद्भवः। प्रतिद्वन्द्विनि दुरितशब्दे त्रीण्यक्षराणि वर्तन्ते, अत एव सुवितशब्देऽपि त्रीण्यक्षराण्यपेक्ष्यन्ते। अत एव इको यणचि [ ६।१।७७ ] इति सूत्रेणोकारस्य वत्वमकृत्वा तन्वादीनां छन्दसि बहुलमुपसंख्यानम् [ ६।४।७७।१ ] इति वार्त्तिकेन उवङादेशः। निघण्टुगतमनवगतसंस्कारं सुवितेपदं व्याचक्षाणेन यास्केनोक्तम्—"सुविते सु इति सूते प्रजायामिति वा" इति। अस्यार्थः—सु इते इत्यनयो र्वा सूते इत्यस्य वा विकारः सुविते शब्दः। आद्य सुगते इत्यर्थः। द्वितीये प्रजायामित्यर्थः। [ ४।१६ ] इति। वाजसनेयिप्रातिशाख्ये सुवितशब्देऽवग्रहाभावः प्रतिपादितः—परीत्तोऽवत्तानां सुविताय सधिघरिति [ ५।४५ ] इति।

क्व वः सुम्ना नव्यांसि मरुतः क्व सुविता।
को विश्वानि सौभगा॥ [ ऋ० सं० १।३८।३ ]

हे मरुतः, भवतां नवतराणि प्रजापशुरूपाणि धनानि क्व भद्राणि मणिमुक्ताप्रवालादीनि क्व, सर्वाणि च सौभाग्यानि गजाश्वादीनि क्व? तैरस्मान् योजयेति हृदयम्। सुम्नानि सौमनस्यानि सौमनस्यजनितानि प्रजापशुप्रभृतिप्रसादीकरणानि। सुवितानि भद्राणि मङ्गलानि कल्याणानि। सौभगानि सौभाग्यानि सौभाग्यकराणि गजवाजिदानानि।

एतस्माच्च विस्पष्टमेव प्रतीयते न केवलं समानार्थकानामेव शब्दानां शब्दान्तरेषु प्रभाव उपलक्ष्यते सर्वथा विपरीतार्थकानामपि स दृश्यत इति। यथा—

कुम्भकर्णे भकारोऽस्ति भकारोऽस्ति विभीषणे।
ज्येष्ठपुत्रे कुलश्रेष्ठे भकारो नास्ति रावणे॥

तथैव—

त्र्यक्षरं दृश्यते लोके दुरिते पापवाचिनि।
अक्षरं न्यूनमेकं स्यात्कल्याणे सुविते कथम्॥ इति।

वाजसनेयसंहितायां स्वितशब्दोऽपि श्रूयते—स्विते मा धाः [ ५।५ ] इति। तैत्तिरीयसंहितायां तस्मिन्नेव वाक्ये सुविते मा धा इत्युपलभ्यते।

# उषा देवी

( 8th July, 1937—14th January, 1945 )

मञ्जूषाया अयमङ्कोऽष्टमे वर्षे पदमर्पयित्वा परलोकं प्रस्थितायाः सम्पादकस्य तनयाया उषादेव्याः स्मृत्यङ्क इति विभाव्यतां वाचकमहाभागैः। उषा खलु जगद्वन्द्या देव्युषा इव शुक्रेण शोचिषारोचमानासीत्। तथाविधं वर्णं शरीरशोभा च भारतवर्षे प्रायेण दुर्लभम्। जन्मराशिचक्रे गुरुशनैश्चरयोः क्षेत्रविनिमयाद् बालिकाया अप्यस्या देवभाषायामाङ्गलभाषायां चाधिकारः सर्वेषां विस्मयमुपजनयति स्म। बुद्धिरप्यस्या निसर्गविमलासीत्। धर्मकार्येष्वस्या गरीयस्यविचला च श्रद्धा प्रतिपदमेव प्रादुरभवत्। पूजावसरे शिशोरप्यस्यास्तदेकतानमानसत्वमाश्चर्यकरमासीत्सर्वेषाम्। अधन्यतया पुनरस्माकं सप्तवर्षैवेयं बाला स्वर्गं स्वमेवावासं प्रतिगता।

## शिशोः सारल्यम्

शिशुरुषा परिचारिकया पल्लीस्थसरस्वतीपूजामण्डपं नीता। तत्र देवीप्रतिमायाः कण्ठेऽजस्राः स्रजो विलोक्योषयोक्तम्, देवि! किं त्वमेतावतीभिर्मालाभिः करिष्यसि? मह्यं काश्चन दातुमर्हसीति। एतदनुस्मृत्योषायास्तिरोभावानन्तरं तत्पित्रा "नक्षत्रमाला" विरचिता।

## श्रुतिधरत्वम्

एकदा द्विवर्षीणामुषां स्वापयितुं पित्रा पृष्ठे पाणितलपरामर्शपुरःसरम् eenie meenie minie moe, catch a nigger by his toe, if he hollers let him go इत्यस्य नीचस्वरेण द्वित्रिरावृत्तिः कृता। परेद्यवि क्रीडाव्यापृतयोषया स्वगतमुक्तम् eenie meenie इत्यादि। केवलं hollers पदं यथावदुच्चारयितुं न पारितमन्यत्सर्वं सम्यगेवोक्तम्।

## प्रतिभा

एकदा पिता प्रबन्धमारचयति, चतुर्वर्षोषा समीपे पुत्रिकया क्रीडति। अकस्माद् दूरश्रुतियन्त्रे घण्टाध्वनिरभवत्। उषा ससम्भ्रमं रिसीभारमुत्तोल्य कर्णे योजयित्वावदत् Hallo इति। ततश्च किञ्चिच्छ्रुत्वावदत्—Yes, please इति। तदात्व एव पित्रा रिसीभारमादाय पृष्टं किमुच्यत इति। उत्तरमासीत्—Is the telephone O. K.? इति। ततः प्रतीतमुषया सम्यगेवोक्तमासीदिति। ततः पित्रोषा पृष्टा किं वा वृत्तमिति। तयोक्तं—तात, तैः किमुक्तं मया न बुद्धम्, परं कथं वा मया तूष्णीं स्थेयम्? अतो मयोक्तम्—yes, please इति।

## बुद्धिमत्ता

पञ्चवर्षदेशीयोषा पितुः सकाश आङ्गलभाषामधीते स्म। पित्रोक्तम्—g-h-o-s-t गोस्ट् इति। उषयोक्तम्—नहि नहि घोस्ट् इति। पित्रोक्तं वत्से, आङ्गलैर्घकार उच्चारयितुं न शक्यते, अतस्तैः गोस्ट् इत्येवोच्यते न पुनर्घोस्ट् इति। तयोक्तम्—यथास्मद्देशे यैः zकार उच्चारयितुं न शक्यते तैर्जकार उच्चार्यते, यैश्च सकार उच्चारयितुं न शक्यते तैः शकार उच्चार्यत इति।

अन्यदा पित्रा पाठितम्—calm काम् इति। उषयोक्तम्—लकारस्तु नोच्चारित इति। पित्रोक्तम्—ईदृशेषु स्थलेषु लकारस्योच्चारणं न भवति, स खलु (silent) तूष्णीमेवावतिष्ठते। पञ्चवर्षदेश्यया बालया पृष्टं यद्युच्चारणं न भवति किमिति विलिख्यत इति। शब्दशास्त्रज्ञेन जनकेन शिशोः सकाश आङ्गलभाषागतानामनुच्चार्याणां वर्णानां रहस्यं विवृतम्।

## सुभाषितकण्ठेकरणम्

चाणक्यशतकं रामायणमहाभारतगतानि च बहूनि सुभाषितानि समीचीनोच्चारणपुरःसरमुषया कण्ठेकृतानि। तत्रायमपि श्लोक आसीत्—

स्मृत्वा वियोगजं दुःखं त्यज स्नेहं प्रिये जने।
अतिस्नेहपरिष्वङ्गाद्वर्तिरार्द्रापि दह्यते॥ [ रामायण ४।१।११६ ] इति।

इदानीमप्युषायाः पित्रोर्हृदयं दह्यते।

## करुणामयी

उषाया हृदयमतीव कोमलमासीत्। राजपथोपरि वासभवनम्, बहवो भिक्षाका आगच्छन्ति स्म, सर्वेभ्य एव तण्डुलो वा ताम्रिका वा प्रदीयते स्म बालया। अन्तरान्तरा च दरिद्राः स्त्रियो गृहे समाहूय भोज्यन्ते स्म। न केवलं भोजनेन बालाया मधुरैर्वचोभिरपि ताः परमां प्रीतिमवाप्नुवन्। इदानीमप्येका कदाचिदागत्य मुक्तकण्ठमुषां प्रशंसति।

## सर्वमतिमात्रमुद्वेजकम्

सुस्वादुनोऽपि वस्तुनो निरन्तरं समधिकं सेवनं समुद्वेजकम्। उक्तं च कविकुलचूडामणिना कालिदासेन—पिण्डखर्जूरैरुद्वेजितस्य तिन्तिडग्राममभिलाषो भवेत् इति। कविवृन्दवृन्दारकेण Shakespeareमहोदयेनाप्युक्तम् If music be the food of love, play on; Give me excess of it, that, surfeiting, The appetite may sicken, and so die इति। आम्रावर्तं उषायै भृशं रोचते स्म।

एकदा पित्रा रूप्यकमूल्यमाम्रावर्तं* प्रियपुत्र्यै प्रदायोक्तं वत्से, गृहाणैनम्। समग्रोऽयं तवैवेति। चतुर्हायणी बाला प्रहर्षस्य परां काष्ठामुपगता समग्रमाम्रावर्तं स्वीचकार। दिनकतिपयत ऊर्ध्वं सा पितरमुवाच, तात, निर्विण्णाहमाम्रावर्तस्य। पुनराम्रावर्तं न भोक्ष्य इति।

## बालिकाया वाचोयुक्तिः

एकदातीव सुस्वादु पायसमभ्यवहृत्य त्रिहायण्योषयोक्तम्—ईदृशं पायसं समग्रे जीवने मया कदापि नाद्यादितमिति ( ए रकम पायेस जीवने खाइ नि )। त्रिवर्षीयाया बालाया वचनश्रवणेन सर्वेषां वदनेषु प्रादुर्भूतो हासः।

## जनप्रियत्वम्

सर्व एव जना आबालवृद्धवनितम् उषायै स्निह्यन्ति स्म। परशुराम-समाख्यात् कस्माच्चन सौम्यात् स्थविरादुषसः पित्रा नारङ्गाणि क्रीयन्ते स्म। स प्रतिदिनमेवागत्य आदावेव "खोकामात्रे" कतिचिन्नारङ्गाण्युपायनीकरोति स्म। यस्मिन् दिने तेन विक्रयार्थं नारङ्गकाणि नालभ्यन्त तस्मिन्नपि दिन आपणतो द्वित्राणि नारङ्गकाणि क्रीत्वानीयोषायै प्राददादसौ। भगवतो भूतभावनस्य प्रसादेन परलोकप्रस्थितस्य तस्य शिवं भवतु।

## छाया पूर्वगामिनी

मसूरिकारोगाक्रमणात् पूर्वमेव बालाया अवचतनेन मानसेन तिरोभावकाल आसन्न इति विज्ञातमिति प्रतीयते। ततो मासात् पूर्वम् प्रतिदिनमेव पितुर्विश्वविद्यालये गमनावसरे तयोच्यते स्म, तात, अवसितमात्र एव कर्मणि गृहं प्रत्यागन्तव्यम्। निमेषमात्रमपि न विलम्बितव्यमिति। पितुः प्रत्यागमने च द्वारमुत्कीलितं विधाय पार्श्वे निगूढमवतिष्ठते स्म, प्रविष्टमात्र एव पितरि हर्षध्वनिपुरःसरं पुरस्तात् प्रादुरभवत्। अहो! ते हि नो दिवसा गताः।

## उषायास्तिरोभावः

ततश्च शीतकालेऽप्युषा इवारोचमानोषा मसूरिकारोगेण समाक्रान्ता। एकस्मिन् दिने पित्रोः संवादमुपश्रुत्य सन्त्रस्तया बालयोक्तम्—तात! अपि नाम मम "मातुरनुग्रहः"† संवृत्त इति। पित्रोक्तम्—अथ किम्, मातः। परमचिरादेव त्वमुल्लाघतामुपयास्यसीति। सुचिकित्सकैश्चिकित्स्यमानोऽपि रोगो लेशतोऽप्युपशमं नाभजत्। अथान्तिमे दिने

---

* पक्वस्य सहकारस्य पटे विस्तारितो रसः।
घर्मशुष्को मुहुर्दत्त आम्रावर्त इति स्मृतः॥

† वङ्गेषु मसूरिका ( शीतला ) मातुरनुग्रह इति व्यपदिश्यते।

रात्रौ बालाया अरुन्तुदा वेदनासीत्। तस्या अभिलाषेण पित्रा तदीयानि पाठ्यपुस्तकानि तस्यै प्रदत्तानि। ततश्च पित्रा उषाया एवेच्छया दुर्गादेव्या देवादिदेवस्य च स्तोत्राणि पठ्यन्ते स्म। स्तोत्राणि समाकर्णयन्त्युषःप्रतिमोषा उषसः प्रादुर्भावकाले पितरं पुनरपि मातृहीनं विधाय पितरौ च गाढान्धकारे निमज्ज्य दिवि स्वं स्थानं प्रत्यपद्यत।

---

## उषःसूक्तम्*

[ ऋ० सं० ४।५२ ]

प्रति ष्या सूनरी जनी व्युच्छन्ती परि स्वसुः।
दिवो अदर्शि दुहिता ॥१॥

काश्यपक्षितीशचन्द्रभाष्यम्। प्रति ष्येति ऋग्वेदस्य चतुर्थमण्डलस्य द्विपञ्चाशत्तमं सूक्तम्। अस्य च वामदेव ऋषिः। ऋग्वेदस्य चतुर्थमण्डलस्य द्रष्टा वामदेव इति प्रसिद्धिः। तथा च सर्वानुक्रमणी—वामदेवो गौतमश्चतुर्थं मण्डलमपश्यदिति। असत्यपवादे चतुर्थमण्डले वामदेवस्य ऋषित्वम्। मण्डलगते चतुर्थे सूक्ते कविना वामदेवेन पितुर्नामोल्लिखितं—तन्मा पितु गौतमादन्वियायेति ॥ स्या लोकवेदयोः सुप्रसिद्धा। त्यच्छब्दस्तच्छब्दसमानार्थकः प्रायेण वेद एवोपलभ्यते, लोके "सूतो वा सूतपुत्रो वा यो वा स्यो वा भवाम्यहमि"ति वेणीसंहारपद्ये दृश्यते। तत्रापि पाठान्तरं वर्तते—यो वा को वेति। प्रक्रान्तप्रसिद्धानुभूतार्थकस्तच्छब्दो यदुपादानं नापेक्षत इत्यालङ्कारिकाः। सूनरी सुन्दरी। पृषोदरादित्वादभिमतरूपस्वरसिद्धिः। सूनरशब्दस्यापभ्रंशः सुन्दर इति, यथा वङ्गभाषायां वानरशब्दस्यापभ्रंश बान्दर इति। जनिजनीशब्दौ जायावाचकौ जनधातोर्निष्पन्नत्वात्, ततश्च लक्षणया सन्तानविधारणयोग्यवयस्कयुवतिवाचकौ। इमौ च जायाशब्दस्याङ्गल-queenशब्दस्य च ज्ञातौ। लौकिके बहुव्रीहेश्चरमावयवे जानिशब्देऽप्यापि परोक्षं दृश्येते। जनधातोरौणादिक इन्प्रत्यये जनिपदमाद्युदात्तं निष्पन्नम्। कृदिकारादक्तिन इति ङीषि वृषादित्वादाद्युदात्तत्वम्। यद्वा ङीन्नत्र प्रत्ययः। स्वसुः भगिन्या रात्रेः। परि। अनर्थकोऽयं निपात इति बहवः। रात्र्युषसोः स्वसृत्वं वेदेषु प्रसिद्धम्। तथा च निगमो भवति—स्वसा स्वस्रे ज्यायस्यै योनिमारैक् [ १।१२४।८ ]

---

*उषायाः स्मृत्यङ्क उषःस्तोत्रमनुरूपं स्यादित्याकलयद्भिरस्माभिरुषःसूक्तमेकं सव्याख्यानं सन्निविष्टम्। व्याख्यानस्यातित्वरया विरचनान्मुद्रणाच्च सावशेषत्वं प्रमादानां चेत् स्याद्वारान्तरे संशोधनं करिष्यते।

इति। स्वसा रात्रिः ज्यायस्यै स्वस्त्रे ज्येष्ठायै भगिन्यै उषसे योनिं स्थानम् आरैक् रिक्तीकृतवतीत्यर्थः। तथाच निगमान्तरम्—समानो अध्वा स्वस्रोरनन्तस्तमन्यान्या चरतो देवशिष्ट । न मेथेते न तस्थतुः सुमेके नक्तोषासा समनसा विरूपे ॥ [ ऋ० १।११३।३ ] इति, कृष्णादुदस्थादर्या विहायाः [ ऋ० १।१२३।१ ], इति शुक्रा कृष्णादजनिष्ट श्वितीची [ १।१२३।९ ] इति च। नित्यसाहचर्यात् स्वसृत्वव्यपदेशः। ह्रस्वान्तस्य स्त्रीविषयस्य [फि० २६] इति उनर्वन्नन्तानाम् [फि० सू० ३३] इति वा स्वसृशब्द आद्युदात्तः। व्युच्छन्ती समुद्भासमाना। विपूर्वात् तौदादिकाद् उच्छी विवासे इति धातोः शतरि ङीपि आच्छीनद्योर्नुम् इति नुमागमे रूपम्। तत्र तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमह्न्विङोः [६।१।१८६] इति शतुर्लसार्वधातुकस्वरेणानुदात्तत्वम्, ङीपश्च पित्त्वादनुदात्तत्वम्। धातुस्वर एव शिष्यते। गतिकारकोपपदात् कृदिति कृदुत्तरपदप्रकृतिस्वरः। दिवो दुहिता उषाः। प्रतिदिनं प्रातः स्वर्गात् प्रादुर्भवतीत्युषा दिवो दुहितेत्युपवर्ण्यते। तथा च निगमा भवन्ति—एषा दिवो दुहिता प्रत्यदर्शि व्युच्छन्ती युवतिः शुक्रवासाः [ ऋ १।११३।७ ], एषा दिवो दुहिता प्रत्यदर्शि ज्योतिर्वसाना समना पुरस्तात् [ ऋ० १।१२४।३ ] इत्यादयः। दिवः। ऊडिदम्पदाद्यप्पुम्रैद्युभ्यः [ ६।१।१७१ ] इति विभक्तिरुदात्ता। अदर्शि। सामर्थ्याद् व्यवहितेनाप्युपसर्गेण प्रतिना योजनीयः। प्रत्यदर्शि प्रादुर्भूता। दृशेः कर्मणि। लुङि चिणि रूपम्। तिङ्ङतिङः [ ८।१।२८ ] इति निघातः। दिवो अदर्शीत्यत्र प्रकृत्यान्तःपादमव्यपरे [ ६।१।११५ ] इति प्रकृतिभावः। अत्र प्रथमायामृचि कविर्निशाया अवसाने सुमनोहराया उषसः प्रादुर्भावं वर्णयति॥

ऋचस्तावत् त्रिविधा भवन्ति प्रत्यक्षकृताः परोक्षकृता आध्यात्मिक्यश्चेति। तत्र "परोक्षकृताः सर्वाभिर्नामविभक्तिभिर्युज्यन्ते प्रथमपुरुषैश्चाख्यातस्य। अथ प्रत्यक्षकृता मध्यमपुरुषयोगास्त्वमिति चैतेन सर्वनाम्ना। अथाध्यात्मिक्य उत्तमपुरुषयोगा अहमिति चैतेन सर्वनाम्ना।" [ निरु० ७।२ ]। सूक्तऽस्मिन् प्रथममृग्द्वयं परोक्षकृतम् ॥१॥

अश्वेव चित्रारुषी माता गवामृतावरी।
सखाभूदश्विनोरुषा ॥२॥

चित्रा समुज्ज्वलवर्णा। फिट्स्वरेणान्तोदात्तश्चित्रशब्दः, टापः पित्त्वादनुदात्तत्वम्। अरुषी अरुणवर्णा। अरुषशब्दः प्रातिपदिकस्वरेणान्तोदात्तः। शार्ङ्गरवादेराकृतिगणत्वान् ङीन्। नित्त्वादाद्युदात्तत्वम्। यद्वा स्त्रीविषयवर्णाक्षुपूर्वाणाम् [ फि० ४२ ] इति फिट्सूत्रेणाद्युदात्तत्वम्। अश्वे न चित्रे अरुषि [ ऋ० १।३०।२१ ] इत्यपि निगमो

भवति। ऋतावरी ऋतं यज्ञः तद्वान् ऋतावान्। ऋतशब्दात् प्रत्ययस्वरेणान्तोदात्तात् छन्दसीवनिपौ च [ ५।२।१०९।२ ] इति मत्वर्थीयो वनिप् पित्त्वादनुदात्तः। अन्येषामपि दृश्यते [ ६।३।१३७ ] इति दीर्घः। वनो र च [ ४।१।७ ] ङीप् रेफश्चान्तादेशः। ङीपः पित्त्वादनुदात्तत्वम्। यथाकालं प्रादुर्भवन्त्युषा गवां रश्मीनां माता जननी। उषसः प्रादुर्भावानन्तरं हि रश्मिभिः समुद्भासितं भवति गगनतलम्, अत एवोषा रश्मीनां मातेति व्यपदिश्यते। सर्वेऽपि रश्मयो गाव उच्यन्ते इति निरुक्तम् [ २।७ ]। तथाच निगमा भवन्ति—प्रति गावोऽरुषीर्यन्ति मातरः [ ऋ० १।९२।१ ], गवां जनित्र्यकृत प्र केतुम् [ ऋ० १।१२४।५ ], हिरण्यवर्णा सुदृशीकसन्दृग् गवां माता नेत्र्यह्नामरोचि [ ऋ० ७।७७।२ ] इत्यादयः। एवम्भूतोषा अश्विनोः सखा समानख्याना अभूत्। अश्विनोरुषसा सह स्तूयमानत्वात् परस्परं सखित्वमिति सायणः। उषसोऽश्विनोश्च सख्यं सुप्रसिद्धमेव। तथा च निगमो भवति—आ वां रथं युवतिस्तिष्ठदत्र जुष्ट्वी नरा दुहिता सूर्यस्य [ ऋ० १।११८।५ ], आ वां पतित्वं सख्याय जग्मुषी योषावृणीत जेन्या युवां पती [ ऋ० १।११९।५ ] इत्यादिः। सखिशब्दो वेदे स्त्रियामपि वर्तते सख्यशिश्वीति भाषायाम् [ ४।१।६२ ] इति सूत्रेण लोक एव ङीषन्तनिपातनात्। तथाच निगमो भवति—सखा सप्तपदी भव सा मामनुव्रता भव [ आश्व० गृ० सू० १।७।१० ] इति। वेदे "स्तनाभुजो अशिश्वीः" [ ऋ० १।१२०।८ ] "सा धेनवो धुनयन्तामशिश्वीः" [ ऋ० ३।५५।१६ ] इत्यादिषु योऽशिश्वी-शब्द उपलभ्यते स ङीषन्तो न भवति, तस्याद्युदात्तत्वात् ॥२॥

उत सखास्यश्विनोरुत माता गवामसि।
उतोषो वस्व ईशिषे ॥३॥

इदानीं प्रायेण पूर्वोक्तमेवार्थं प्रत्यक्षकृताभ्यामृग्भ्यां प्रतिपादयति। अये उषः। आमन्त्रितस्य च [ ८।१।१९ ] इति निघातः। उत। एवादीनामन्तः [ फि० ८२ ] इत्यन्तोदात्तः। अपि च त्वम् अश्विनोः सखा सखी असि। इगन्तानां च द्व्यषाम् [ फि० ४९ ] इत्याद्युदात्तः सखिशब्दः। उत गवां माता असि। न गोश्वन्त्साववर्ण-राडङ्क्रुङ्कृद्भ्यः [६।१।१८२] इति निषेधात्सावेकाचः [६।१।१६८] इति विभक्तिर्नानु-दात्ता। उत वस्वः धनस्य ईशिषे ईश्वरा असि। जसादिषुच्छन्दसि वावचनं प्राङ् णौचङ्युपधायाः। अम्बे दर्वि शतक्रत्वः पश्वे नृभ्यः किकिदीव्या। [ ७।३।१०९।१-२ ] इति वसुशब्दान्ङसि गुणाद्यभावे वस्व इति रूपम्। अधीगर्थदयेशां कर्मणि [ २।३।५२ ] इति कर्मणि षष्ठी। ईशिषे। ईशः से [ ७।२।७७ ] इतीडागमः।

तिङ्ङतिङ इति निघातः। सर्वेषां विधीनां छन्दसि विकल्पितत्वात् ईक्षे हि वस्व उभयस्य राजन् [ ऋ० ६।१९।१० ] इत्यादिषु ईक्षेपदमप्युपलभ्यते ॥३॥

यावयद्द्वेषसं त्वा चिकित्वित्सूनृतावरी।
प्रति स्तोमैरभुत्स्महि ॥४॥

द्वेषसो यावयन्तीमिति इति यावयद्द्वेषसम्। मयूरव्यंसकादित्वात् समासः। युधातोर्णिचि शतरि रूपं यावयदिति। युद्रुश्रूणां णौ पाक्षिकी वृद्धिर्भवति। पदपाठकारस्य शाकल्यस्य काले वृद्ध्यभाव एवावर्तत, अत एव पदपाठे सर्वत्र यवयद्द्वेषसमित्यादिकमुपलभ्यते। एवं तरद्द्वेषाः सासहिः पौंस्येभिः [ ऋ० ९।१००।३ ] इत्यत्र द्वेषसः शत्रूंस्तरन् इत्यर्थे तरद्द्वेषाः श्रूयते। अत्रापि मयूरव्यंसकादित्वात् समासः। अस्माकं मतेन भरद्वाजसमासः (Governing Compound)। यावयद्द्वेषा ऋतपा ऋतेजाः [ऋ० १।११३।१२] इत्यपि निगमो भवति। रात्रावन्धकारे प्रभवन्तो विद्विष उषसः प्रादुर्भावे विलीयन्त इति भावः। तथाच निगमान्तरम्—अप द्वेषो मघोनी दुहिता दिव उषा उच्छदप स्त्रिधः [ ऋ० ११४८।८ ] इति, यावयद्द्वेष आ भरा वसूनि [ ऋ० ७।७७।४ ] इति च। त्वा त्वाम्। अनुदात्तं सर्वमपादादौ [ ८।१।१८ ] इत्यधिकारे त्वामौ द्वितीयायाः [ ८।१।२३ ] इति द्वितीयैकवचनान्तस्य युष्मच्छब्दस्य त्वादेशः सर्वानुदात्तः। चिकित्वित्। जानद्यथा स्यात्तथा। "कित ज्ञाने। क्वसौ रूपम्। अकारस्येकारादेशश्छान्दसः।" इत्यन्यत्र सायणः। सूनृतावरि। शोभनो ना सूना। अन्येषामपि दृश्यत इति दीर्घः। तस्य भावः सूनृता। तल्प्रत्ययः। छन्दसीवनिपाविति वनिप्। वनो र चेति ङीब्रेफौ। आष्टमिक आमन्त्रितनिघातः। स्तोमैः स्तोत्रैः प्रत्यभुत्स्महि प्रतिबोधितवन्तः। तथा च निगमान्तरम्—प्रति स्तोमेभिरुषसं वसिष्ठा गीर्भिर्विप्रासः प्रथमा अबुध्रन् [ ऋ० ७।८०।१ ] इति। प्रातरनुवाकगतमुषस्यक्रतुमुद्दिश्यैतदुक्तम्। अभुत्स्महि। बुध अवगमने। लुङो महिङ्। च्लि लुङि। च्लेः सिच्। एकाच उपदेशेऽनुदात्तात् [ ७।२।१० ] इत्यनुदात्तत्वादिडभावः। एकाचो बशो भष् झषन्तस्य स्ध्वोः [ ८।२।३७ ] इति बकारस्य भकारः। खरि च [ ८।४।५५ ] इति चर्त्वेन धकारस्य तकारः। लुङ्लङ्लृङ्क्ष्वडुदात्तः [ ६।४।७१ ] इत्यडागमः। निगमान्तरमपि भवति—प्रति त्वा दुहितर्दिव उषो जीरा अभुत्स्महि। या वहसि पुरु स्पार्हं वनन्वति रत्नं न दाशुषे मयः॥ [ ऋ० ७।८१।३ ] इति ॥४॥

प्रति भद्रा अदृक्षत गवां सर्गा न रश्मयः।
ओषा अप्रा उरु ज्रयः ॥५॥

भद्राः कल्याणकराः रश्मयः किरणाः प्रत्यदृक्षत प्रादुर्भूताः। दृशिर् प्रेक्षणे। कर्मणि लुङ्। शल इगुपधादनिटः क्सः [ ३।१।४५ ] इति प्राप्तस्य क्सादेशस्य न दृशः [ ३।१।४७ ] इति प्रतिषेधाद् इरितो वा [ ३।१।५७ ] इति सिच्। लिङ्सिचावात्मनेपदेषु [ १।२।११ ] इति क्त्विवे गुणाभावः। गवां सर्गा न विसृष्टा गोत्रजा इव। तथाच निगमान्तरम्—गवां न सर्गा उषसो जरन्ते [४।५१।८] इति। उषा उरु विस्तीर्णं ज्रयः। ज्रयति गतिकर्मसु पठ्यते। तस्मादसुन्। आभोगम्। अप्राः अपूरयत्। प्रा पूरणे। लुङ्स्तिप्। इतश्च लोप इतीकारस्य लोपः। च्लि लुङि। च्लेः सिच्। बहुलं छन्दसि [ ७।३।९७ ] इत्यस्तिसिचोऽपृक्त इतीडागमो न भवति। हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् [ ६।१।६८ ] इत्यपृक्तस्य तेर्लोपः। ससजुषो रुः [ ८।२।६६ ] इति रुः। खरवसानयोर्विसर्जनीयः [ ८।३।१५ ]। अप्रा द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च [ ऋ० १।११५।१ ] इत्यपि निगमो भवति ॥५॥

आपप्रुषी विभावरि व्यावर्ज्योतिषा तमः।
उषो अनु स्वधामव ॥६॥

अये विभावरि दीप्तिमति। विपूर्वाद् भा दीप्तावित्यादादिकाद् धातोः आतो मनिन्क्वनिब्वनिपश्च [ ३।२।७४ ] इति वनिप्। वनो र च [ ४।१।७ ] इति ङीब्रेफौ। अम्बार्थनद्योर्ह्रस्वः [ ७।३।१०७ ] इति ह्रस्वत्वम्। आष्टमिको निघातः। आपप्रुषी उरु ज्रयः आशानामाभोगम् आपूरयन्ती त्वं ज्योतिषा प्रभया तमः अन्धकारं व्यावः उद्भासितवान्। तथाच निगमान्तरम्—ज्योतिर्विश्वस्मै भुवनाय कृण्वती गावो न व्रजं व्युषा आवर्तमः [ ऋ० १।९२।४ ] इति। अये उषा स्वधाम् अनु इच्छानुसारेण अव रक्ष। प्रा पूरणे। आङ्पूर्वात् तस्माल्लिटः क्वसुः। ङीप्। अकृतव्यूहाः पाणिनीया इति परिभाषया वस्वेकाजाद्घसाम् [ ७।२।६७ ] इतीडागमो न भवति। द्विर्वचने ह्रस्वे हलादिः शेषः। वसोः सम्प्रसारणम् [ ६।४।१३१ ] इति सम्प्रसारणं परपूर्वत्वं च। आतो लोप इटि च [ ६।४।६४] इत्याकारलोपे आपप्रुषीति रूपम्। क्वसुस्वरः। आवः। वृञ् वरणे। लुङि तिपि मन्त्रे घसह्वरणशवृदहाद्वृच्कृगमिजनिभ्यो लेः [२।४।८०] इति च्लेर्लुक। सार्वधातुकार्धधातुकयोः [ ७।३।८४ ] इति गुणोऽकारो रपरः। हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् [ ६।१।६८ ] इति सेर्लोपः। ससजुषो रुः। खरवसानयोर्विसर्जनीयः। छन्दस्यपि दृश्यते [ ६।४।७३ ] इत्याडागमः ॥६॥

आ द्यां तनोषि रश्मिभिरान्तरिक्षमुरु प्रियम् ।
उषः शुक्रेण शोचिषा ॥७॥

पुनः प्रत्यक्षकृतयोपसंहरति—आ द्यामिति । अये उषः रश्मिभिः किरणैः द्याम् दिवम् आतनोषि व्याप्नोषि उरु विस्तीर्णम् प्रियम् अन्तरिक्षम् शुक्रेण समुज्ज्वलेन शोचिषा प्रकाशेन आ तनोषीत्यनुषङ्गः । शुक्र-शोचिःशब्दद्वयं शोचतेर्ज्वलतिकर्मणो निष्पन्नम् । प्रथमे रक्प्रत्ययस्वरः, द्वितीय इसिप्रत्ययस्वरः । सा नः स्तोमाँ अभि गृणीहि राधसोषः शुक्रेण शोचिषा [ ऋ० १।४८।१४ ] इत्यपि निगमो भवति । अस्माकमपि हृदयाकाशं समुज्ज्वलकिरणजालैरनुपमया च दीप्त्या व्याप्नुहि, तव प्रसादादस्माकं पापतापरोगशोकदुःखदैन्यदारिद्र्यादिकं सपदि विलीयतामित्याशयः ॥७॥

## उषाः

"John Ruskin had on his desk a simple piece of stone on which was carved one word "TODAY".

"And while I haven't a piece of stone on my desk, I do have a poem pasted on my mirror where I can see it when I shave every morning—a poem that Sir William Osler always kept on his desk, a poem written by the famous Indian dramatist, Kalidas."

### *SALUTATION TO THE DAWN*

"Look to this day !
For it is life, the very life of life.
In its brief course
Lie all the verities and realities of your existence—
The bliss of growth,
The glory of action,
The splendour of achievement.
For yesterday is but a dream
And tomorrow is only a vision,
But today well-lived makes yesterday
a dream of happiness
And every tomorrow a vision of hope.
Look well, therefore, to this day !
Such is the salutation to the dawn."

# सुकन्याचरितम्

[ म० म० V. शर्मा विद्याभूषणः ]

वैवस्वतसुतः शर्यातिर्नाम पार्थिवोऽभूत्। तस्य च बहवः परिग्रहा आसन्, तथापि तस्यैकैव पुत्री समजायत। चारुहासिन्यतिसुन्दरी सुकन्याभिधाना सा सर्वासां मातॄणां पितुश्चातीव प्रियाभवत्।

नगरोपान्तवर्तिनि वनप्रदेशे मानससन्निभं सरोऽभूत्। बद्धसोपानमार्गं स्वच्छ-पानीयपूर्णं हंससारसादिपक्षिगणनिषेवितं पञ्चविधैः कमलैरुपशोभितं चञ्चरीकसुसेवितं पार्श्वतो विविधैर्द्रुमैराकीर्णं च तत् सरोऽतीव रमणीयमवर्त्तत।

सरसः समीपे चैकस्मिन् विजने शान्ते शुचौ स्थाने शुभैः पादपैरावृते तापसो भार्गवश्च्यवनस्तपश्चरन्नास्त। दृढमासनं कृत्वा मौनमाधाय इन्द्रियाणि संयम्य जितमारुत-स्त्यक्ताहारः परामम्बिकां ध्यायन् स मुनिः कालेन लताभिः परिवेष्टितः पिपीलिकाभिः समाकीर्णो वल्मीकोऽभवत्।

अथ कदाचिद् राजा शर्यातिः क्रीडासक्तः कामिनीगणसंवृत उत्तमं तत् सरो विहर्तुमाजगाम। तदा सखीभिः सह सुकन्या वनं प्राप्य व्यहरत्। चन्द्रवदना सा रूपिणी वनदेवतेव व्यभात्। अथ सा सुमनसोऽवचिन्वती च्यवनस्य मुनेर्वल्मीकं समासदत्। वल्मीकं पश्यन्ती सा तस्य रन्ध्रयोः खद्योते इव प्रकाशमाने ज्योतिषी ददर्श। किमेतदिति चिन्तयन्ती राजपुत्री तीक्ष्णं कण्टकमेकं गृहीत्वा तत् समुद्धर्त्तुं त्वरमाणा मुनिना दृष्टा। ततः स मुनिस्तामभाषत—"विशालाक्षि! अहं कश्चन तापसः। कण्टकेन वल्मीकं मा भैत्सीः" इति। एवं मुनिना प्रोच्यमानापि सा बाला मुनिवचनं नाश्रृणोत्। किन्तु खल्वेतदिति कौतुकाविष्टहृदया दैवेन नोदितेव मुनेर्लोचने निर्बिभेद। निर्भिद्य च नृपकन्यका तस्मात् प्रदेशात् सरस्तीरं ययौ। ततश्च पित्रा मातृभिश्च साकं राजगृहं प्रतिन्यवर्त्तत।

अथ तया विद्धनेत्रश्च्यवनमुनिर्वेदनयाभ्यर्दितोऽभूत्। परितप्तहृदयः स नितरां चक्रोध। तस्मिन् क्षणे सामात्यस्य भूपस्य सैनिकानां गजोष्ट्रतुरगस्य सर्वेषां प्राणिनां च शकृन्मूत्रनिरोधोऽभवत्। तेन च राजा मन्त्रिणोऽन्ये च सर्वेऽतीव दुःखिता अभवन्। सैनिकाश्चागत्य शकृन्मूत्रनिरोधनं राज्ञे न्यवेदयन्। भूपालश्चैतादृशस्य दुःखस्य कारणं किमिति चिन्तयामास।

ततः, "सरसः पश्चिमे भागे वनमध्ये महातपस्वी च्यवनो दुश्चरं तपश्चरति। तस्मै केनाप्यपकृतं नूनम्। तस्यैव फलमिदानीं वयमनुभवामः। कैर्दुष्टैस्तस्मै द्रुग्धमिति ज्ञातव्यम्"—इति ते सर्वे निश्चयमकुर्वन्। राज्ञा पृष्टा वेदनार्दिताः सैनिकाश्च "वयं मनोवाक्कायजनितमपकृतं किमपि न विद्म" इत्यब्रुवन्।

अथ पितरं दुःखितं पीड्यमानांश्च जनान् समुद्वीक्ष्य स्वकृतं शूलभेदं च विचिन्त्य कृपयाविष्टा सुकन्या सैवमुवाच—"पितः! वने क्रीडन्त्या मया वीरुधा वृतः कश्चन वल्मीको दृष्टः। सोऽयं छिद्रद्वयसमन्वितोऽभूत्। तत्र खद्योतवद् दीप्ते ज्योतिषी मया वीक्षिते। किमेतदिति चिन्तयन्त्या मया खद्योतशङ्कया छिद्रद्वयमपि सूच्या विद्धम्। पितः! तदा सूची जलक्लिन्ना मया दृष्टा। वल्मीकमध्याद् हा हेति च मन्दो शब्दः मया श्रुत इव" इति।

सुकन्यावचनमाकर्ण्य राजा शर्याति मुनेर्हेलनमेव दुःखकारणं निश्चिन्वानः तं वल्मीकं क्षिप्रमभ्यगात्। तत्र तपोवृद्धं भृशं दुःखितं च्यवनं ददर्श, मुनिदेहावरकं च वल्मीकं स्फोटयामास। अथ राजा तं भार्गवं मुनिं दण्डवद् भूमौ प्रणम्य कृताञ्जलि-विनयोपेतस्तुष्टाव। तत एवं न्यवेदयत्—"महाभाग! ब्रह्मन्! बालया मम पुत्र्याज्ञानाद् दुष्कृतं कृतम्। तत् क्षन्तुमर्हसि" इति। नरपतेर्वचनं श्रुत्वा च्यवनमुनिः प्राह—"महीपाल! नेत्रहीनो जरावृतोऽहं किं करोमि? पार्थिव! अन्धस्य मम परिचर्यां कः करिष्यति?" इति। नृपतिः प्रत्यभाषत—"मुने! मम हि सेवका बहवः सन्ति। ते तवानिशं सेवां करिष्यन्ति। तापसानहं स्वल्पक्रोधानवैमि। मुनिशार्दूल! क्षमस्व।" इति। ततो महर्षिः "राजन्! अन्धो निर्जनश्चाहं तपस्तप्तुं कथं क्षमो भवेयम्? त्वदीयाः सेवकाः मम प्रियं करिष्यन्ति। मम परिचर्यायै कन्यां प्रयच्छ। महामते महाराज! तव पुत्र्या अस्या अहं प्रीतोऽस्मि। सा मे सेवां करिष्यति। अहं च तपश्चरिष्यामि। एवं कृते मम च तव च सुखं भविष्यति। भूप! सम्यक् चिन्तय। कन्यादानं समाचर। अत्र किमपि दूषणं नास्ति, यतोऽहं यतव्रतस्तापसोऽस्मि।" इति।

एतादृशं मुनेर्वचनमुपश्रुत्य शर्यातिश्चिन्तापरोऽभवत्। "कथमहं देवकन्योपमाम् आत्मसम्भवामिमां प्रेमसर्वस्वभूतां वृद्धायान्धाय कुरूपायास्मै मुनये दत्त्वा सुखी स्याम्? शुभाशुभवेदी को वात्मनः सुखार्थाय पुत्र्याः संसारजं सुखं हरेत। मम तावद् दुःखं भवतु। नाहमिमां सुकन्यां तस्मै दास्यामि।" इत्येवं निश्चित्य शर्यातिर्विमनायमानः स्वगृहं ययौ। अथातिदुःखितोऽयं सचिवान् समाहूय किं करणीयमिति मन्त्रयामास। तदा पितरं मन्त्रिणश्च चिन्ताकुलान्वीक्ष्य सुकन्या सहासमिदमुवाच—"पितः! कुतस्त्वमद्य दुःखार्दितः चिन्ताकुलश्च भवसि? अहं तत्र गत्वा मयार्दितं मुनिमात्मदानेन समाश्वस्य प्रसन्नं करिष्यामि" इति।

सुकन्याया एतद्भाषितं श्रुत्वा राजा सचिवानां शृण्वतां तामब्रवीत्—"पुत्रि! कथं त्वमबला वने जरार्तस्यान्धस्य क्रोधनस्य मुनेः परिचर्यां करिष्यसि? कथं वाहं त्वां

त्यजेयम्? राज्यमिदं तथैव मे देहोऽयं तिष्ठतु यातु वा, नाहं त्वां नेत्रहीनाय तस्मै दास्यामि" इति।

पितुर्वचनं श्रुत्वा पुनः सनिर्बन्धं सुकन्योवाच—"पितः! अत्र चिन्ता नैव कार्या, मामधुना मुनये देहि। मत्कृतेन सर्वेषां सौख्यं भवतु, अहं सन्तुष्टान्तरा परमपावनं पतिं तं सेविष्ये" इति।

सुकन्यावचनेनानेन मन्त्रिणो विस्मिता अभवन्। राजा कथञ्चित् प्रीतस्तपोधनं प्राप्य शिरसा प्रणम्य "स्वामिन्! गृहाण पुत्रीं मे सेवार्थं विधिवद् विभो" इत्युक्त्वा तस्मै विवाहविधिना पुत्रीं ददौ। अथ भार्गवो मुनिः सुकन्यां प्रतिगृह्य प्रसन्नोऽभवत्। प्रसन्ने च मुनौ राज्ञो मन्त्रिणां सैनिकानां सर्वेषामपि सुखमभवत्। परमनिर्वृतो नृपति र्मुनयेऽर्पितां पुत्रीं मुक्त्वा स्वनगरं प्रत्यगच्छत्।

अथ सा बाला सुकन्या पतिसेवापरायणा बभूव। अग्नीनां परिचर्यायां तत्परासौ स्वादूनि फलानि विविधानि मूलानि चादाय मुनये ददौ। पतिं तप्ताम्भसा स्नपयित्वा मृगत्वचा परिवेष्ट्य मेध्यायां बृस्यां स्थापितवती, भुक्तवतस्तृप्तस्य पत्युराचमनमदात्, पश्चात् स्वयमाहारं कृत्वा पुनश्च भर्तृसन्निधिं प्राप्य तस्य पादसंवाहनादिकं सप्रणयमकरोत्। कृशोदरी सा कुलस्त्रीणां धर्मं मुनिमपृच्छत्। एवमनिन्दिता सा सुकन्या तपस्विनं पतिं लब्ध्वा, अग्नीनामतिथीनां च शुश्रूषां कुर्वती, तपसा नियमेन च त नित्यं पर्यचरत्।

अथ कदाचिद् रविजावश्विनावुभौ क्रीडन्तौ च्यवनस्याश्रमाभ्यासे समागच्छताम्। तौ च स्नात्वाश्रमं प्रतिनिवर्तमानां सुकन्यां यदृच्छयापश्यताम्, देवकन्याभां गच्छन्तीं दृष्ट्वादरादन्तिकं समभिद्रुत्य गत्वातिमोहितावूचतुः—"वरारोहे! क्षणं तिष्ठ, त्वां प्रष्टुमावां देवसुताविह प्राप्तौ स्वः। सत्यं ब्रूहि। कस्य पुत्रस्ते पतिः? कथं त्वमुद्यानमागतासि? कथं वैकाकिनी तटाकमिमं स्नानार्थं प्राप्तासि?" इति।

इत्येवं तयोर्वचनं श्रुत्वा त्रपाक्रान्तापि सा राजकन्या तावुवाच—"देवपुत्रौ! मां शर्यातितनयां युवां वित्तम्। पित्रा दत्ता च्यवनस्य मुनेः सती कान्ता भार्याहमस्मि। मम पतिरतीव वृद्धस्तापसश्चास्ति, सुप्रीतेन मनसाहं तस्य सेवामहोरात्रं करोमि। युवां किमर्थमिहायातौ। मम पतिराश्रममधितिष्ठति। तत्रागत्याश्रमं पावनमद्य प्रकुरुतम्।" इति।

सुकन्याया मृदुभाषितं श्रुत्वा तस्यामाविष्टहृदयौ तौ "अहो! विधेर्दुष्कलितं विचेष्टितं यदियं जरातुरमन्धं पतिं मुनिं समासाद्यास्मिन् वने भृशं विषीदति। चारुलोचने! मन्दबुद्धिना धात्रा नवयौवनान्विता त्वम् अन्धस्य भार्या कृतासि। तथापि तादृशी त्वमीदृशमेनं नैवार्हसि। अन्यं पतिं स्वीकुरु। जरन्तं मुनिमाशु त्यक्त्वा तव सुखायावयोरन्यतरं भजस्व, येन त्वं देवालयेषु भोगाननुभविष्यसि।" इत्येवमुक्त्वा तां

यदा प्रलोभयितुमारब्धवन्तौ तदा सा मारुतेरिता लतेव वेपमानातिष्ठत्। अथ सा कथमपि धैर्यमालम्ब्य तौ बभाषे—

"युवां देवौ रविपुत्रौ सर्वज्ञौ सुरसम्मतौ च। धर्मशीलां सतीं मामेवं वदितुं नैवार्हथः। अहं खलु योगधर्मिणे मुनये पित्रा प्रतिपादिताऽस्मि। असारेऽस्मिन् संसारे धर्मतत्त्वज्ञा कुलकन्या पतिं त्यक्त्वान्यं कथं भजेत? कथमहं पुंश्चलीगणसेवितं मार्गमनुगच्छेयम्? तस्माद् देवौ युवां यथेच्छं गच्छतम्। अन्यथाहं शापं दास्यामि" इति।

अथ मुनेर्भयं शङ्कमानौ तावब्रूताम्—"राजपुत्रि! तवाचरितेन प्रसन्नौ स्वः। आवां देवभिषग्वरौ। तव पतिं युवानं रूपसम्पन्नं च प्रकुर्याव। ततः समानरूपदेहानां त्रयाणामस्माकमन्यतमं पतिं वृणु।" इति।

एवं तयोर्वचनमुपश्रुत्य विस्मिता सा स्वपतिं प्राप्य जगाद—"स्वामिन्! सूर्यसुतौ देवौ वनाश्रमं सम्प्राप्तौ। तौ मया दिव्यदेहौ दृष्टौ। तौ मां वीक्ष्य कामातुरौ जातौ। 'पतिं ते नवयौवनं दिव्यदेहं चक्षुष्मन्तमावाभ्यामेव समानावयवरूपं करिष्यावः। ततस्त्रिष्वस्मास्वेकतमं पतिं वृणु' इत्येवं ताभ्यां कथितम्। अत्यद्भुतं तच्छ्रुत्वाहं त्वां प्रष्टुमिहागता। स्वामिन्! अत्र किं कर्तव्यमिति ब्रूहि" इति।

तच्छ्रुत्वा च्यवन उवाच—"सुकन्ये! त्वं गच्छ। मम वचनात् तौ देवभिषग्वरौ नासत्यौ शीघ्रं मत्सन्निधिमानय। ताभ्यां यद्यदुक्तं तत्तदवश्यं क्रियताम्। नात्र कार्या विचारणा।" इति।

एवं भर्त्रा समनुज्ञाता सा गत्वा तौ मुनिवाक्यमश्रावयत्। तच्छ्रुत्वा तावश्विनौ वनाश्रममागत्य तां राजपुत्रीं भर्तुरप्सु प्रवेशनाय प्रेरयामासतुः। ततश्च्यवनस्तूर्णमम्भः प्रविवेश। अश्विनावपि पश्चात् तदुत्तमं सरः प्रविविशतुः। ततस्तस्मात् सरसो निस्सृतास्त्रयोऽपि ते सदृशा युवानस्तुल्यरूपा दिव्यदेहा बभूवुः। अन्यतमं वरीतुं ते सुकन्यामनोदयन्। सा तु सदृशाकृतींस्तान् वीक्ष्य परं संशयमापन्ना स्वीयं पतिमजानती अतीव व्याकुला व्यचिन्तयत्—"किं करोमि? त्रयोऽपि तुल्या वर्त्तन्ते। कमहं वृणोमि। नाहं किमपि वेद्मि। अत्र मया कर्त्तव्यं किमिति नावधारयामि। मन्ये मरणं समुपनतमिति। नूनं न मया पतिमुत्सृज्यान्यो वरणीयः" इत्येवं सञ्चिन्त्य सा मनसा परां विश्वेश्वरीं शिवां दध्यौ। कृशोदरी सा भगवतीं देवीं तुष्टाव च।

अथ देवी त्रिपुरसुन्दरी प्रसन्ना सत्यस्या हृदये सुखोदयं ज्ञानं ददौ। सती सुकन्या च तुल्यवयोरूपधरान् प्रसमीक्ष्य स्वकं पतिं वव्रे। एवं च्यवने वृते देवौ तौ तस्याः सतीधर्मेणातीव सम्प्रीतौ बभूवतुः। अथ च्यवनो मुनी रूपं नेत्रे यौवनं च लब्ध्वा तथा सुकन्यया पत्न्या सहाश्रमं जगाम।

---

# ब्रह्मसूत्रमितभाष्यम्

[ श्रीचारुकृष्ण-दर्शनाचार्यः ]

समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात् स्मृतेश्च १।३।३०॥

ननु स्यादेव खण्डप्रलयाद्धिरण्यगर्भस्थापकालादुत्तरसृष्टौ व्यवस्था, महाप्रलये तु भूतानां भौतिकानां हिरण्यगर्भस्य वेदस्य च प्रलयात् पुनःसृष्टौ तत्तद्देवताखिन्द्रादिपद-प्रयोगाच्च कथं शब्दात् सृष्टि र्वेदस्य नित्यता च स्यादित्यत आह—समानेति। महाप्रलये सर्वेषामेव भूतादीनां विनाशेऽपि सर्गादौ परमात्मा पूर्वसृष्टमेव जगत् स्मृत्वा बहु स्यां प्रजायेयेति सङ्कल्प्य स्वस्मिन् कारणात्मनावस्थितं प्रलीनं सर्वं प्रपञ्चमाकाशाद्यात्मना प्रकटितस्वरूपेण हिरण्यगर्भं च मुख्यप्रजापतित्वेन ससर्ज। वेदांश्च पूर्वकल्पसमानानुपूर्वीकानेव निःश्वसितवल्लीलयैवाविर्भावयामास, हिरण्यगर्भश्चेश्वरकल्पो महाप्रभावः स्वतपो-महिम्ना सुप्तप्रतिबुद्धन्यायेन स्वतः प्रतिभातवेदः पूर्वकल्पीयवेदांस्तदर्थांश्चेन्द्रादीनामाकृति-रूपान् बुद्धावाकलय्य प्रसृष्टवान् देवादीन् स्वर्गमर्त्त्यादींश्च पूर्ववदेव।

पूर्वपूर्वकल्पसमानानुपूर्वीकत्वसमानार्थप्रतिपादकत्वमेव च वेदस्यापौरुषेयत्वं नित्यत्वं च, न च कालिदासादिवाक्यवन्नवीनानुपूर्वीकत्वं नवीनार्थकत्वं वा वेदस्य। न हि स्यात् कस्मिन्नपि कल्पे इन्द्रपदेन वराहस्य शूकरपदेन वा देवेन्द्रस्य प्रतिपत्ति र्न वाऽश्वमेधान्महापापस्य ब्रह्मघाताच्च महापुण्यस्योत्पत्तिरिति ज्ञेयम्। किञ्च कारणलीन-कार्यसंस्काररूपशक्तिवशादेव खल्वनुगतकार्यकारणभावव्यवस्था, अन्यथाकस्मिकत्वापत्तेः। अत्र 'यं सोम्यैतमणिमानं न निभालयस एतस्य वै सोम्यैषोऽणिम्न एवं महा-न्यग्रोधस्तिष्ठति श्रद्धत्स्व सोम्येति" [ छान्दोग्य ६।१२।२ ] इति श्रुतिर्मानम्। यमणि-मानं न पश्यसि, अदृश्यस्यैतस्याणिम्नः कारणस्य कार्यमेवं महान् न्यग्रोधस्तिष्ठति, अन्यथा कथमस्मादस्योत्पत्तिरिति श्रद्धत्स्वेत्यर्थः। एवमदृश्यादपि सूक्ष्मतरादेव सद्रूपात् कारणात् कार्यस्य जगतः स्थूलस्योत्पत्तिरतः सूक्ष्मे सद्रूपे कारणे ब्रह्मणि लीना कार्यस्य संस्काराख्या शक्तिर्वर्त्तते इति प्राप्तम्। न चात्राविद्याया मिथ्याभूताया गन्धोऽपीति ज्ञेयम्। एवञ्च विषयेन्द्रियदेहलोकपूर्वकर्मणामपि संस्कारवशात् पूर्वकल्पतुल्यत्वमेव भवितुमर्हति। अतो महाप्रलये सकलजगत्सृष्टेरावृत्तावपि नामरूपाणां समानत्वादेव न विरोधः कश्चिदपीत्यर्थः। तथाच श्रुतिः—

सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्।
दिवञ्च पृथिवीञ्चान्तरिक्षमथो स्वः॥ [ ऋक्संहिता १०।१९०।३ ]

स्मृतिश्च—"अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा।
आदौ वेदमयी दिव्या यतःसर्वाः प्रवृत्तयः॥ इति।

( क्रमशः )

# वैदेशिकानां संस्कृतरचना

[ श्रीध्यानेशनारायण-चक्रवर्ती, साहित्यशास्त्री एम्. ए. ]

लेनिनग्राडनगरस्थप्राच्यविद्यागवेषणागारपक्षतोऽध्यापककलियानोमेन भारतराष्ट्रस्य प्रधानपुरुषाय राजेन्द्रप्रसादमहोदयायोपहृतं मानपत्रम्।

महामान्य राष्ट्रपतिमहोदय,

परमश्रेष्ठ श्रीमन् राजेन्द्रप्रसाद !

प्रथममेव कतिचित् संस्कृतशब्दान् वक्तुमिच्छेयम्। वयं सर्वे लेनिनगरागतं भवन्तम् महतो भारतवर्षस्य राष्ट्रपतिं सादरं सबहुमानं सस्नेहं सप्रणामं हृदयपूर्वकमभिनन्दामः। भवतश्च दर्शनेन अत्यन्तं प्रसन्नाः स्मः। कुशलागमनं भवता इति वयं ब्रूमः। महतीनां भारतीयप्रजानाम् उत्तमप्रतिनिधये महत् स्वागतम्। ईप्सितातिथिविशेषाय नमोनमः।

परमश्रेष्ठ महामान्य राष्ट्रपतिमहोदय ! अन्ते मया कृतं संस्कृतश्लोकद्वयं पठितुमिच्छामि।

अस्मद्भूम्योः पूर्वकालादासीन्मैत्र्यं सनातनम्।
एतद्विवर्धनार्थं च वयं सर्वे यतामहे ॥
मैत्र्यं चेदमविभेद्यं प्रजानामावयोर्महत्।
सर्वत्र जनताभूत्यै जीवतु शाश्वतीः समाः ॥

कल्याणमित्रः २४।६।१९६० इं लेनिनगरे।

---

# रसमञ्जरी

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

अध्यापकः। वत्से सरले! किमिदं त्वया विलिखितम्—इह खलु द्वौ पथौ—ज्ञानपथश्च भक्तिपथश्चेति।

सरला। आर्य, सुसमीचीनेऽस्मिन् वाक्ये को वा दोषोऽत्रभवतोपलक्षितः ?

अध्यापकः। वत्से ! पथिन्शब्दस्य प्रथमाद्विवचने पन्थानौ इति भवति न पुनः पथाविति।

सरला। ज्ञानपथस्य भक्तिपथस्यापि तर्हि शुद्धत्वं किमिति नोद्भाव्यते भवद्भिः ?

अध्यापकः। वत्से पथिन्शब्दो यदा यस्य कस्यापि समासस्यान्त्यावयवो भवति तदा पथरूपं परिगृह्णाति। तत्र च पाणिनीयं सूत्रम्—ऋक्पूरब्धूःपथामानक्षे इति।

सरला। आर्य! कृतपरिश्रमोऽत्रभवान् व्याकरणतन्त्रे, तत् कौमुद्यत्रभवताधीता स्यात् ?

अध्यापकः। अथ किम् ? कौमुद्येवा बाल्यादनुशीलिता मया। किं तावत् कौमुद्यां वर्तते ?

सरला। ठाजादावूर्ध्वं द्वितीयादचः [ पा० ५।३।८३, सि० कौ० २०३५ ] इति

सूत्रे विनापि प्रत्ययं पूर्वोत्तरपदयोर्वा लोपो वक्तव्य इति वार्त्तिकं कौमुद्यां पठ्यते। एतदनुसारेण प्रकृष्टपथावित्यत्र प्रकृष्टशब्दस्य लोपेन पथौ-पदं निष्पन्नम्।

अध्यापकः। वत्से! चिरं जीव। ईदृशं सर्वाङ्गसुन्दरं वार्त्तिकं श्रीमत्याः कल्याणेन मयाद्याधिगतम्। अनेन भागीरथीसलिलेन परिपूताः सर्वा अशुद्धयः प्रायेण विलयमुपयास्यन्ति। क्वचित्पूर्वपदस्य लोपः कल्पनीयः, क्वचित्पुनरुत्तरपदस्य। यदा च पूर्वोत्तरपदयोरुभयोर्लोपाभ्युपगमस्तदा मोक्षो लभ्येत।

अमला। आर्य, कियद्भ्यश्चिद्दिनेभ्यः पूर्वं भवद्भिरुक्तं देवदत्तो गृहे तिष्ठत इत्यसाध्विति। परं वाक्यं तत् सर्वथा साध्वेव। अत्रावोपसर्गस्य लोपेनावतिष्ठत इति पदं तिष्ठत इति सञ्जातम्।

विमला। आर्य, तस्मिन् दिनेऽहं रात्रे नभसि नक्षत्राणि विराजन्त इति विलिखन्ती भवद्भिर्भर्त्सिता। अत्रापि पूर्वरात्रे इत्यस्य पूर्वपदलोपेन मया रात्र इति सम्पादितम्। न केवलमेतन्नाशुद्धं प्रत्युत सुशुद्धम्।

कमला। आर्य, संस्कृतभाषा सर्वभूतानुकम्पिनी, सर्वसम्पत्प्रदायिनी, सर्वाशुद्धिप्रणाशिनी। संस्कृतभाषाया अशुद्धत्वं कथमपि न सम्भवति। यदेव लिख्यते वोच्यते वोच्चार्यते वा तदेव शुद्धम्। ईदृश्यत्युदारा भाषा जगतीतले द्वितीया नास्ति।

---

## विशेषतो द्रष्टव्यम्

पृ० ११९ प ३ गमनस्यावधिभूते भवति इति पाठ्यम्।
पृ० ११९ प १२ द्विपदामुक्तविधानां...द्विपदां पङ्क्ती इति पठनीयम्।
पृ० ११९ प २० व्युत्पत्तिर्मा खो मख इति प०।
पृ० ११९ प २२ बोधकस्तत्प्रतिषेधः पूर्णो मख इति। इति प०।
पृ० ११९ प २९ वर्णनावसरे च प्रतिपादितम् इति प०।
पृ० १२० प २ ०दित्यस्यापरस्मिन् देशे इति प०।
पृ० १२० प ४ दानमर्थात्कुमेरौ भवति। इति प०।
पृ० १२० प १३ विस्पष्टमुक्ता। इति प०।
पृ० १२० प २२-२३ रूपेष्टाद्रियागेषूपयुज्यते इति प०।
पृ० १२२ श्लो ३८ च ४ अभिधावन् इति प०।
पृ० १२२ श्लो ४७ च ४ चङ्क्रम्यत इति प०।
पृ० १२३ श्लो ४८ च ३ मोघबन्धं पठनीयम्।
पृ० १२६ प २ साम स्वाररूपमेव इति प०।

---

# Manjusha

Vol. IV (about 400 pages)—29 storiettes, hymns from the Rigveda with commentary, छात्री versus छात्रा, पत्त्र versus पत्र, Goethe's maxims (original German with Sanskrit translation), Saratchandra's Niṣkṛti, on Pāṇini's क्त, महाभाष्य, विश्रम versus विश्राम, सेवका versus सेविका, अन्योन्य, 11 humorous skits. Rs. 6/8/-.

Vol. V (about 400 pages) 16 storiettes, 4 long stories, 12 poems, humorous skits, discussions on परःशत, भ्रातृव्य, सूनृता, आलोदाऽनात्यविहरणे, on the Anubandhas, on grammatical gender, Sanskrit equivalent of "horse-power", Tagore's poems, Language as fossil history, on Sāyaṇa's Bhāṣya, **The Śivasūtras and the Sanskrit Alphabet**, Patañjali's Mahābhāṣya, Hymns from the Avesta, etc., etc. Rs. 6/8/-

Vol. VI (about 400 pages) 5 storiettes, 2 long stories, 1 Bhāṇa, Derivations of अश्वतर and पुत्र, आनोभद्रीयसूक्त with various commentaries, explanation of the Madhusūkta, Kālidāsa and Bhavabhūti, Mahābhāṣya (pp. 33-136), Rasamañjarī, etc., etc. Rs. 6/8/-

Vol. VII (about 400 pages) **Technical Terms and Technique of Sanskrit Grammar—Samāsa, Kāraka and Vibhakti.** Kālidāsa and Bhavabhūti (5 instalments). Was Pāṇini a Communist? Kālidāsa and Shakespeare. Greek Proverbs (64 pages). On तरप् and तमप्. On सूनृत and भ्रातृव्य. Meaning of शफोरू. 9 storiettes, 3 long stories, मृगया in Sanskrit Drama, etc., etc. 6/8/-.

Vol. VIII (about 200 pages) Short stories, long stories, humorous skits, महाभाष्यरत्नमञ्जूषा. Meanings of Sanskrit proper names. Sanskrit stanzas and their parallels from European languages. Sanskrit equivalent of bread. Notes and Queries. Tagore's short story. On देवानांप्रियः. On the derivation of कार्मुक, On Abhinavagupta. **On Śārṅgarava and Śāradvata.** Tagore's Urvashi. Common Errors. **So-called Solecisms of Kālidāsa.** Rs. 3/8/-.

Vol. IX (nearly 300 pages). **So-called Solecisms of Kālidāsa.** Literary Parallels. Common Errors. Technical Terms of the Mugdhabodha. Tagore's story and poems. Contradiction in Terms. On the correct derivation of प्रवीण, सिकता etc. वाग्मी vs. वाग्ग्मी. बिभीषण versus विभीषण. On फ, ढ, ख, छ, घ in Pāṇini. A new stanza from Vyāḍi's Saṁgraha. Meaning of रद विलेखने. सतीर्थ्य versus सतीर्थ. The Anubandhas र, क, प, उ, ष in Pāṇini, **The Technical Terms—Upasarga, Nipata, Karmapravacaniya, Gati, etc. Apurva in Mimamsa.** In Defence of the Padapāṭha. On ऊकालोऽज्झ्रस्वदीर्घप्लुतः. On वामदेव्यं साम. रेफ versus रकार. Rs 6/-

MANJUSHA ( Sanskrit Monthly Magazine )
*Registered No. C. 3278*



Printed and published by Sri Visvanath Chatterjee, M.A. from 8 Bhupendra Bose Avenue, Calcutta-4. Printed at the Gupta Press, 37/7 Baniatola Lane, Calcutta-9.

चन्द्रशेखर चन्द्रशेखर चन्द्रशेखर पाहि माम् ।
चन्द्रशेखर चन्द्रशेखर चन्द्रशेखर रक्ष माम् ॥

श्रीशिवः शरणम्

पञ्चदश-वर्ष ] April, 1961 [ अष्टमी संख्या

# मञ्जूषा

सम्पादकः—श्रीक्षितीशचन्द्र-चट्टोपाध्यायः

## सूचिः



## अप्पाशास्त्रिणां पत्राणि

येषां सविधे राशिवडेकरमहोदयस्य पत्राणि वर्तन्ते ते कृपया मञ्जूषायां प्रकाशनार्थं तेषां प्रतिलिपिप्रेषणनानुगृह्णन्तु नः ।

*Office :* 8, Bhupendra Bose Avenue, Calcutta—4.
Minimum Annual Subscription : Rupees Six only.
Foreign—Twelve shillings.
Single copy : One Rupee.

शरणं तरुणेन्दुशेखरः शरणं मे गिरिराजकन्यका ।
शरणं पुनरेव तावुभौ शरणं नान्यदुपैमि दैवतम् ॥

# मञ्जूषा

April, 1961. | १८८३-शकीयवैशाखस्य १५श-वर्षस्याष्टमी संख्या | Vol. XV No. 8

## आभाणकमाला

एतावान् खलु वै पुरुषो यावदस्य वित्तम् । तैत्तिरीयब्राह्मणम् १।४।७।७ ।

अस्य पुरुषस्य यावद्वित्तमस्ति तावदेवास्य पुरुषस्य सर्वकर्मनिर्वाहकं सारभूतं शरीरम् । दरिद्रस्य भोगदानयोरशक्तत्वात् । सायणः ।

नातः पापात् पापीयोऽस्ति यदनुपकरणस्य दीर्घमायुः । चरकसंहिता ।

Greek. Khrēmat anēr.

Latin. Pecunia vir.

अर्थः पुरुषः ।

Latin. Divitiae virum faciunt.
Money makes the man.

राय एव विदधति पुरुषम् ।

यस्यार्थास्तस्य मित्राणि यस्यार्थास्तस्य बान्धवाः ।
यस्यार्थाः स पुमाल्लँोके यस्यार्थाः स च पण्डितः ॥ पञ्चतन्त्रम् ।

Greek. Ta khrēmat anthrōpois heuriskein philous
dunamin te pleistēn tōn en anthrōpois ekhein.

Wealth finds out friends for men and wields the greatest power among mankind.

"पूज्यते यदपूज्योऽपि यदगम्योऽपि गम्यते ।
वन्द्यते यदवन्द्योऽपि स प्रभावो धनस्य च ॥"

"यथा विहङ्गास्तरुमाश्रयन्ति नद्यो यथा सागरमाश्रयन्ति ।
यथा तरुण्यः प्रियमाश्रयन्ति सर्वे गुणाः काञ्चनमाश्रयन्ति ॥"

# था हेतौ चच्छन्दसि पा० ५।३।२६

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

अष्टाध्याय्यां पञ्चमाध्यायस्य तृतीयपादे सूत्राणि—प्रकारवचने थाल्। इदमस्थमुः। किमश्च। था हेतौ चच्छन्दसि [ २३-२६ ] इति। अत्र इदं-किमोस्थमुरित्यनुक्त्वा इदमस्थमुः किमश्चेति पृथक्सूत्रविधानात् था हेतौ चच्छन्दसीति विधीयमानस्थाप्रत्ययः किम एव स्यान्न पुनरिदम इति व्याख्याकाराः। तथा हि न्यास-कृतोक्तं—योगविभाग उत्तरार्थः। था हेतौ चेति वक्ष्यति। स किम एव यथा स्यात्, इदमो मा भूदिति। पदमञ्जरीकारेणाप्युक्तम्—योग-विभाग उत्तरत्र किम एवानुवृत्तिर्यथा स्यादिदमो मा भूदिति। अत एव सायणाचार्येण ऋग्वेदभाष्ये [ १।२४।४ ] द्राविडप्राणायामन्याये-नोक्तम्—प्रकारवचन इदमस्थमुः। सुपां सुलुगिति व्यत्ययेन विभक्ते-र्डादेशः। टिलोप उदात्तनिवृत्तिस्वरेणाकार उदात्त इति। अथर्ववेद-भाष्यकृता पुनर्विस्पष्टमेवोक्तम्—था हेतौ चच्छन्दसीतीदमस्था-प्रत्ययः [ ४।१।३ ] इति। शुक्लयजुर्वेदसंहिताभाष्येऽपि [ ३३।२७ ] महीधरेणोक्तम्—था हेतौ चच्छन्दसीतीदमस्थाप्रत्ययः, एतेतौ रथो-रितीदम इदादेश इति।

प्रसङ्गत उच्यते थाप्रत्ययान्ताः शब्दाः प्रत्ययस्वरेणान्तोदात्ताः, थाल्प्रत्ययान्तानां पुनर्लित्स्वरेण प्रत्ययात्पूर्वमुदात्तं भवतीति।

अत्रेदमवधेयम्। वेदे कथा इत्था चोभावेवान्तोदात्तौ बहुलं प्रयुज्येते। तत्र कथाशब्दः पाणिनिना परिगृह्य तेत्थाशब्दश्चावज्ञोपहतः क्रियेतेति न सम्भवति। अत एव था हेतौ चच्छन्दसीत्यस्यार्थः कर्तव्यः—इदंशब्दात्प्रकारवचने किंशब्दात्प्रकारवचने हेतौ च वर्तमानात् था प्रत्ययो भवतीति। प्रयोगमूला हि व्याकरणस्मृतिरित्यभियुक्ताः समामनन्ति। यद्यपि छन्दसि दृष्टानुविधिरित्यपि जागर्ति वचनं तथाप्यर्धजरतीयन्यायः सर्वथा परिहार्य एव।

—

# धर्मप्रवृत्तिः

[ वासुदेव-नागेशशास्त्रि-औदुम्बरकरः ]

'धर्मो रक्षति रक्षितः'—श्रीभगवान्।

इह खलु सर्वेऽपि जीवाः सुखार्थमेव प्रयतन्ते। सुखं च नाम दुःखहानिर्निरतिशय आनन्दो वा। स च येन लभ्यते तत्सुखसाधनमित्युच्यते। सुखं पुनरैहलौकिकं पारलौकिकं चेति द्विप्रकारकम्। तत्र केवलमैहलौकिकमेव सुखमपेक्षमाणानां पारलौकिक-सुखप्राप्तये प्रवृत्तिर्नैव भवति। पारलौकिकसुखप्राप्तय एव तावद्धर्मः समपेक्षित इति नेदं परोक्षं नाम तद्विदाम्। अतश्चेदानीं दृष्टमात्रवस्तुषु केन्द्रितमनोवृत्तीनां धर्मे पराङ्मुखत्वम्। सेयमेषामपारदर्शिनी मनोवृत्तिर्यदि नाम परिवर्त्येत तदैवैतेषां मनःसु धर्मप्रवृत्तिः पदं निदध्यात्। तस्माल्लोकानां सङ्कुचितमनोवृत्तिविपर्यासायैव किमप्यनुष्ठेयमिति नात्र विप्रतिपद्येत कोऽपि विचारशीलः। तदर्थं च तदनुकूलं वातावरणमावश्यकम्। यद्यद्धि दृश्यते, श्रूयते, उपदिश्यते, प्रदर्श्यते वा तत्तन्मनांसि समाकृष्य स्वनिर्दिष्टेऽर्थे प्रवर्तयति प्रायशो लोकान्। अतश्च धार्मिकं दृश्यं, धार्मिकं श्रवणं, धार्मिकं प्रदर्शनं, धार्मिकं प्रवचनादि च यथैतेषां भूयसा सान्निध्यमलङ्कुर्यात्तथैव प्रयतनीयम्।

अद्यत्वे तु को नाम धर्म इत्यत्रापि विवदन्ते विद्वांसोऽपि महान्तः। अनेन चात्र विषये सन्देहमापद्यन्ते सामान्याः। विद्वांसश्चेमे प्रायशो नव्यशिक्षिताः श्रेष्ठतापदमवलम्बन्ते लोकेष्विदानीम्। ततश्च

> 'यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः।
> स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥'

इति गीतोक्तिं सार्थयन्तः प्राकृतजनाः प्रायो नेतॄणामेवादर्शमनुवर्तन्ते। विवाहो भोजनं मन्दिरादिशुद्धिश्चैतेषां मते नैव धर्मप्रमाणमपेक्षन्ते। सङ्क्षेपतस्तु जगत्यस्मिन् यद्यन्नाम समपेक्ष्यते जीवनाय तत्र तत्र न किल स्तोकोऽपि धर्मस्य सम्बन्ध इति मतिर्भूयसामेव पण्डितंमन्यानाम्। ते तु मन्वते यत्केवलं परमेश्वरविषयकं तत्त्वज्ञानं भजनपूजनमात्रमेव च धर्म इति। नास्तिक्यशिखरे विराजमानानामपरेषां 'नास्ति किल कोऽपि नियन्ता नाम जगताम्। ग्रहगोलाश्चेमे स्वाभाविकाकर्षणसम्पन्नाः परस्परं धारयन्ति। नैसर्गिकमेव चैतन्निखिलमपि व्यवहारजात'मित्यादि प्रजल्पतामविचारचतुराणां मतस्य खण्डनाय न वयं प्रवर्तामहे।

तत्र तावदास्तिकमतानुयायिनां यदि नाम सम्भवेद्विप्रतिपत्तिस्तर्हि तेषामेव कृते स्तोकमात्रं निवेदयामः। परिचितप्रायमेव सर्वेषामिदं सुभाषितम्—

'आहारनिद्राभयमैथुनं च सामान्यमेतत्पशुभिर्नराणाम् ।
धर्मो हि तेषामधिको विशेषो धर्मेण हीनाः पशुभिः समानाः ॥'

इति । अत्र तावद्धर्म एव मनुष्याणां तदितरप्राणिभ्यो व्यवच्छेदक इति सुस्पष्टं कथितम् । धर्मविहीनानां हि मनुष्याणां जीवनस्योद्देश्यं तिरश्चां जीवनतो न भिद्यते । मानवस्ताव-त्स्वबुद्धिप्रभावेण गगनाभोगे विहरेत् । किन्तु किं तावता साधितम् ? यत्किमपि कृत्वाऽसौ जीवतीत्येव । पशवोऽपि नाम जीवन्त्येव । एवं च जीवन एवैतेषां सर्वेषां प्रयत्नानां पर्यवसानं स्यात् । ततश्चैते पशुनिर्विशेषा एव भवेयुर्धीमन्तो नराः । अथात्र केऽपि प्रत्यवतिष्ठेरन् । तथा हि । स्यादेतद्यदि नाम मानवाः पशुसदृशमेव जीवनं यापयेयुः । किन्तु विद्यत एवैतेषां जीवनेऽपि विशेषो येनैते पशुभ्यो व्यवच्छिद्येरन् । एते हि परोपकारधिया वर्तयन्ति जीवनमात्मीयम् । समभ्यस्यन्ति चैते नानाविधानि शास्त्राणि कलाश्च । विरचयन्त्येते सुन्दराणि नगराणि निवसन्ति च तत्र सङ्घीभूय । आविर्भावयन्ति नानाविधानि वस्तूनि येन विस्मयन्ते प्रतिक्षण-मखिलाः । प्रादुर्भावयन्ति सरसानि मनोहारीणि काव्यानि रमयन्ति च रसिकान् । प्रकटयन्ति गूढतराणि तत्त्वानि । एवं च कुर्वाणाः समुज्ज्वलयन्त्येते जीवनमात्मीयम् । एतच्च निकाममेव दुर्लभं पशुषु । तत् कथमुच्यते पशुनिर्विशेषा एवेदानीं मानवा इति । इति ।

अत्रोच्यते । यदुच्यते परोपकारप्रवृत्तयो मानवा इति तदेतत्तिरश्चामपेक्षयाऽतीव हीनम् । पशुपक्षिणो हि लवमप्यनपेक्षमाणाः कृतघ्नानप्यस्मानुपकुर्वन्ति । अप्येतस्या निर्मलप्रवृत्तेः शततमीमपि कलां प्राप्नुयात्परोपकारभावनाऽस्माकम् ? शास्त्राणां कलानां चाभ्यासोऽपि जठरपूरणफलकः संमोदलाभफलको वा । तत्किं न शक्नुवन्ति पूरयितुं जठरमात्मीयं न वा समवाप्नुवन्ति संमोदातिरेकं तिर्यञ्चः ? सुन्दराणि नगराणि निर्माप्य तत्र सङ्घीभूय वासोऽपि नैतेषां कमपि विशेषमावहति । पशुपक्षिणोऽपि तावत्सङ्घशो निवसन्तः सुखेनैव यापयन्ति नैजमायुः । अपि च नरमपेक्ष्य मन्दमतयः पक्षिणो यद्विरचयन्ति तन्तुजालस्यूतं नीडादिकं तेन विस्माप्यन्ते नैकविधशिल्पनिर्मातॄणां प्रवराः । कोकिलादिकलकण्ठानां सुरम्यं सुधास्रावनिर्विशेषं निपीय रवं चिरास्रावलम्बिनं भावयति रसिकमूर्धमान्दोलयिताऽपि गाननिपुणो निजं स्वरयन्त्रम् । एतेनास्मदपेक्षयाऽतीव मतिहीनतामापादितानां पक्षिणां मक्षिकाणां च सुव्यवस्थितं जीवनं सम्प्रेक्ष्य सुदूरमिव पलायितुमीहन्ते नीतितन्त्राण्यस्मदीयानि । तन्न शतोऽप्यहत्यस्मदीयं जीवनं नैसर्गिक-सम्पदमवलम्बमानानां तिरश्चां सादृश्यं, किमुत तेभ्यो विशेषम् !

वयं हीदानीं कृत्रिमैः साधनैस्तथा किल नियन्त्रिताः स्मो यथा स्वाभाविकतयाऽपि

सुलभं सुखमुपभोक्तुं न प्रभवामः। परस्परकलहमात्रान्वेषिणी नीतिरस्माकं सर्वथा दुःखायैव भवति। समुन्नतेः परां काष्ठां समारूढानामप्यस्माकं मनसि कणशोऽपि नावतिष्ठते सन्तोषो नाम। अत एव च न प्रभवामः सुखं नाम किमप्यधिगन्तुम्। नैव च जानीमो वयमेतन्मनसः समाहिततया लभ्यत इति।

यदि च मनसः समाधानमेव सुखस्वरूपं तदा विचार्यतां महाभागैः कस्तावत्तत्सिद्धय उपाय इति। यदि च विचारयेयुरेवं मतिमन्तस्तर्हि धर्म एव किमपि निदानं सुखस्येत्येव प्रतिपद्येरन्। परमेश्वरविषयकं तत्त्वज्ञानं तत्प्रीतये च कर्तव्यं क्रियाकलापादीत्येतत्सर्वं धर्मपदेनाभिधीयते। तथा च गीतायां श्रीभगवान्—

"ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति।
भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया॥
तमेव शरणं गच्छ सर्वभावेन भारत।
तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम्॥"

इत्यादिना परमेश्वरसेवनमेव सुखस्य मूलमित्युपादिशत्।

अथ कोऽयमीश्वरः, किं च तत्सत्वे प्रमाणमिति चेत्तदित्थम्। श्रद्धालवो हि 'यतो वा इमानि भूतानि जायन्ते' इत्यादिभिः श्रुतिस्मृतिपुराणादिवाक्यैः प्रतिपाद्ये वस्तुनि नैव विप्रतिपद्यन्ते। येषां त्वत्र वर्तते संशीतिस्तेषां कृते समवलम्ब्यतेऽत्र काचित्तार्किकी सरणिः।

न्यायसिद्धान्तमुक्तावल्यामीश्वरसिद्धिप्रस्तावे श्रीविश्वविश्रुतविश्वनाथन्यायपञ्चाननः 'सर्वं क्षित्यङ्कुरादिकं कर्तृजन्यं, कार्यत्वाद्घटव'दिति सूत्रितवान्। तस्यायमभिप्रायः। स्थावरजङ्गमात्मकस्यास्य विश्वस्य नियन्त्रणकारि तत्त्वं परमेश्वरः। वयं हि प्रतिपद्यामहे यद्यदि नाम कोऽपि नियन्ता न स्यात्तदा किमपि कार्यं नैव भवेत्। कस्यापि वस्तुनः प्रादुर्भावोऽपि न स्यात्। यदि नाम न स्यात्कोऽपि तन्त्रज्ञस्तर्हि स्थापत्यकलापरिपूर्णानां वस्तूनां निर्माणं नैव भवेत्—न स्युर्गृहाणि, न वा यन्त्रालयानि, नापि सेतवो नापि वा प्रतिमूर्तयः। यदि नाम न स्युः कुम्भकारास्तर्हि कथं घटादीनां प्रादुर्भावोऽभ्युपगम्यते धीमद्भिः? तदवश्यमभ्युपेतव्यं सत्स्वपि साधनान्तरेषु तत्तत्कार्येषु कस्यापि सचेतनस्य कर्तृत्वम्। अवश्यं च ग्रहनक्षत्रवायुजलभूवृक्षादिपदार्थानामुत्पादकतया कोऽपि सचेतनः स्वीकर्तव्यः। तस्य च सर्वपदार्थनिर्मातृतया सर्वज्ञत्वमभ्युपगन्तव्यमेव। स चायमेतादृशः परमेश्वर एवेति मन्यते भारतीयैः कैश्चिदितरैश्च। नव्येषु श्रीमान्स्पेन्सरमहोदयस्तु सर्वपदार्थानभिव्याप्यावस्थितं वस्त्वज्ञेयत्वेन गृह्णाति।

एवं सिद्धे परमेश्वरस्यास्तित्वे तत्प्रणीतनियमानामपि स्वीकारो दुर्वारः। न हि कश्चि-

द्वैज्ञानिकः केवलं यन्त्रं निर्माय कृतार्थतां भजते, किन्तु कथमेतस्योपयोगः कर्तव्यः कथं चात्रैतदुपयोक्तृभिर्व्यवहर्तव्यमित्याद्यपि प्रतिपादयति। अत एव जगति लब्धजनुभिर्मतिमद्भिः कथं वा वर्तितव्यं किं चैतैः साधयितव्यमित्याद्यपि जगत्कर्त्रा प्रतिपादितमेवेति स्वीकार्यमेव। एतच्च तस्य ज्ञानमयं ज्योतिश्चत्वारो वेदा इति संमन्यन्ते भारतीया धार्मिकाः। त एवाखिलस्य धर्मस्य मूलमिति चैते प्रतिपद्यन्ते। अपरेषां पुनर्धार्मिकाः प्रबन्धा विभिन्ना एव वर्तन्त इत्यास्तां नाम तत्।

पिता हि सर्वथाऽपि सन्ततेर्हितमेवाभिलषति। एवमेव सर्वेषां पितृपदे स्थितेन परमेश्वरेण हितोपायो वक्तव्य इति नैतदाश्चर्यास्पदम्। स एव हितोपायस्तेन वेदस्वरूपेण नः प्रदत्तः। परमेश्वरस्य च शाश्वतत्वात्तदुपज्ञवाङ्मयस्यापि शाश्वतत्वमायातम्। अत एव नित्यत्वमेवाभ्युपगम्यते वेदानाम्। एष एव प्राणिनां हितनिवेदको वाग्राशिः। तदुक्तानुष्ठानमेव च भारतीयानां मते धर्मः। तथा च जैमिनिः—'चोदनालक्षणोऽर्थो धर्म' इति। अत्र चोदनापदं सर्ववेदवाचीति सिद्धान्तितं मीमांसकैः। धर्मप्रमाणप्रस्तावे मनुश्च—

'वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम्।'

इत्याह स्म। एतेन वेदानुसारिस्मृत्यादिप्रबन्धाः शिष्टाचारश्च धर्मे प्रमाणमिति स्फुटीभवति। स चायं धर्मः पितृपुत्रादिपरम्परयाऽद्य यावदस्मिन्भारते वर्षे प्रचरन्सन्दृश्यते।

सोऽयं धर्मस्तावत् त्रिविधः—आचारो व्यवहारः प्रायश्चित्तं चेति भेदात्। अन्यथाऽपि चतुर्विधत्वं प्रतिपाद्यते मनुजानां हितमार्गस्य। सोऽयं पुरुषार्थ इत्युच्यते धर्मोऽर्थः कामो मोक्षश्चेतिप्रकारवान्। अस्य च चतुर्विधस्यापि पुरुषार्थस्य प्रतिपादको भगवान् वेद एव। तत्र मोक्षहेतुस्तत्त्वज्ञानप्रतिपादको वेदभागो वेदान्त इत्युच्यते। तन्निरूपकं च शास्त्रं वेदान्तापरपर्यायमुत्तरमीमांसाशास्त्रम्। अर्थकामयोः साधको ज्ञानसम्पादकश्चित्तशुद्धेश्च हेतुभूतो वेदभागः कर्मकाण्डमित्युच्यते। एतदेव च प्राधान्येन धर्मपदेनाभिधीयते।

इह खलु लब्धजन्मना प्राणिमात्रेण यत्किल सुखं दुःखं च समुपभुज्यते तत्खलु न तावत्सद्योहरिद्राचूर्णमिलनजन्यं गौरत्वम्। किन्त्वसौ नैकजन्मसु सम्पादितसुकृतदुष्कृतानां विपाक इति घण्टाघोषोऽयं भारतीयतत्त्वज्ञानस्य। स च विपाकः कथं भवतीति साक्षात्कृतमेवैतत्प्रतीच्या दृशा मुनिभिः। कीदृग्विधं सुकृतं कीदृशं सुफलं प्रसूते किंविधं च दुष्कृतं किंप्रकारकं दुष्फलं समुत्पादयतीति सुदर्शमेवेदं कर्मविपाकशास्त्रे। तत्र धर्मानुसारित्वमेव सुकृतापरनामधेयं सुखं फलति, अधर्मावलम्बित्वं च दुष्कृतेतिसंज्ञं जनयति दुःखम्। अत एव धर्मप्रवृत्तौ प्राचामतिमात्रं निष्ठा। धर्माधर्मवित्र च निदानं

सुखदुःखभोगस्य। अत्रापरे केचिदाक्षिपेयुः। यथा—'अहो कथमुच्यते कल्पनामात्र-लब्धास्पदौ धर्माधर्मौ सुखदुःखयोर्निदानमिति। न तावत्तयोः काऽप्यपेक्षा नाम। तेषां ह्यसत्त्वे नैव काऽपि क्षतिः। नापि कार्यकारणयोरनुपपत्तिः। तदित्थम्। किमपि कार्यं कर्तारं कारणं वान्तरेण नैव निष्पाद्यत इति तावद् गृहीतमेवास्माभिः। इह जगति तु प्रवर्तमानानां कर्मणां तत्फलानां च धर्माधर्मावन्तराऽपि सुस्पष्टः कार्यकारणभावः। तथा हि। अन्नं भुक्तवानेव तावत्तृप्तिमासादयति नापरः। सम्पादितधनधान्यादि-सामग्रीकश्च प्राप्नोति भोजनं नान्यः। नानाविधोद्यमादितत्पर एव समासादयति सम्पदं नेतरः। एवं च येन सुष्ठु कृत्यं सम्पादितं स सुखं लभते। चौर्यादिदुष्कर्मनिरतश्च दुःखमाप्नोतीति प्रत्यक्ष एवायमर्थः। ततश्च सम्भवति दृष्टफलेऽदृष्टकल्पनाया अन्याय्य-त्वमिति न्यायेन सिद्धे धर्माधर्मकल्पनाया विहायसि चित्रायमाणत्वे कोऽयमाग्रहस्त-त्सिद्धये" इति।

अत्रोच्यते। विज्ञायत एव मतिमद्भिः सूक्तिरियम्—'व्रजत्यधः प्रयात्युच्चैर्नरः स्वैरेव कर्मभिः' इति। ततश्चात्मन एव सुकृतानां फलभूतं सुखमात्मन एव च दुष्कृतानां फलभूतं दुःखं प्राणी प्राप्नोतीति सिध्यति। न तु स्वेतरविहितकर्मणां फलमयं प्राप्नोति। यदि नामासौ तत्प्राप्नुयात्तर्हि रामेण भुक्ते गोविन्दस्य तृप्तिः स्यात्। न चैवं सन्दृश्यते। ततश्च स्वकृतानामेव कर्मणां फलं लभते जन्तुरिति निश्चीयते। एवं च सिद्धे कर्मफलभोगतत्त्वे प्रागुल्लिखिताक्षेपेषु शैथिल्यमागच्छति। तदेवम्—उद्यमबाहुल्यमनुष्ठाय समासादितधनधान्यस्य कस्यापि नरस्य सम्पूर्णमपि द्रव्यं यदि नाम चौरैर्निष्कास्येत, नैव च ततस्तदेतत्प्रत्यावर्तेत तदा तु जीवनमखिलमस्य दुःखपूर्णमेव सद्व्रतीयात्। यदि तु कृतोद्योगस्य सम्पादितधनस्य सुखलाभस्तर्हि क्वेदानीं स गतोऽस्य विपन्नस्येति विशदीक्रियतां तावत्। तथास्थितौ च तद्दुःखनिदानभूतस्य सकलस्यापि दृष्टकारणकलापस्य महाप्रलये सञ्जाते दौर्भाग्यमेवादृष्टमेकं समुदेति। दौर्भाग्यं च नाम पूर्वजन्मकृतदुष्कर्मणां फलाभिमुखत्वम्। तस्मादवश्यमेवैतेन बहुप्रयासकारिणा दुःखफलकं किमपि दुष्कृतं पूर्वमनुष्ठितमिति स्वीकार्यं भवति। तस्य चेहजन्मनि कृतत्वाभावात्पूर्व-जन्मैव स्वीक्रियते। एवं च पूर्वजन्मविहितसुकृतैरेवेदानीन्तनजन्मनि सुखं लभ्यत इति विज्ञायेत। अन्यथा हि चौर्यादिदुष्कर्मनिरतस्य प्रमाणाभावे प्रमुक्तस्य कस्यचित्सुख-भोगानुपपत्तिः स्यात्। यद्यपि चौर्यादिदुष्कर्मनिरतेन तत्फलभूतं दुःखमेव भोक्तव्यं तथापि प्रस्तुतजन्मनि सुखफलकस्य पूर्वजन्मकृतसुकर्मणः फलाभिमुखत्वेन सुखमेव तस्योप-तिष्ठते। इदानीं कृतं दुष्कृतं च परजन्मनि दुःखप्रदायि भवति। एवं समनुष्ठितधर्मा-धर्मावेव सुखदुःखावुत्पादयतः। तत्फलभोगे च किमपि निमित्तं भवतीति।

एवं च सिद्धं धर्माधर्मयोः सुखदुःखजनकतया सत्त्वम्। तत्र च प्राणिनां दुःखं सुतरां नाभिप्रेतम्। सुखार्थमेव चैतेषामखिलोऽपि प्रयासः। तदर्थं च धर्म एवानुष्ठातव्यः। प्राणिषु च सर्वेषु मानव एव तावद्धर्मानुष्ठानेऽधिकारी। तत उत्कृष्टाश्च देवपित्रादियोनयो नरजन्मनि विहिततत्तद्धर्माणां फलम्। पशुपक्ष्यादियोनयस्तु समनुष्ठिताधर्मस्य फलम्। मनुष्यजन्म च सुखदुःखसंमिश्रितम्। मर्त्यलोकापरपर्यायो दृश्यो लोकश्च तन्निर्वाहस्थानम्। परिपक्वधर्मजनि पुण्यभाजः स्वर्गो लोकः। अधर्मजन्यपापवशात् नरकप्राप्तिः। नरकश्च सृष्टिगतप्राणिनां सर्वेषां पापहेतुकदण्डभोगस्थानम्। एवं सदसद्वासनावशात्प्राणी तत्तल्लोकेषु संसरति। अत एव च संसारोऽयम्। एतादृशजन्ममृत्युपरम्परायामुद्विग्नाः सन्तः फलकामनां विहाय समाचरितेन धर्मेण निर्मलचित्ताः सन्तः सौभाग्यवशात्सद्गुरुसमुपदेशाज्जानन्ति परमात्मानम्। तन्मयाश्च भूत्वा मुक्तिं प्राप्नुवन्ति संसारादिति शास्त्रार्थः।

अत्र त्वेतानि प्रमाणानि। तथा हि—

"त्रैविद्या मां सोमपाः पूतपापा यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते।
ते पुण्यमासाद्य सुरेन्द्रलोकमश्नन्ति दिव्यान्दिवि देवभोगान्॥
ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति।
एवं त्रयीधर्ममनुप्रपन्ना गतागतं कामकामा लभन्ते॥ (गी० ९।२०-२१)

आ ब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन।
मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते॥ (गी० ८।१६)

असक्तबुद्धिः सर्वत्र जितात्मा विगतस्पृहः।
नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छति॥ (गी० १८।४९)

भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः।
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्॥ (गी० १८।५५)

इत्यादि।

एवं च वैदिको धर्मः सकामतयाऽनुष्ठितस्तत्तत्कामफलको भवति। स एवाभ्युदय इत्युच्यते। निष्कामतया च समनुष्ठितोऽयं चित्तशुद्धिद्वारा मोक्षप्रदो भवति। तथा च काणादन्यायसूत्रम्—

'यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः' इति। निःश्रेयसं निर्वाणं मोक्षश्चेति पर्यायाः।

( क्रमशः )

———

# आचार्यजानकीनाथचरितम्

[ अध्यापकः श्रीवटुकनाथभट्टाचार्यः ]

पौरुषप्रशस्तिपराणि प्रवचनानि प्रमाणयन्तोऽन्वर्थानि सत्पुरुषा लोके महत्पदवीं भजन्ते। तेष्वेव सङ्गच्छते गुणिगणगणनारम्भे निपतति कठिनी ससम्भ्रमा यस्येति लक्षणम्। प्रथितयशसां बहुश्रुतानामध्यापकप्रकाण्डानां जानकीनाथभट्टाचार्याणामालोचिते समग्रे चरितनिचये मूलसूत्रमेतदनुगुणमेवावभासते। प्रतिभा सर्वतोमुखीति यत्कीर्त्यते, सुतरामुदाहृतं तदेतेषु मनीषिप्रवरेषु। स्वानुष्ठितेषु सर्वेषु व्यापारेषु प्राथम्यमेव नियतमन्वियाय तम्, वैधसी लिपिरेवमेवासीदिति प्रतिभाति विमृशतां चेतसि।

कलिकातानगर्या दक्षिणतः क्रोश-युगपञ्चकमन्तरा वर्त्तते चम्पाहट्टीनामकबाष्पीययानविश्रामनिकेतसन्निहितो नारिकेलवेडियाख्यो विद्वज्जनबहुलो ग्रामः। तत्रत्येषु राढदेशीयब्राह्मणपण्डितेषु दुर्गाचरणभट्टाचार्याभिधः श्रोत्रियः कश्चनासीत्। तस्यात्मजः सिद्धान्तवागीशोपाधिको लब्धप्रतिष्ठः शोभाबाजारराजकुले सभापण्डितश्चन्द्रमोहनभट्टाचार्यो मसजिदवाडीवर्त्मनि निर्माप्य सदनं सपरिजनमुवास। पूर्वजानां निवासस्थल्यां नारिकेलवेडियानाम्न्यां चन्द्रमोहनस्य स्वप्रकाशो वंशप्रदीपो जानकीनाथो जन्म लेभे। बाल्य एव पितुः स्वःप्रयाणानन्तरं तस्य पालनपोषणादिकं शिक्षाविधानञ्च जनन्या व्यधायि। अनुजस्तस्योपेन्द्रनाथनामा परं स्नेहातिरेकभागग्रजस्यासीत्। राजकीयकरणाधिकारे नियुक्तेनानेन रुजाक्रान्तेन सता देओघरपुरान्तिके प्रवासिना कस्यचिद् भूमिपस्य विषये नियोगो लब्धः, परन्तु सहजप्रेमवशेन जानकीनाथेन तस्यार्थकृच्छ्रगतस्य कृते बहुधा साहायकमुपपादितम्। मसजिदवाडीपल्लीस्थितायां गुरुचरणपण्डितपरिचालितायां पाठशालायां जानकीनाथेन कृतो विद्यारम्भः। ततः परम् आहिरिटोला-वङ्गविद्यालये लब्धशिक्षेणानेन छात्रवृत्तिसमाख्यपरीक्षायां प्रदर्शितकृतित्वभरेण प्रथमं स्थानमधिकृतम्। एतदारभ्य चरमोपाधिलाभावधि तेनाव्यतिक्रमेण ह्यात्मनोऽद्वितीयत्वमर्यादा रक्षितेति विदितवेदितव्यानां श्रद्धासंस्कृतं विस्मयमावहति। १८०४ शकातीताब्दे हिन्दूस्कूलाख्याद् विद्यानिकेतनादमुना प्रवेशिका परीक्षोत्तीर्णा—प्रथमञ्च स्थानं कृतिषु समधिगतम्। परन्तु कान्दीस्कूलच्छात्रेण रामेन्द्रसुन्दरत्रिवेदिनाम्ना केनापि सह विभज्य तत् पदमुररीकृतमिति तन्मनसि जनपदवास्तव्यस्याज्ञातपरिचयस्य प्रतियोगिनोऽस्य दर्शने कौतूहलं समजनि। वर्षद्वयानन्तरं पुनरपि संस्कृतकलेजाख्यमहाविद्यालयतो जानकीनाथेन प्रेसिडेन्सीकलेजसंज्ञितप्रधानसारस्वतप्रतिष्ठानाद् रामेन्द्रसुन्दरेण च तात्कालिक्यामेफ्-ए-नामकपरीक्षायां सममुपस्थितेन प्रथमं द्वितीयञ्च स्थानं यथाक्रमं समधिगतम्। १८०८

शकातीताब्दे पुनरप्युभौ तौ बी. ए. परीक्षां समुत्तेरतुः—तत्र रामेन्द्रसुन्दरेण विज्ञान-विषये अनासंसूचितकृतिनैपुण्यमाविष्कृतम्, जानकीनाथेन च आंग्लसाहित्यसमेत-संस्कृतवाङ्मये तादृशकृतित्वबलेन प्रथमविभागे प्रथमं स्थानमर्जितम्। दर्शनविषये चानेन प्रतिपत्तिप्रकर्षो दर्शित इत्यधिकम्। संवत्सरापगमे पुनरांग्लभाषायां चरमा परीक्षा स्वीकार्येति विभाव्य जानकीनाथेन प्रयत्नः समास्थितः, परन्तु कस्यचन विशिष्टस्य प्रतियोगिनः पराभवार्थं विजिगीषावशात् सपदि तद्विषयं विहाय संस्कृतवाङ्मये एम ए-समाख्यपरीक्षायां राजकीयसंस्कृतविद्यालयादाविर्भूय यथापूर्वं मुख्यं पदमधिचक्रे। १८१० शकाब्दे रामेन्द्रसुन्दरेण प्रेमचाँदरायचाँदेतिशीर्षण्योपाधिरधिगतः—जानकी-नाथेन च वर्षत्रयानन्तरम्। परन्तु मनीषिप्रवरौ हीरेन्द्रनाथदत्तो बहरमपुरकलेजाख्य-महाविद्यालये भविष्योऽध्यक्ष हुइलरमहोदयश्च तस्य प्रतिस्पर्धिनावास्तामिति समधि-कोऽस्य सम्मानोऽवर्तत। १८१६ शकसंवत्सरे व्यवहारशास्त्रविषयिण्यां परीक्षायामपि स्वकीयं वैदुष्यं प्रादुष्कृत्य जानकीनाथेन यथापूर्वं प्रथमं स्थानम् अध्यारूढम्। विद्यार्थि-दशायामिव विद्यावितरणसमयेऽपि समस्मेव तेनासामान्यता प्रकटिता। चरमपरीक्षा-समापनानन्तरमनेन कियन्तंचन कालमुत्तरपाडा महाविद्यालये कृतमांग्लसाहित्याध्यापनम्। १८१० शकातीताब्दे बहरमपुरविद्यालये सर्वोपाधिप्रापकशिक्षाप्रतिष्ठानमर्यादायामुन्नीते सति, वर्षद्वयं यावत्तत्र जानकीनाथेनांग्लभाषायां सुरभारत्याश्च पाठनमकारि। अत्रावसरे विपश्चितोऽमुष्य रिपनकलेजनाम्ना विद्यानिकेतनेन साकमादेहावसानं संग्रथितोऽभूत् सम्बन्धः। प्रेसिडेन्सी इनस्टिटयुशन इत्यस्य तदानीमासीदभिधा। एफ्. ए-मानपर्यन्ता चाध्यापना प्रचलति स्म। शकनरपतेः १८०७ वर्षे दिगन्तविश्रान्तयशसा देश-नायकेन सुरेन्द्रनाथवन्द्योपाध्यायेन स्वयमस्य गृहीते परिचालने बी. ए., बी. एल-परीक्षा-मान-पर्यन्तमत्राध्यापनसरणिर्विस्तृतिमाप। ततो वर्षपञ्चकान्ते विज्ञानविषये रामेन्द्रसुन्दरः सप्तमे वर्षे चांग्लसाहित्ये . जानकीनाथोऽध्यापकपदम् अङ्गीकृत्य विद्यायतनस्यास्य समधिकं पुपुषतुर्गौरवभरम्। १८१२ शकातीताब्दे कतिपयमासान् यावद् भट्टाचार्यप्रवरेण कृष्णनाथकलेजाध्यक्ष्यं निर्वाहितम्। ततः परं यावदायुषमनयो रिपनकलेजविद्यामन्दिरेणाविच्छेदेनावर्त्तत संयोगः। जानकीनाथेन स्वल्पकालं यावत् परमोच्चन्यायाधिकरणे अध्यापनाकार्याविरोधेन व्यवहाराजीवताप्यवलम्बितेत्यवगम्यते। रिपनकलेजप्रतिष्ठानस्य यदा तेन कलाविभागे प्रक्रान्तमध्यापनं विश्रुतयशसो विद्याव्रतिशिरोमणयः कृष्णकमलभट्टाचार्यास्तदा तस्याध्यक्षपदमलञ्चक्रुः। विज्ञानविभागे च व्यराजत तस्य सहकर्मी रामेन्द्रसुन्दरः। १८२४ शकाब्दे कृष्णकमलभट्टाचार्ये गृहीतेऽवसरे कलाविभागस्याध्यक्षता तेनैव

विद्वद्वरेण्येन स्वीकृता। जानकीनाथेन यथापूर्वमांग्लसाहित्याध्यापकत्वं निर्वर्त्तयता व्यवहारविद्याविभागस्याप्यध्यक्षपदमधिरूढम्। १८४१ शकातीताब्दे लोकान्तरं प्रस्थिते रामेन्द्रसुन्दरे, शून्यं कलाविभागाध्यक्षपदं जानकीनाथमेवाशिश्रिये, व्यवहार-विद्याविभागे चाध्यापकता तेनावलम्बिता। परन्तु सुचिरं सहचारिणोरेतयोरयं विश्लेषः स्वल्पकालमेवावर्तत। सार्धद्विवर्षानन्तरं १८४३ शकाब्दे पौषे मासि विद्वत्समाजललामभूतेनानेनापि जीवितावधिरुपगतः। भास्कराविव शुभग्रहौ कल्याणकिरण-वर्षेण द्वावेतौ पुरुषप्रवरौ स्वसेवितस्य विद्याप्रतिष्ठानस्य सर्वथा प्रसारोन्नयने यावज्जीवं विदधतुरिति सुविदितं सारस्वतरसिकानाम्। सब्रह्मचारिणोः समं शिक्षाव्रतिनोश्च बहुधैवमन्योन्यसम्पृक्तयोस्तयो रामजानकीवन्नामनी संयोज्य कीर्त्त्येते। सत्यपि समन्ताद् व्यापिनि यशःप्रकर्षे, जानकीनाथस्य कृतिकलापो रामेन्द्रसुन्दरस्येव सर्वथा सुपरिस्फुटं जनमानसगोचरो नाभूत्। अत्र हेतुस्तस्य निसर्गसिद्धात्मसंवृतिरध्यापनकर्मणि चानन्यो व्यवसायः।

न गृहमेधिसुखेषु पुनरविमिश्रासीद् विद्वन्मुख्यस्य सुभगता। परिग्रहद्वितय-मनेन स्वीकृतम्। प्रथमसहधर्मिण्यां मृणालिनीदेव्यां प्ररोहद्वयमस्य जज्ञे। तत्र हरिभाविनीनामिकायाः सुताया जनाइग्रामवासिना कृतविद्येन व्यवहाराजीवेन सुरेन्द्रनाथ-मुखोपाध्यायेन परिणीतायास्तरुणे वयस्येव पतिवियोगोऽभूत्। अपत्यान्तरं तीर्थकुमारा-भिधः सुतो बाल्यादेव पितुर्बुद्धिप्रतिभालक्षणलक्षितोऽपि चतुर्दशवत्सरम् उपनीतो-ऽकाले कालकवले निलिल्ये। शोकविहतेन जानकीनाथेन तदवधि न्यायाधिकरणे व्यवहाराजीववृत्तिः परिहृता। दारपरिग्रहे पुनर्विहिते पत्न्यां राजलक्ष्म्यां सन्ततिचतुष्टय-मुदभूत्। तेषु दुहितैका शैशवे प्रमीता। अपरा परमाभिजनवति काशीस्थसेण्ट्राल-हिन्दूस्कूल विद्यायतनस्य शिक्षके समर्पिता जामातर्युमानाथवन्द्योपाध्याये। अन्यो जामाताभवत् प्रभासचन्द्रगङ्गोपाध्यायो रिपनकलेजप्रतिष्ठाने गणिताध्यापकः। तत्रैव लब्धविद्यः कमलकृष्णाख्यः पुत्रोऽपि द्वितीयपत्न्यामस्यां समजनि। भर्त्तरि जीवत्येव पुनः सा पतिप्राणा लोकान्तरमगमत्।

सत्यपि वाणीवरपुत्रस्यास्य लेखनीप्रसरस्य कौशलेऽसाधारणे, परमनाग्रहो व्यलक्ष्यत ग्रन्थरचनासु। सुहृज्जनास्तावद् बहुश एनं सन्दर्भादिकं विरचय्य वङ्गवाण्याः परिपोषाय प्रयत्नार्थं प्राणोदयन्। तत्रोत्तरमनेनादीयत सततमेव निर्विशेषं — किमस्ति खलु लेख्यमर्वाचीनैः? पूर्वसूरिभिरेव सर्वं ग्रथितमास्ते विश्रुतेषु निबन्धेषु। आकरग्रन्थेषु कृतप्रवेशेन जिज्ञासुना तथ्यजातं संग्रहीतुं शक्यते। तथापि पुस्तक-प्रकाशकानां निर्बन्धातिशयात् प्रतिपत्तिसौकर्यार्थञ्च विद्यार्थिनां तेन दशकुमारचरितस्य,

रघुवंशस्य, भट्टिकाव्यस्य च परीक्षार्थं निरूपितानां पाठ्यांशानामांग्लभाषायां वङ्गवाण्याश्चानुवादसमेतं संस्करणं तथा विश्वविद्यालयसङ्कलितस्य प्रवेशिकापाठ्यनिबन्धस्य आंग्लभाषयानुवादः प्रणिन्ये। ग्रन्थेष्वेतेषु सुरभारत्याम् आंग्लभाषायाञ्च यद् वैदग्ध्यं लेखकौशलं च प्रकटितं विपश्चिद्वरेण जानकीनाथेन पर्यालोचनसमर्थैरेव तत् सम्यगुपलब्धुं शक्यते। महदिदं विषादस्थानमस्माकं यदशुद्धिमद्बहुजल्पितप्लाविते‌ऽस्मिन् समये सुदुर्लभानि जातानि तानि पुस्तकानि।

कृत्स्नो हि लोको भवति विषयो बुद्धिमतामिति प्रसिद्धं वचः। अपि च मनस्विनां चेतो यस्मिन्नेव विषये संसज्जते तत्रैव विलसति तेषां बुद्धिप्राखर्यम्। भूसम्पदधिकृतेषु व्यापारेषु परं दाक्ष्यं जानकीनाथस्य व्यलक्ष्यत। शिक्षकपदमधिकुर्वतामुना प्रभूतमुपार्जितं वित्तम्, सञ्चितेन च विभवेन सुन्दरवनप्रदेशे तथान्यत्रापि विस्तृतोऽधिकृतो भूभागः। सर्वतः प्रसर्पिण्या अस्य शेमुष्या गुणवत्तायाश्च विविधेषु विषयेषु श्रूयन्ते विचित्राः खलु वार्त्ताः। सुहृद्गोष्ठीषु प्रचरन्ति च तदधिकृतानि नानाख्यानकानि। रामायणकथा तद्विषयकं गानञ्च कदाचिदनुष्ठीयते स्म तदध्युषितपल्लीषु। मण्डपं प्रविश्य श्रुत्वा च सर्वं कियन्तंचन कालं जानकीनाथेन परमपरितोषोऽभिव्यक्तः, कथकमपसार्य च व्याख्यासनं स्वयमधिकृतम्। अटति चैवं जनवादः—तस्य पाठपाटवं व्याख्यानमाधुर्यञ्च सामाजिकानां तथैव मनो जहार यथा निशावसानपर्यन्तं सर्वे स्वस्थानादविचलिता सुप्रशान्तःकरणाश्च शुश्रूषुरपगतप्रलापाः। परन्तु भट्टाचार्यप्रवरस्य सङ्गीतप्रियता तौर्यत्रिकानुशीलनं वा नासीत् कस्यापि विदितचरम्॥ सुगृहीतनामधेये आचार्यवर्ये रामेन्द्रसुन्दरे कथाशेषतां गते महती शोकसभा समपद्यत युनिभार्सिटिइन्स्टिट्युटभवनस्य सुविशाले प्रकोष्ठे। तत्र होराकालं व्याप्य जानकीनाथेन सुललितवङ्गभाषया यद् भाषणमुदीरितं तेन सर्वेषामेव श्रोतृणां चेतांसि सविस्मयेन चमत्कृतिभरेणापूर्यन्त। जनसंमर्दबहुलासु संसत्सु वाक्पाटवप्रकाशनन्तु न तस्य प्रकृत्यनुगतमासीदिति सुपरिज्ञातम्। नैसर्गिकं वाग्वैभवं पुनः सर्वत्रैव तस्य धियो लोकोत्तरतां व्यनक्ति स्म। कदाचिदवकाशसमये वैद्यनाथधामयात्रिणा तेन बाष्पयानकक्षां प्रविश्य न स्थानं तिलधारणमिति प्रत्यक्षीकृतम्। उपवेशनन्तु दूरत आस्तां दण्डवदवस्थितिरपि कृच्छ्रकरीति प्रतीत्य जानकीनाथेनालापः समारब्धो विषयाद्विषयान्तरम् आख्यानादाख्यानान्तरमवतार्य। सहयात्रिणोऽनवच्छिन्नवाग्वैभवस्रोतसि प्लवमाना रसवैचित्र्यविमुग्धाः संस्तब्धा विस्मापिताश्च शारीरप्रयोजनानि सुप्त्यादीन्यपि विसस्मरुः, परेद्यव्युषसि कथमवतरणस्थानमापतितन्तदपि न बुबुधिरे। अपरञ्च श्रूयते यदायुर्वेदनिष्णातानामिव तस्यासीद्विस्मयकरं नाडीज्ञानम्। संशयितजीविते सति रोगिणि कस्मिंश्चित् प्रतिवेशिन-

स्तमामन्त्र्य नाडीपरीक्षामकारयन्। तस्य निदानगणनमपि सिद्धार्थमेवाव्यतिक्रमेण प्रमाणितमभूत्। निजपरिजनेष्वपि तादृशं परीक्षणमन्तरान्तरा तेन क्रियते स्म। प्राचीनायाः परिचारिकायाः सारदाया एवंविधया नाडीपरीक्षया षन्मासाभ्यन्तरं सा प्राणैर्वियुज्येतेति भविष्योक्तिः कृता। न तदानीं तस्याः कापि पीडा परिदृष्टा। यथाकालन्तु प्राणान्तिकमेतन्निगदितमवितथं समपद्यत। अक्षदेवनादि-व्यसनेष्वपि परमं तस्य पाटवम् आसीत्तदभिज्ञानां विस्मयावहम्। अवसरदिवसेषु मत्स्य-वेधार्थं नगरोपकण्ठे दूरावस्थितेषु वोपवनेषु पुष्करिणीतडागादिषु तस्याभियानं सुहृज्जनैः साकं चित्तविनोदायाकल्पत। बहरमपुरावस्थितेन तेन द्यूतक्रीडायां वर्धमानवास्तव्यं कश्चित् प्रतिपक्षं भूस्वामिनं पराजित्य रूप्यकाणामष्टशतानि पणो लब्ध इति लोकवार्तावगम्यते।

सर्वोपरि विलसति स्म तस्य प्रतिभास्फुरणम् अध्यापकस्य सिद्धासनाधिष्ठितस्य। आंग्लसाहित्यगौरवनिधानस्य नाटककृतां शीर्षण्यस्य शेक्सपीयारस्य, राष्ट्रतत्त्वविदा-मग्रणीभूतस्य बार्कमहोदयस्य च रसविवृतौ मर्मार्थावगाहे च न केवलमयं स्वयमेव चमत्कृतिविवशो बभूव विद्यार्थिनोऽप्युन्मादयंस्तद्भावभावितानकरोत्। तत्त्वमुद्रावत् तर्जनीयुताङ्गुष्ठेन धृतं नस्यपुटं विस्मृत्य पाठनप्रकोष्ठे प्रवेशक्षणादारभ्य छात्राणा-मुपस्थितिसङ्केतविलेखनपर्यन्तमविरतधारेण साहित्यव्याख्यानेन सार्द्धं नवरसरुचिरस्य साहित्यप्रवचनस्य यः प्रवाहस्तेन व्यतन्यत वङ्गेषु युगत्रितयायतसमयं यावत् तन्नु निपीय तत्रावगाह्य च विमुग्धा धन्याश्च बभूवुरन्तेवासिनः। कलिकाताविश्वविद्यालयौ-न्नयनसंस्काराधिकृताः श्वेतद्वीपिनोऽपि सदस्या विस्मयविस्फारितनेत्रास्तदध्यापनविभूतिं संलक्ष्य श्रद्धाप्लुता अभवन् प्रशंसोच्छ्वसितमुखराश्च। सुरभारत्या सह विजातीयवाण्या सममेवापूर्वमनुपमञ्च तदनुशीलनकृतित्वं विद्वत्समाजस्य स्मृतिपथमधिरुह्य चिरं स्थास्यतीति ध्रुवम्। रिपनकलेजसंस्थायाः प्रतिष्ठातृषु च त्रिपश्चिद्वरेण्यस्य जीवितेति-वृत्तं श्रद्धया कृतज्ञतया च सह सदैव स्मर्तव्यं कीर्तनीयं चेति नोल्लेखमपेक्षते।

---

## मूलोच्छेदि पाण्डित्यम्

The Sunday Amrita Bazar Patrika (Feb. 12, 1961, p. v. col. 2) लिखति—"Amriter Upakshyan" इति। एतत्प्रथमतः क्षुद्रैरक्षरै-र्मुद्रितम्, ततो बृहद्भिरक्षरैः। Nalinakhya Sanyal, Kamakshya Prasad प्रभृतीनि स्मर्यन्तां वाचकमहाभागैः।

# ऋग्वेदभाष्यविमर्शः

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

कविमग्निमुप स्तुहि सत्यधर्माणमध्वरे ।
देवममीवचातनम् ॥१।१२।७

इत्यृचो मुद्रिते सायणभाष्ये दृश्यते—सत्यं धर्मो यस्येति सत्यधर्मा । धर्मादनिच् केवलात् [५।४।१२४] इत्यनिच् समासान्तः। अन्तःपदेन तस्य समासत्वाभिधानात् बहुव्रीहौ पूर्वपदप्रकृतिस्वरे शेषनिघातेनानुदात्तत्वम् । इति । अत्र Max Müller ग्रन्थे पुण्यरत्नपुस्तके च पाठान्तरं नोपलभ्यते । अत एव ग्रन्थान्तरे धृतः पाठः स्वकपोलकल्पितोऽसंलग्नश्चेति प्रतिभाति । तत्र हि दृश्यते—अत्र केवलात्पदेन तस्य समासेऽभिधानाद् [?] समासे बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वे शेषनिघातेनानुदात्तत्वमिति ।

अत्रान्तःपदेनेत्यत्र विसर्जनीयं विसृज्यान्तपदेनेति पाठ्यम् । तस्य चार्थः समासान्ताः [ ५।४।६८ ] इति सूत्रेऽन्तपदोपादानेनेति । तथाचोक्तं महाभाष्ये ।

"अन्तग्रहणं किमर्थम् ?

अन्तो यथा स्यात् ।

नैतदस्ति प्रयोजनम् । [ ३।१।२ ] प्रत्ययपरत्वेनाप्येतत् सिद्धम् ।

इदं तर्हि प्रयोजनम्—( वा ) तद्ग्रहणेन ग्रहणम् ॥ तद्ग्रहणेन ग्रहणं यथा स्यात् ।

कानि पुनस्तद्ग्रहणस्य प्रयोजनानि ?

( वा ) प्रयोजनमव्ययीभावद्विगुद्वन्द्वतत्पुरुषबहुव्रीहिसंज्ञाः । अव्ययीभावः प्रयोजनम् । प्रतिराजम् उपराजम् । अव्ययीभावश्च [ २।४।१८ ] समासो नपुंसकलिङ्गो भवतीति नपुंसकलिङ्गता यथा स्यात् ।

नैतदस्ति प्रयोजनम् । लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य ।

इदं तर्हि प्रयोजनं नाव्ययीभावादतोऽम् त्वपञ्चम्याः [ २।४।८३ ] इत्येष विधिर्यथा स्यात् । अव्ययीभाव ।

द्विगु । द्विगुसंज्ञा च प्रयोजनम् । पञ्चगवम् । दशगवम् । [ ५।४।९२ ] । द्विगुश्च समासो नपुंसकलिङ्गो भवतीति [ २।४।१७ ] नपुंसकलिङ्गता यथा स्यात् ।

नैतदस्ति प्रयोजनम् । लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य ।

इदं तर्हि प्रयोजनं द्विपुरी त्रिपुरी [ ५।४।७४ ] । द्विगोरकारान्तादीकारो यथा स्यात् [४।१।२१] । एतदपि नास्ति प्रयोजनम् । पुरशब्दोऽयमकारान्तस्तेन समासो भविष्यति । आतश्चाकारान्तः । एवं ह्याह—"क्षेमे सुभिक्षे कृतसञ्चयानि पुराणि राज्ञां विनयन्ति कोपम्" इति ।

इदं तर्हि प्रयोजनम्—द्विधुरी त्रिधुरी [५।४।७४], द्विगोरकारान्तात् [४।१।२१] इति ङीब् यथा स्यात्। द्विगु।

द्वन्द्व। द्वन्द्वसंज्ञा च प्रयोजनम्। वाक्त्वचम्। स्रक्त्वचम्। [५।४।१०६]। द्वन्द्वश्च [२।४।१७] समासो नपुंसकलिङ्गो भवतीति नपुंसकलिङ्गता यथा स्यात्।

नैतदस्ति प्रयोजनम्। लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य।

इदं तर्हि प्रयोजनम्। कोशश्च निषच्च कोशनिषदं कोशनिषदिनी। द्वन्द्वोपताप-गर्ह्यात्प्राणिस्थादिनिः [५।२।१२८] इतीनिर्यथा स्यात्। द्वन्द्व।

तत्पुरुष। तत्पुरुषसंज्ञा च प्रयोजनम्। परमधुरा उत्तमधुरा। परवल्लिङ्गं द्वन्द्व-तत्पुरुषयोः [२।४।२६] इति परवल्लिङ्गता यथा स्यात्।

नैतदस्ति प्रयोजनम्। उत्तरपदार्थप्रधानस्तत्पुरुषः।

इदं तर्हि प्रयोजनम्। अर्धधुरा [२।२।२]।

एतदपि नास्ति प्रयोजनम्—लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य।

इदं तर्हि निर्धुरः। अव्ययं तत्पुरुषे प्रकृतिस्वरं भवतीत्येष स्वरो यथा स्यात् [६।२।२]। तत्पुरुष।

बहुव्रीहि। बहुव्रीहिसंज्ञा च प्रयोजनम्। उच्चधुरः। नीचधुरः। बहुव्रीहौ प्रकृत्या पूर्वपदं भवतीत्येष स्वरो यथा स्यात् [६।२।१]।" इति।

यत्र समासान्ते स्वरबोधकः कोऽप्यनुबन्धो नासक्तस्तत्रैवेदमिति बोध्यम्। प्रकृते समासान्तस्यानिचश्चित्त्वात् समस्तस्य पदस्यान्तोदात्तत्वं भवत्येव। अत एवोक्तं न्यासकृता—अनिचश्चित्करणं पूर्वपदप्रकृतिस्वरं बाधित्वान्तोदात्तत्वमेव यथा स्यात्। इति।

अत एव धर्मन्नित्यत्रान्तः शब्दोऽत्रोत्तरपदमिति सायणाचार्येणोत्तरत्र व्याख्यातम्। तानि धर्माणि प्रथमान्यासन्नित्यादयो मन्त्रवर्णास्तथाविधशब्दस्य सद्भावे मानम्।

---

## सम्यक्

सर्वात्मनासौ प्रायतत, परं सुन्दर्या मानसे रेखापातं कर्तुं न प्राभवत्।

तेन नीचस्वरेणोक्तम्, अहो मृणालकोमलौ बाहू, बिम्बे ओष्ठौ, नीलोत्पले च नेत्रे। कुतः समासादिते भवत्येमे नेत्रे ?

बालिकया धीरमुक्तम्, ते खलु मम शिरसा सार्धं समागते इति।

---

# मूषिक-मार्जार-कथा

[ श्रीफटिकलालदासः ]

कश्चिद्बिडालो यमदूतकल्पो यदोपतस्थे गृहरक्षणाय ।
हाहारवस्तत्र समुत्थितोऽभूद् दलस्य मध्ये गृहमूषकाणाम् ॥१॥
गतागतं तत्र बभूव तेषां विपत्तिपूर्णं गृहकक्षमध्ये ।
तस्थुश्च सर्वे स्वबिलेषु गुप्ता दिवा च नक्तं च कृतोपवासाः ॥२॥
एवं गतेषु त्रिषु वासरेषु करालकालागतकृच्छ्रमध्ये ।
तेषां स शत्रुर्दयितां विचेतुं ग्रामं प्रतस्थे दिवसावसाने ॥३॥
भयस्य हेतौ गत एव दूरे निष्क्रम्य गर्तान्नितुश्च मूषाः ।
प्रागेव भुक्त्वोदरपूरमन्नं चक्रुः सभां ते महतीं दलस्य ॥४॥
उद्दालधिर्नाम वयःप्रवीणः सभापतिस्तत्र बभूव मूषः ।
आहूय सर्वान् निजगाद स प्राग्, "जानीथ नूनं विषयं सभायाः ॥५॥
उद्वेजितानां बृहदोतुनात्र प्रयाति कालः सभयं सदा नः ।
आहारनिद्रासुखशान्तयोऽपि हताश्च तेनापसदेन सर्वाः ॥६॥
विचेतुमापत्प्रतिकारमेकं समानदुःखा मिलिता वयं स्मः ।
सुसंहतानां सुधियां हि मूर्ध्नि प्रज्ञावतीर्णा भवतीति रीतिः ॥७॥
विमृश्य तस्मात्सदुपाय एको युष्माभिरस्मत्पुरतो निवेद्यः ।"
इत्येवमुक्त्वा विरते हि तस्मिन् विचारणास्तत्र समारभन्त ॥८॥
अन्योऽन्यवादप्रतिवादशब्दैः सभापि साभून्मुखरा समन्तात् ।
दंष्ट्रामयूखैस्तुहिनांशुशुभ्रं विद्रावितं तत्समितेस्तमश्च ॥९॥
तर्कानुतर्कैः क्षतविक्षतानां यदैकमत्यं समभून्न तेषाम् ।
मूषेण यूना तनुदन्तनाम्ना प्रोक्तं स्थितेनाथ पुरः सभायाः ॥१०॥
"गले हि घण्टा यदि बध्यतेऽस्य तच्छब्दमाकर्ण्य वयं सुदूरात् ।
प्रागेव तस्यागमनात्प्रधाव्य स्वं स्वं गृहान्तर्बिलमाश्रयेम ॥"११॥
आबालवृद्धं समितिस्थसभ्यास्तं साधुवादैः प्रशशंसुरुच्चैः ।
विहस्य चख्यौ स सभापतिस्तान्, "घण्टां तु कण्ठे वद कोऽस्य बद्धा ॥"१२॥
सभापतेस्तद्वचनेन सर्वे वितस्थिरे तत्र शिरोऽवनम्य ।
वृद्धः प्रधानोऽथ तदेव दृष्ट्वा विघोषयामास सभासमाप्तिम् ॥१३॥
परोपदेशे सुलभं न केन पाण्डित्यमस्मिन् भुवने नरेण ।
विघ्नागमः स्याद् यदि कार्यकाले न दृश्यते कोऽपि जनोऽस्य हर्ता ॥१४॥

---

# ब्रह्मसूत्रमितभाष्यम्

[ श्रीचारुकृष्ण-दर्शनाचार्यः ]

"सर्वेषां तु स नामानि कर्माणि च पृथक् पृथक्।
वेदशब्देभ्य एवादौ पृथक्संस्थाश्च निर्ममे ॥" इति।

प्रलयश्च विष्णुपुराणे चतुर्द्धा दर्शितो नित्यो नैमित्तिकः प्राकृत आत्यन्तिकश्च। यथा—

"ब्राह्मो नैमित्तिकस्तत्र यच्छेते जगतः पतिः।
प्रयाति प्राकृते चैव ब्रह्माण्डं प्रकृतौ लयम् ॥
ज्ञानादात्यन्तिकः प्रोक्तो योगिनः परमात्मनि।
नित्यः सदैव जातानां यो विनाशो दिवानिशम् ॥" [विष्णुपुराण १।७।३९-४०]

इति। तत्र नैमित्तिकः पौराणिकाणाम्, प्राकृतः सांख्यानां महदादीनां सप्तानां प्रकृतौ लयरूपत्वात् तस्य। "तदा प्रकृतयः सप्त कल्पन्ते प्रलयाय ही"त्येकवाक्यत्वात्, "मूल-प्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त" इति तदुक्तेः। नासौ वेदान्तसम्मतः, वेदान्ते ब्रह्मण एव प्रकृतित्वात् "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधादि"तिसूत्रात् [१।४।२३] प्रधान-महदादेरसिद्धेश्च, "ईक्षतेर्नाशब्दम्" [१।१।५] "इतरेषां चानुपलब्धे"रिति [२।१।२] न्यायाभ्याम्, गुणाश्च सत्त्वादयो निराकृताः "ज्योतिरुपक्रमा तु। तथाह्यधीयत एक" [१।४।९] इति सूत्रेण, नित्यश्च प्रलयो जन्यानां देहादीनां सार्वदिक एव क्षयो न सुषुप्तिः प्रागुक्तवचनात्, तस्याः प्रलयत्वे मानाभावात्। न च "यदा सुप्तः स्वप्नं न कश्चन पश्यति" [ कौषीतकी ३।३ ] इत्यादिः श्रुतिर्मानमिति वाच्यं तदानीमिन्द्रियादिशक्तीनामेवोपरमो दर्शितः श्रुतिभिर्नेन्द्रियाणाम्। तथाहि उपसंहृतसर्वेन्द्रियशक्तिर्जीव उदानसा-चिव्यान्नाडीभिर्गत्वा पुरीतत्स्थिते ब्रह्मणि सदाख्य एकीभवन्नास्ते, "सता सोम्य तदा सम्पन्नो भवति" [छान्दोग्य ६।८।१] "सति सम्पद्य न विदुः सति सम्पद्यामहे [छा० ६।९।२] "इष्टफलमेवोदानः स एनं यजमानमहरहर्ब्रह्म गमयति" [प्रश्न ४।४] "ताभिः प्रत्यवसृप्य पुरीतति शेते" [बृह २।१।१९] इति श्रुतिभ्यः। जागरिते चेन्द्रियशक्तीनां यथास्थानगमनं "सर्वे प्राणा यथायतनं विप्रतिष्ठन्ते" [कौषीतकी ३।३] इति श्रुतेः। तदा च प्राणक्रियाणां नोपरम उच्छ्वासप्रश्वासयोरुपलम्भात्, परैरप्येष इष्यते, एतेन तदाश्रयत्वाद् देहस्यापि स्थितिः प्राप्ता। तदानीमिन्द्रियाणां तदनुग्राहकदेवतानां विषयाणां च तच्छक्तीनामेव प्राण-तुल्यानामप्ययात् तेषामप्यप्ययः सामान्यत एवोक्तो न तु भाविकः। अतो जागरे "यथायतनं विप्रतिष्ठन्ते" इत्यायतनानां स्थितिस्तत्र प्रस्थानं च श्रूयते। आयतनं स्थानम्। "सर्वे प्राणा विप्रतिष्ठन्ते" इत्युक्तं न तु जायन्त इति। नचात्राविद्याया नामापि, सुषुप्ते-र्नित्यप्रलयत्वे नित्यसृष्टिमप्यत्रदिष्यत्। न चैतत्। "स यथा सौम्य वयांसि वासो वृक्षं

संप्रतिष्ठन्ते एवं ह वै तत् सर्वं पर आत्मनि संप्रतिष्ठते" [ प्रश्न ४।७ ] इति श्रुतौ पक्षिणामावासवृक्षगमनदृष्टान्तेनेन्द्रियादिशक्तीनां गमनमेवोक्तं न तु लयस्तेषां, न हि पक्षिण आवासवृक्षेषु लीयन्ते। "य एष विज्ञानमयः पुरुषस्तदेषां प्राणानां विज्ञानेन विज्ञानमादाय" [ २।१।१७ ] इति श्रुतिश्च न प्राणानां ग्रहणमाह किन्तु तेषां विज्ञानस्यैव, विज्ञानं च ग्रहणशक्तिः। एतद्व्याख्यायां भामतीकारोऽप्याह—प्राणानामिन्द्रियाणां विज्ञानेन बुद्ध्या विज्ञानं ग्रहणशक्तिमादायेति। आनन्दगिरिरप्येवम्। इन्द्रियाणां ग्रहणे प्राणानादायेत्येवावक्ष्यत्। विज्ञानमयो विज्ञानस्वरूपः। चिन्मयवातमयादिवत् स्वरूपे मयट्। ब्रह्म च विज्ञानस्वरूपमुक्तं श्रुतौ "विज्ञानमानन्दं ब्रह्म" [बृहदारण्यक ३।९।२८] "स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु" [ बृहदारण्यक ४।४।२२ ] इति। अग्निस्फुलिङ्गवत् तदंशत्वाज्जीवस्यापि विज्ञानस्वरूपत्वं बोध्यम्। तथाच श्रुतिः—

"यथा सुदीप्तात्पावकाद् विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः
तथाऽक्षराद् विविधाः सोम्य भावाः प्रजायन्ते तत्रैवापियन्ति॥"

[ मुण्डक २।१ ], न्यायश्च "अंशो नानाव्यपदेशात्" [ब्रह्मसूत्र २।३।४२] इति। ननु बुद्ध्यवच्छिन्नत्वाद् विज्ञानमयत्वम् एतस्य, योगोच्छिष्टत्वात्। तथाच योगप्रकरणे याज्ञवल्क्यः—

"आकाशमेकं हि यथा घटादिषु पृथग् भवेत्।
तथात्मैको ह्यनेकश्च जलाधारेष्विवांशुमान्॥" इति।

नचाग्निस्फुलिङ्गाः केनचिदवच्छिन्नाः प्रतिबिम्बा वा कस्यचित्। नातो बुद्धिमयत्वं जीवस्य कुत्राप्युक्तं श्रुताविति ज्ञेयम्। विस्तरो वेदान्तविमर्शे द्रष्टव्यः। एवञ्च सुषुप्तौ नेन्द्रियाणां स्वरूपतोऽप्ययः किन्तु तच्छक्तीनामेवेति ज्ञेयम्। ततश्चेन्द्रियादिशक्तीरेवादाय जीवः पुरीतति ब्रह्मणि शेते सुषुप्तौ। न चात्रापीतिशब्दः प्रलयपरः, किन्तु प्राप्तिपर एव, "एनं वाक् सर्वैर्नामभिः सहाप्येति" [कौषीतकी ३।३ ] इति कर्मनिर्देशात्, प्रलयस्याकर्मकत्वात्। अतः "तथाक्षरात् सोम्य भावाः प्रजायन्ते तत्र चैवापियन्ति" [ मुण्डक २।१ ] इति श्रुतौ तत्रेति सप्तम्यन्तनिर्देशः। अपीतिपदस्य प्राप्तिपरत्वमन्यत्रापि दृश्यते— "सता सोम्य तदा सम्पन्नो भवति स्वमपीतो भवति" [ छान्दोग्य ६।८।१ ] "ब्रह्मैव सन् ब्रह्माप्येति" [ बृहदारण्यक ४।४।६ ]।

"तेन धीरा अपियन्ति ब्रह्मविदः स्वर्गं लोकमित ऊर्ध्वं विमुक्ताः।"

[ बृहदारण्यक ४।४।८ ] इत्यादिषु प्राप्तिपरैवापीतिः सकर्मकत्वात्। तत्र चैवापियन्तीतिश्रुतौ "अपीतौ तद्वत्प्रसङ्गादसमञ्जसम्" [ ब्रह्मसूत्र २।१।८ ] इति सूत्रे चापीतिः प्रलयः। तस्मात् प्रकृते सकर्मकनिर्देशादपीतिः प्राप्तिरेव न प्रलय इति वागादिशक्तीनामेव जीवप्राप्तिर्न वागादीनामिति स्थितम्। अतः शास्त्रेऽस्मिन् सुषुप्तेः प्रलयत्वं कुत्रापि

नोक्तम्। विष्णुपुराणे च जन्यानां सार्वदिकक्षयस्यैव नित्यप्रलयत्वं स्पष्टमेवोक्तमित्यलं प्रपञ्चेनेति। विस्तरस्तु प्रश्नोपनिषद्भाष्येऽनुसन्धेयः।

आत्यन्तिकश्च प्रलयस्तत्त्वज्ञानाज्जीवस्यैव ब्रह्मप्राप्तिर्न तु विश्वप्रलयाद् घटाकाश-महाकाशयोरिव जीवब्रह्मैक्यम्। "विष्ण्वाख्ये निर्मले ब्रह्मण्यवाप नृपतिर्लयम्" [ विष्णुपुराण ६।७।१०२ ] इति षष्ठांशपद्ये च नृपतेरेव ब्रह्मणि लय उक्तो न जगति इति भाष्यम् ॥३०॥

---

## प्रतिभा

गृहिण्याः सखी लीलावती तां द्रष्टुमागता। गृहस्वामिनस्तस्यां द्वेष एवासीत्। यदा गृहपत्नी समागतया सख्या भाषते स्म तदासौ प्रकोष्ठान्तरं प्रविष्टः। अथ व्यतीतायां होरायां शब्दादिकं किमप्यश्रुत्वा सोऽपृच्छत्, कच्चित्प्रस्थिता सा राक्षसीति। पत्न्या सपद्येवोक्तम्, अथ किम्। भूयान् कालस्तस्या गतायाः, इदानीं लीलावती मत्सविधे वर्तते इति।

---

## द्विः

क्रुद्धः कपिलमहोदयो व्यवहाराजीवस्य सदनं प्रविष्टः।

कपिलः। ( पत्रं प्रदर्श्य ) किमिदम्? द्विर्मन्त्रणं कृतमिति भवता पञ्चाशन्मुद्रा दातव्या इत्युच्यते। मया तु सकृदेव भवता मन्त्रितम्।

व्यवहाराजीवः। चतुर्थ्यां तिथावेव मन्त्रणमासीत्। दिनं तन्मेघाच्छन्नमेवासीदिति स्मर्यते वा भवता?

कपिलः। बाढं स्मर्यते। किं तावता?

व्यवहाराजीवः। भवान् मया सह संमन्त्र्य निष्क्रम्य कियतश्चित्कालादनन्तरं मया छत्रमत्र रक्षितं वेत्युक्त्वा पुनः प्रविष्ट आसीत्। स्मर्यतां तावत्।

---

## परोपदेशे पाण्डित्यम्

अपि भवान् स एव ज्यौतिषिको यो होरातः पूर्वं सामाजिकेषु केन सूच्यादिकं वस्तु क्व रक्षितमित्युच्यते स्म?

स एवाहम्।

तर्हि किमिदानीमत्र करोति भवान्?

मम शिरस्त्राणमन्विष्यामि।

---

# प्रत्ययाद्यनुबन्धाः

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

अच् (कृत्)—एरच् [ ३।३।५६ ] नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः [३।१।१३४] हरतेरनुद्यमनेऽच् [३।२।६] इत्यादिभिः सूत्रैरच्प्रत्ययो विहितः। तत्र चकारः चितः [६।२।१६३] इत्यन्तोदात्तार्थः। परम् [ प्रत्ययः। परश्च। ] आद्युदात्तश्च [३।१।३] इति प्रत्ययस्वरेणैवान्तोदात्तत्वं सिध्यति। अत एव चकारो विशेषणार्थ इत्येरजिति सूत्रे जयादित्यः। विना हि* तेन थाथादिसूत्रे [ ६।२।१४४ ] अ प्रत्ययात् [ ३।३।१०२ ] इत्यप्रत्ययस्यापि ग्रहणं स्यादिति न्यासः।

अच् ( तद्धितः )—अर्श आदिभ्योऽच् [ ५।२।१७ ] इति सूत्रेण तद्धितोऽज् विहितः। अत्रापि चकारो विशेषणार्थः। प्रत्ययस्वरेणैवान्तोदात्तत्वे सिद्धे चकारोऽर्शोऽस्यास्तीति स्वरितो वानुदात्ते पदादौ [ ८।२।६ ] इति स्वरितबाधनार्थ इति न्यासः। इटोऽदित्यत्रेव [३।४।१०६] मुखसुखार्थस्तकारः। अर्श आदिभ्योऽः इति सूत्रमविस्पष्टं स्यादित्याचार्येणाच्प्रत्ययो विहित इत्यपि सम्भवति।

अच् ( समासान्तः )—अच् प्रत्यन्ववपूर्वात् सामलोम्नः [ ५।४।७५] अज् नासिकायाः संज्ञायां नसं चास्थूलात् [ ५।४।११८ ] इत्यादिभिः समासान्तोऽज् विहितः। अचश्चित्करणं बहुव्रीहिस्वरबाधनार्थमित्यज्नासिकायाः सूत्रे न्यासः। उत्सर्गतः समासान्तेष्वपि समासस्वर एव प्रवर्तते, यत्र पुनर्विशेष इष्यते तत्र समासान्तेषु यथायोग्योऽनुबन्ध आसज्यते। ऋक्पूरब्धूःपथामानक्षे [ ५।४।७४ ] इत्यनेनाकारमात्रः समासान्तो विहितः। तत्र तत्तत्समासस्वरो भवति, अच्टजादिषु चकारसन्निवेशात् समस्तपदानामन्तोदात्तत्वं भवति। अत एव समासान्ता इत्यत्र भाष्यकृतोक्तम्—इदं तर्हि निर्धुरः। अव्ययं तत्पुरुषे प्रकृतिस्वरं भवति [६।२।२] इत्येष स्वरो यथा स्यात्। इति।

अच् ( प्रत्याहारः )—अत्र चकारानुबन्धः प्रत्याहारार्थः।

चकारः सर्वत्र समुच्चयस्यान्ते सन्निवेश्यते, अत एवानुदात्तत्वसूचनाय चकारोऽनुबन्ध आसज्यते।

---

* मुद्रितग्रन्थे विनापि तेनेति पाठः स्वीकृतः स च व्यक्तमेव प्रामादिकः।

# PANINI AND WHITNEY

[*The Calcutta Review*, Oct. 1952.]

DR. KSHITISH CHANDRA CHATTERJI, M.A., D.LITT.

In the Introduction to his Sanskrit Grammar Whitney says :

"The attention of special students of the Hindu grammar (and the subject is so intricate and difficult that the number is exceedingly small of those who have mastered it sufficiently to have a competent opinion on such general matters) has been hitherto mainly directed toward determining what the Sanskrit according to Pāṇini really is, toward explaining the language from the grammar. And, naturally enough, in India, or wherever else the leading object is to learn to speak and write the language correctly—that is, as authorized by the grammarians—that is the proper course to pursue. This, however, is not the way really to understand the langnge. The time must soon come, or it has come already, when the endeavor shall be instead to explain the grammar from the language : to test in all details, so far as shall be found possible, the reason of Pāṇini's rules (which contain not a little that seems problematical, or even sometimes perverse) ; to determine what and how much genuine usage he had everywhere as foundation, and what traces may be left in the literature of usages possessing an inherently authorized character, though unratified by him."

We shall consider one of these "problematical or perverse phenomena" in this article. The word *aśvatara* has been in use in Sanskrit since the time of the Atharva Veda and it is used in exactly the same form in many of the modern Indian languages. European and American Sanskrit grammarians are generally of opinion that the word is derived from Sanskrit *aśva* with the comparative suffix *-tara.** Pāṇini, and for the matter of that all

---

* In *vatsatara* (f.-rī') 'weanling', *aśvatarā'* 'mule,' and *dhenuṣṭarī* 'cow losing her milk,' the application of the suffix is peculiar and obscure. Whitney, *A Sanskrit Grammar*, §1242 b.

The suffix *tara*...forms...a few substantives in which the

Sanskrit grammarians hold that the suffix is entirely different. Pāṇini deals with the comparative and superlative suffixes *-tara*, *-tama*, *-iṣṭhan*, and *-īyasun* in rules 55 to 65 of Section 3 of Chapter V of his grammar. Then after treating of various other secondary suffixes, in Rule 91 he makes provision for *vatsatara*, *ukṣatara*, *aśvatara* and *ṛṣabhatara*. His rule runs thus: वत्सोक्षाश्वर्षभेभ्यश्च तनुत्वे, *i.e.*, the suffix *ṣṭarac* is added to *vatsa*, *ukṣan*, *aśva* and *ṛṣabha* also in the sense of diminution. The Bhāṣyakāra is careful to point out that *tanutva* means the diminution of the attribute connoted by the word.

It is clear, therefore, that in the word *aśvatara* denoting 'a mule' the suffix is *-ṣṭarac*, and not *-tarap*. As a matter of fact *aśvatara* differs from the vast majority of words formed with *-tarap* in two respects. In the first place, the suffix *-tara* is unaccented, but *aśvatara* is accented on the final syllable. Secondly, words ending in the suffix *-tara* form their feminines with *-ā*, but *aśvatara* forms its feminine with *-ī*. Therefore, in the sense of a better horse the word *aśvatara*, accented on the first syllable and forming its feminine with *-ā*, is derived with the comparative suffix *-tara*. Thus the Mahābhāṣya says under v. 3.55 :

वत्सादिभ्यस्तनुत्वे कार्श्ये प्रतिषेधः । ५।३।९१। वत्सादिभ्यस्तनुत्वे कार्श्ये प्रतिषेधो वक्तव्यः। कृशो वत्सो वत्सतर इति मा भूदिति ।। स तर्हि प्रतिषेधो वक्तव्यः ?

---

meaning of the suffix is somewhat obscure: *aśvatara*,' (AV) mule (f. ī). Perhaps 'more (like a) horse' (than an ass). Macdonell, *Vedic Grammar* §213 and f. n.

Après substantifs, la formation est relativement libre, soit qu'elle donne des diminutifs (en *tara-*)...*aśvatara*-P. "mulet"... Louis Renou, *Grammaire Sanscrite* §190.

[By a secondary development the suffix *-tara* has come to be specialised in the formation of comparatives, but there are a few old formations where this is not so, and where the original, more general function of the suffix is apparent. For instance *aśvatara*—'mule' is an animal which partakes of the nature of a horse (**aśvatar nī.*). Burrow, *The Sanskrit Language.*]

न वक्तव्यः। यस्य गुणस्य हि भावाद् द्रव्ये शब्दनिवेशास्तदभिधाने, तस्मिन् गुणे वक्तव्ये प्रत्ययेन भवितव्यम्। न च कार्श्यस्य भावाद् द्रव्ये वत्सशब्दः।

गौरयं यः शकटं वहति, गोतरोऽयं यः शकटं वहति सीरं च। गौरियं या समां समां विजायते, गोतरेयं या समां समां विजायते स्त्रीवत्सा च। अश्वोऽयं यश्चत्वारि योजनानि गच्छति, अश्वतरोऽयं योऽष्टौ योजनानि गच्छति।

"It is a bull (*gauh*) that draws a cart ; it is a better bull that draws a cart and also a plough. It is a cow (*gauh*) that calves every year ; it is a better cow (*gotarā*) that calves every year and produces female offspring at that. It is a horse (*aśva*) that goes over four leagues ; it is a better horse (*aśvatara*) that goes over eight leagues."

But in the sense of mule *aśvatara* is not formed with the comparative suffix *-tara*, nor for the matter of that *vatsatara*, *ukṣatara* and *ṛṣabhatara*. The fact is *aśvatara*, *vatsatara*, *ukṣatara* and *ṛṣabhatara* were originally **asvastara*, **vatsastara* **ukṣastara* and *ṛṣabhastara*, the sibilant of the second element being elided by dissimilation because of the presence of a sibilant in the first member. The second element is *stara*. The feminine form *starī* occurs several times in the Ṛgveda in the sense of a barren cow. The compound *dhenuṣṭarī* occurs in the *Maitrāyaṇī Saṃhitā* in the sense of 'a cow whose milk has dried up.' The Greek word corresponding to *starī* is *steira f.* (for **ster-ia*). The masculine form *steros* also occurs as feminine. *Steira* means 'a cow or other animal that has not brought forth young'. Homer's *steiran boun* corresponds in form and sense to Sanskrit स्तरीं गाम्. When applied to women, *steira* not only means not having had offspring, virgin, but also 'past child-bearing'. So it may mean अप्राप्तप्रजननशक्ति as also निवृत्तप्रसवा. Again, Skt. *starī* is connected with Lat. *steri-lis*, Gothic *stairō* and Eng. *sterile*.

At first, there was mere juxtaposition of अश्वः स्तरः, अश्वा स्तरीः (unproductive horse or mare). Then the words crystallized into the compounds *asvastarah* and *asvastarīh*. वत्सः स्तरः etc. became वत्सस्तरः, etc. Then, by the dissimilatory disappearance

of the *s* the forms *asvatara, vatsatara,* etc., arose*. Pāṇini might have included the word *stara* in his rule : पोटायुवतिस्तोक-कतिपयगृष्टिधेनुवशावेहद्बष्कयणीप्रवक्तृश्रोत्रियाध्यापकधूर्तैर्जातिः ii.1.65 and thus made provision for the adjective coming after the noun. But in that case he would have to frame a separate rule for the elision of the initial sibilant of *stara* in the case of the four words. Now, since the word *stara* is placed last, becomes *tara* and modifies the sense in the same way in all these four cases, Pāṇini was perfectly justified in regarding it as a suffix. He prefixed a ṣ to *tara* to show that the feminine would be formed with -ī, and affixed a *c* to show that the words formed with the suffix would be oxytone. Incidentally the form of the suffix would seem to imply that Pāṇini had some idea that it was originally an independent word, *viz*, *stara*. Thus *aśvatara* means literally a horse that is unproductive, *i e*.. a mule. Similarly, *vatsatara* means "a young bull or heifer (also applied to goats and exceptionally to sucking calves and even to full-grown animals which have not yet copulated"). Here also the sense of *stara* is clear.

The *Taittirīya Saṃhitā*, *Aitareya Brāhmaṇa* and other texts mention the unproductive character of the mule.

अग्निष्टोमेन वै प्रजापतिः प्रजा असृजत, ता अग्निष्टोमेनैव पर्यगृह्णात् । तासां परिगृहीतानामश्वतरोऽत्यप्रवत । तस्यानुहाय रेत आदत्त, तद् गर्दभे न्यमार्ट् । तस्माद् गर्दभो द्विरेताः । अथो आहुः—वडवायां न्यमार्डिति । तस्माद् वडवा द्विरेताः । तस्मादश्वतरो न प्रजायते । आत्तरेता हि । तैत्तिरीयसंहिता ७।१।१।१-२ ।

Later Sanskrit writers often refer to the belief that the mule dies in giving birth to her young ones.

दण्डेनोपनतं शत्रुमनुगृह्णाति यो नरः ।
स मृत्युमुपगृह्णीयाद् गर्भमश्वतरी यथा ॥

Nilakaṇṭha explains : अश्वतरी गर्दभजा अश्वा उदरभेदेनैव प्रसूत इति प्रसिद्धम् ।

---

* A very interesting instance of a similar dissimilatory disappearance of a sibilant is furnished by Skt. *paśyati* which was originally *spaśyati* from the root *spaś* preserved in Skt. *spaṣṭa* and attested by Lat. *specere* and Gk. *skeptomai*.

सकृद्दुष्टं सखायं यः पुनः सन्धातुमिच्छति ।
स मृत्युमेव गृह्णाति गर्भमश्वतरी यथा ॥ महाभारतम् ।
अविश्रान्तमनाः शून्यमायुराततमीहते ।
दुःखायैव विमूढोऽन्तर्गर्भमश्वतरी यथा ॥ योगवासिष्ठम् [वैराग्य १४।८]

The commentary explains: अश्वाद् गर्दभ्यामुत्पन्ना अश्वतरी । तस्या उदरविदारणेनैव गर्भनिर्गमनं प्रसिद्धमिति ।

We quote below a few lines from *Chamber's Encyclopaedia :*

"Mule, a cross between a jack (male) ass and a horse mare. The hybrid is sterile because of differences in the chromosomes of the parents, but very occasional cases of mule mares producing foals have been reported. The mule is valued for the fact that it combines the power of accommodation to high temperatures of the smaller ass with the size and power of the horse so that it is a suitable draught or pack animal in the tropical and semi-tropical parts of the world."

It will be clear from what has been said above that the ancient seer of the 5th Century B.C. was right and the modern savants of the 19th and 20th centuries A. D. are wrong. It is for this reason that Faddegon says :

"Goldstücker has admirably attacked Böhtlingk, but for Böhtlingk we forget Goldstücker ;

"and Whitney has admirably attacked Pāṇini, but for Pāṇini we forget Whitney.

"I adore Böhtlingk because he reveals to us the spirit of Pāṇini.

"I adore Pāṇini because he reveals to us the spirit of India.

"I adore India because it reveals the Spirit, the Spirit."

---

## आत्मनीनम्

अध्यापकः । वत्स वरेन्द्र ! किमिदं त्वया विलिखितम्—आत्मनीनं दोषमपाकर्तुकाम इति ।

वरेन्द्रः । आर्य ! विशेषतो विमृशन्नप्यत्र दोषलेशमपि नोपलभे ।

अध्यापकः । आत्मनीनशब्दस्य को वार्थः ?

वरेन्द्रः । आत्मगतम् आत्मीयम् ।

अध्यापकः। नहि नहि। आत्मने हितम् आत्मनीनम्। आत्मन्-विश्वजन-भोगोत्तरपदात् खः [ ५।१।९ ] इति सूत्रेण तस्मै हितमित्यर्थ आत्मन्-शब्दात् खप्रत्ययो विहितः पाणिनिना। दोषस्त्वात्मने हितो न भवति। अत एव आत्मीय आत्मगतो वा दोष इति वक्तव्यो न पुनरात्मनीनो दोष इति।

वरेन्द्रः। आर्य! आत्मने हितमित्यर्थे आत्मनीनशब्दस्य शिष्टप्रयोगो वर्तते वा?

अध्यापकः। बहवो वर्तन्ते। तथाहि भट्टिकाव्ये दृश्यते—तामात्मनीनामुदवोढ रामः [ २।४८ ] इति, किरातकाव्ये पठ्यते—आत्मनीनमुपतिष्ठते [ १३।६९ ] इति। शिशुपालवध उपलभ्यते—नैवात्मनीनमथवा क्रियते मदान्धैः [ ५।४४ ] इति।

वरेन्द्रः। आर्य! सर्वमिदं सत्यं तथापि को वा मतिमान् आत्मनीनमिति श्रवणसुभगं पदं परित्यज्य परमः स्वार्थपर इवात्मीयमिति पदं प्रयुञ्जीत?

अध्यापकः। वत्स, शुद्धमेव पदं प्रयोक्तव्यम्, अशुद्धं श्रवणसुभगमपि श्वदृतिनिक्षिप्तमिव भागीरथीसलिलं दूरतः समुत्सारयितव्यम्।

वरेन्द्रः। आर्य स्थितेर्गतिश्चिन्तनीयेति न्यायेन कथमप्यस्य साधुत्वं संसाधयितुं शक्यते वा?

अध्यापकः। वत्स! संस्कृतभाषायां किं वा कर्तुं न शक्यते! कचिद्दोषा अप्यात्मने हिता भवन्ति। तत्रभवता भर्तृहरिणोक्तम्—असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते इति। कविप्रवरेण श्रीहर्षेणाप्युक्तम्—उदेति दोषादपि दोषलाघवं कृशत्वमज्ञानवशादिवैनस इति।

---

## ईडामहे

सूक्तिमुक्तावल्यां पठ्यते ( पृः १५ )—

मूर्तिः स्मर्तृतमोहरा सहचरी वाचां परा देवता
व्याहाराः श्रुतयः कुटुम्बकमिदं विश्वं चरस्थावरम्।
यस्यैतच्छ्रुतिमूलमूलकतया सन्दर्शितप्रक्रियं
स्वारम्भं भगवन्तमन्तरहितं ब्रह्माणमीडामहे॥

इति। ब्रह्मणः समाराधनेन कवयितुर्भ्वादिदाद्यादिविभेदज्ञानं प्रिनष्टमिति प्रतिभाति।

व्रीड् : व्रीडामहे }
सं क्रीड् : संक्रीडामहे } :: ईड् : $x$

∴ $x$ = ईडामहे।

वैयाकरणानां मतेन ईण्महे इति पदमेव साधु।

अस्यैव वैमात्रेयो भ्राता दधामहेऽन्तरान्तरा प्रादुर्भूयास्माकं चेतश्चमत्करोति।

---

# प्रकरणे शकारः

[ श्रीशिवप्रसादभट्टाचार्यः ]

एवं शास्त्रीयाल्लौकिकाच्चैतिह्यात् प्रक्रान्तशकारप्रकृतिसंश्रयिणि सम्बन्धे निर्दिष्टेऽवसरप्राप्तः सर्वथोपयोगिनि प्रकरणे तस्योपनिबन्धो विचारपदवीमर्हति। अस्मिन् प्रसङ्ग आमुख एव काचिदविदग्धजनोचिता भ्रान्तिर्निरसनीया। सा च सामान्यतः प्रामाणिकैणैतिह्यालम्बने विशेषतो नाट्यसाहित्ये निदर्शनदर्शने सुकरैवेति नापलपनीयम्। नारीसंग्रहे नाटकीयाख्यानवस्तुनो नायकस्य परिपन्थितयैव दुर्वृत्तस्य (devil) तस्यावतारणेति चापातप्रतीतिः सामाजिकसंवेद्या। परन्तस्यां तस्य प्रवृत्तिर्न शिष्टाचरितां रसिकसमयसिद्धां पूर्वरागादिक्रमपरम्परामनुसरतीति साहित्यतत्त्वविदां तावच्छृङ्गारितया शृङ्गारसहायतयाऽपरिगणितदेशान्तरशिष्टसाहित्येऽपि लब्धप्रवेशा तदनुकारिण्यर्वाग्भवे भाषासाहित्ये च प्रचलते त्रिकोणविभक्ता(triangle)वस्थासंस्थानाय गलहस्ततां ददतीव प्रतिभाति। शकारचर्यायां रसाभासस्यापि नावकाश इति सहृदयोपलब्धिरेव तत्र प्रमाणम्। यत्राप्यन्यत्रेदृशी सम्भावना प्रतिभायात् यथा रामायणाख्याने रावणपरिचये महाभारतीयवृत्ते दुर्योधनादौ वा तत्राप्यवहितैः कविभिर्वद्धानुरागप्रणयविषयाद् बाह्योऽयमाटोप इति स्फुटमेवोपदिष्टः। यथा कवे राजशेखरस्य बालरामायणे सीतापरिणयप्रस्तावे—

आज्ञा शक्रशिखामणिप्रणयिनी शास्त्राणि चक्षुर्नवं
भक्तिर्भूतपतौ पिनाकिनि पदं लङ्केति दिव्या पुरी।
उत्पत्तिर्द्रुहिणान्वये च तदहो नेदृग्वरो लभ्यते
स्याच्चेदेष न रावणः

इति जनकपुरोहितश्तानन्दभाषितेन, तदीये बालभारते च द्रौपदीस्वयंवरसभायां—

किमाह महाराजदुर्योधनः ?

निर्दिशन्तु निजबाहुविक्रमं शार्ङ्गनाम्नि धनुषीह पार्थिवाः।
साभिमानहृदयस्तु मादृशः कः पणेन परिणेतुमिच्छति ॥
कथमभिमानाङ्गीकारेण परिहार एषः।

इति बन्दिनो मन्तव्येन सूच्यते। वस्तुतस्तु गाथादिप्रकृतिकाव्येष्वायसाहित्ये लब्धप्रसराऽपीयं पद्धतिरभिजातसम्प्रदाये निबन्धिनि ग्राम्यधर्मप्रतिबन्धिनि सर्गबन्धे "त्रैलोक्यस्यास्य सर्वस्य नाट्यं भावानुकीर्तनमि"ति मुनिकृतस्वरूपाख्यानशिष्टाचाररूपितविकल्पसंवेदने नाट्ये च न सुसहेति भव्यानां भावना।

कविसमयोऽप्यत्र कामशास्त्रानुशासनं नातिवर्तते। "गृहीतविद्यः प्रतिग्रहजयक्रयनिर्वेशाधिगतैरर्थैरन्वयागतैरुभयैर्वा गार्हस्थ्यमधिगम्य नागरिकवृत्तं वर्तेतेति नागरिक-

प्रस्तावे "एतां विजने मृदुभिरुपायैरुपक्रमेत । कुसुमसधर्माणो हि योषितः सुकुमारोपक्रमाः । तास्त्वनधिगतविश्वासैः प्रसभमुपक्रम्यमाणाः सम्प्रयोगद्वेषिण्यो भवन्ती"ति कन्यासंप्रयुक्त-काधिकरणे च कामशास्त्रकृन्मुनिरनुशास्ति । शकारप्रकृतिश्च सर्वथैतत्प्रविकूला । नाट्यवेद-प्रवर्तको मुनिर्भरतोऽकामामन्यदीयप्रेमनिर्भरहृदयां कामयमानस्याधमत्वं निर्दिशति —

अवमानितोऽपि नार्या निर्लज्जतयाऽभ्युपैत्यविकृतास्यः ।
अन्यतरं संक्रान्तां स्नेहपरावृत्तभावश्च ॥
अभिनवकृते व्यलीके प्रत्यक्षं रज्यते दृढतरं यः ।
मित्रैर्निवार्यमाणो विज्ञेयः सोऽधमः पुरुषः ॥
अविगणितभयामर्षो मूर्खप्रकृतिः प्रसक्तहासश्च ।
एकान्तदृढग्राही निर्लज्जः कामतन्त्रेषु ॥

इत्यादिना । स्वरूपाख्यानमेतच्छकारप्रकृतिमनुबध्नातीति न तिरोहितं प्रेक्षावताम् । आलङ्कारिकमूर्धन्यानां सिद्धान्तोऽपि नैतन्मतं समर्थयत इत्युपरिष्टादवतारयिष्यते । शकारस्य कुब्जवर्षवरादिसाहचर्येण निर्देशोऽपि ज्ञापकत्वसिद्धेस्तदभिप्रायकप्रायः ।

नाट्यसाहित्ये परकीयानुरागो न भव्यभावनोदित इति सामान्यतो मतोद्घोषणे वादिनो विदग्धमानिनोऽधुनातनाः केचित् प्रत्याचक्षीरन्—नतत् सुष्ठु यतोऽन्तत एकत्र रूपके तद्विरोधो लभ्यत एव । देवीचन्द्रगुप्तनाम्नि नाटके स्फुटमेव नायिकाया ध्रुवादेव्याः स्वकीयपरिणेतू रामगुप्तादितरत्र नायके चन्द्रगुप्तेऽनुरागो नायकेन च तस्याः परिग्रहोऽपि निर्दिष्टः । वस्तुस्थितिरपि तथाविधैवासीत् । प्रमदाकृतानां प्रमादानां वर्णनाप्रस्तावे भट्टबाणेन हर्षचरिते सन्दब्धम्—अरिपुरे च परकलत्रकामुकं कामिनीवेशगुप्तश्चन्द्रगुप्तः शकपतिमशातयदि'ति । 'शकानामाचार्यश्चन्द्रगुप्तभ्रातृजायां ध्रुवदेवीं प्रार्थयमानश्चन्द्रगुप्तेन ध्रुवदेवीवेषधारिणा स्त्रीवेषजनपरिवृतेन रहसि व्यापादित' इति तट्टीकाकृता चोट्टङ्कितम् । नाटेय च तत्रास्या एव ध्रुवादेव्या नायिकाऽन्यतरत्वस्वीकारो वरीवर्ति । अत्रेदं विवेच-नीयम् । अधुनाऽनुपलभ्यमानादस्मात् ग्रन्थादुद्धृतेषु सन्दर्भेषु कुमारचन्द्रगुप्तस्य नायकता तस्य नायिकाद्वयेऽनुरागप्रकर्षस्तदाविर्भावशैली च सममेव लक्षणीया । रामगुप्तस्तु भीरु-प्रकृतित्वेन दुर्वृत्तस्य शकाधिपतेः साम्नाऽनार्योचितप्रस्तावे सम्मतिं विदधन्नायिकाया ध्रुवादेव्या विरागभाजनमेव ।* अन्या नायिका माधवसेना वारयोषिदपि चन्द्रगुप्त-गुणगृह्या मृच्छकटिके प्रकरणे वसन्तसेनेव चारुदत्तं भर्तृत्वेन गृहीतवती । अनयो-

* अभिनवभारत्यां (२८।५३, ४३३ पृः) नाट्यदर्पणे (पृः ३२, ८४, ८६, २४२-४२, २९०) चोद्धृतयो द्रष्टव्याः ॥ एतत्संक्रान्तं वस्तुविवेचनमैतिहासिक-वित्त-कौतूहलिभिरालोचनीयम् ।

यियान् भेदो यद् वसन्तसेना विनयप्रधानावारा माधवसेना तु स्वजातिसुलभतद्विपरीतयुता । अत एवाचार्याभिनवगुप्तपादैस्तदनुसारिणा नाट्यदर्पणकृता च देवीचन्द्रगुप्तग्रन्थस्य प्रकरणप्रसङ्ग एवोद्धारः कृतः ।

मन्दकुलस्त्रीचरितं काव्यं कार्यं प्रकरणे तु ॥
सचिवश्रेष्ठिब्राह्मणपुरोहितामात्यसार्थवाहानाम् ।
गृहवार्ता यत्र भवेन्न तत्र, वेश्याऽङ्गना कार्या ॥
यदि वेशयुवतियुक्तं न तत्र स्त्रीसङ्गमोऽपि स्यात् ।*

इति मुनिनिर्देशोऽ'शतोऽनुसृतस्तत्र । ( क्रमशः )

---

# स्वरसंज्ञाविमर्शः

( पूर्वतोऽनुवर्तते )

यतीनां सालावृकेभ्यः प्रदानरूपापराधस्येन्द्रस्य पञ्चापराधवर्णनप्रसङ्गे पूर्वं विस्तरेण निरूपणं कृतम् । किञ्च सहस्रशब्देन सहस्रसङ्ख्याकरश्मियोग्यादित्यमण्डलमुच्यते । तत्र रश्मिबोधकसङ्ख्याभिप्रायकसहस्रशब्दस्यासङ्ख्यातार्थकत्वम् । एवं सति सहस्रसङ्ख्याकरसङ्ख्यै रश्मिभिरुपेतं मण्डलं सहस्रं तत्सम्बन्धेन भेदा अपि साम्नामसङ्ख्यास्तान्मध्ये शक्रेण विनाश इत्यर्थः । आदित्यमण्डलस्य ऋग्वेदे सहस्रशब्देन बहुषु स्थलेषु वर्णनं "सहस्रं सवाँ अयुतं च साकम्" [४।२६।७] इत्यादौ । अस्य टीकाकारैरुच्यमानस्यार्थस्यायुक्तत्वमिति स्थलान्तरे प्रकटीकृतम् । ऐतरेयब्राह्मणे प्रजापतिना सूर्याया विवाहप्रसङ्गे सहस्रस्य बहुत्वेन वचनं मण्डलाभिप्रायम् । मण्डलाभिन्नत्वं साम्न इति पूर्वं निर्णीतम् । मण्डलस्य चोपाधिवशतो भिन्नत्वमित्यपि पूर्वमुक्तम् । उपाधयश्चासङ्ख्या इति तस्याप्यसङ्ख्यार्थत्वमिति तद्रूपसाम्नां भेदानामसङ्ख्यत्वं तेषां पूर्वोक्तरीत्या इन्द्रेण विनाश इति वर्णनेति । किञ्च इन्द्रस्य यतिवधापराधविचारितरीत्याऽपि सामभेदनाश इन्द्रेणेति वर्णयितुं शक्यम् । दक्षिणस्यां दिशि भुवः पार्श्वे प्रकाशमानादित्यस्य सोमत्वमिति पूर्वं प्रपञ्चितम् । स सोमशब्दव्यवहार्य आदित्य एव । आदित्यस्य सामरूपत्वं पूर्वमुक्तमेव । यथोत्तरस्यां दिशि भुवः पार्श्वे प्रकाशमानेनादित्येन तत्र प्रकाशनावसरे दक्षिणस्यां दिश्यपि प्रकाशः क्रियते एवं दक्षिणस्यां दिश्यपि प्रकाशमानेनादित्येन तत्र प्रकाशावसरे उत्तरस्यामपि तेजो दीयेतैव । तेन दीयमानं तेजस्तदुत्तरस्यां प्रकाशमानेनादित्यरूपेणेन्द्रेण स्वस्मिन्गृह्यते तस्य च तेजसः सोमशब्देन व्यवहारः ।

---

* अभिनवभारत्यां १८।५३, पृः ४४३, नाट्यदर्पणे पृः ७१, ८४, ८६, १४१-४२, १९४ चोद्धृतयो द्रष्टव्याः ।

स च सोम इन्द्रेण उत्तरस्यां दिश्युदितमात्रेण पीयते इति 'एकया प्रतिधापिबत्' [ ८।७७।४ ] 'त्रिकद्रुकेष्वपिबत् सुतस्य' [ १।३२।३ ] इत्यादिमन्त्रैः प्रतिपाद्यते इति विस्तरेण पूर्वं प्रतिपादितमेव। स चेन्द्रः पूर्वस्यामुदीयमान आदित्य इति तेन रात्रिसम्भृतस्य दक्षिणस्यां प्रकाशमानादित्येन दत्तस्य प्रकाशात्मकसोमस्य पानमिन्द्रेण क्रियते इति यथा एवमुत्तरस्यां प्रकाशमानेनादित्येन तदानीमेव दक्षिणस्यां दिश्यपि तेजो दीयेतैव। तत्तत्र समग्रां रात्रिं यावत्तत्र सम्भृतस्य तेजसस्तत्रोदयावसरे उदीयमानबिम्बे तस्य विलयः स्यादेवेति समानन्यायेन प्राप्तिः। तद्विषये वेदे उच्यते नैष सोमोऽर्थादुत्तरेण प्रदत्तं तेजस्तस्य तत्र मण्डले न विलयः। यतस्तेजोरूपः सोम-इन्द्रेणैव पातव्यः। इन्द्रस्यैवेदं कर्म। इन्द्रश्च पूर्वदिशि। पूर्वस्यामुदयश्च भुत्र उत्तरस्मिन् पार्श्वे। दक्षिणपार्श्वे च न पूर्वस्यामुदयः किन्तु पश्चिमायाम्। पश्चिमायामिन्द्रस्याभावेन तत्र सम्भृतस्य तेजसो नेन्द्रेण पानम्। इन्द्रव्यतिरिक्तश्च न सोमस्य पातेति स तत्रत्यः सोम इन्द्रेण स्वयमपीत्वा सालावृकेभ्यः प्रदीयते। सालावृकशब्देन भक्ष्यविषये तृप्तिरहितो हठाद्भक्ष्याक्रमणसाजात्येन तत्रत्यं तम उच्यते तमसोऽप्युपाधिवशतो नानात्वं गृहीत्वा बहुवचनम्। तेभ्यः सालावृकेभ्यस्तत्सोमदानं तत्रत्यस्य तस्य तेजोरूपस्य सोमस्य तमसि विलयः। स चेन्द्रेण कृत इति यतीनां सालावृकेभ्यः प्रदानरूपो दोष इन्द्रस्येति। यतिशब्देन च सोम उच्यते। इन्द्रापराधनिर्णयावसरे पूर्वं विस्तरेणोक्तम्। एवं सत्येषां यतीनामिन्द्राभिप्रायेणोत्तरस्यामयनरूपमध्ययनमपेक्षितं न तु दक्षिणस्यामयनरूपमध्ययनासम्बन्धग्रयनं परन्तु तत्तैः कृतमितीन्द्रेण तद्विनाशः। तत्राप्यादित्यमण्डलसम्बन्धेन सामरूपणेति ते सामवेदभेदा अनध्यायेष्वध्ययनेनेन्द्रेण विनाशिता इतिचरणव्यूहकारोक्तसामवेदविनाशनेऽनध्यायेष्वधीयमानत्वस्योपपत्तिः। ते च यतयः सामसम्बन्धिन इति तेष्ववशिष्टानां बृहद्गिरिपृथुरश्मिरायोवाजीयानां सामसम्बन्धित्वमुच्यमानमपि सङ्गतम्। एते सामभेदाः साकल्येन न विज्ञाता इति चरणव्यूहे किलशब्दः प्रयुक्तः। ( क्रमशः )

## उद्भटश्लोकः

यावदेव कमला कृपान्विता तावदेव भवनं वधूः सुखम्।
पौरुषान्वितततनुर्जनादरो नास्ति चेत् प्रथमवर्णवर्जितम्॥

कमलायाः कृपामन्तरेण भवनं वनं भवति, वधूर्धूः (भारः), सुखं च खम् ( शून्यम् ), पौरुषान्वितततनुः रुषान्वितततनुर्भवति, जनादरश्च नादरः। वर्णोऽक्षरम्।

मदीयवृद्धप्रपितामहस्य स्वर्गतस्य देवीचरणतर्कभूषणमहोदयस्य हस्तलिखितपुस्तकाभ्यन्तरे पत्रिकाखण्डे विलिखित आसीदयं श्लोकः।

श्रीः...

# अप नः शोशुचदघम्

[ ऋकसंहिता १।९७ ]

अप नः शोशुचदघमग्ने शुशुग्ध्या रयिम् ।
अप नः शोशुचदघम् ॥१॥

काश्यपक्षितीशचन्द्रभाष्यम् । अप न इत्यष्टर्चं सूक्तम् । कुत्स ऋषिः । गायत्री छन्दः । शोकापनयने विनियोगः ।

एतद्गताख्यायिका सायणेनोपवर्णिता । दीर्घजिह्वी नाम राक्षसी सर्वान् यज्ञान् बबाधे । तां हन्तुमिन्द्रोऽशक्तः सन् सर्वस्य मित्रभूतं कुत्समब्रवीदेषा त्वया हन्तव्येति । स चावधीत् । तं वागभ्यवददनुचितमिदं त्वयाचरितं यत्त्वं सर्वेषां मित्रभूतः सन् क्रूरमकार्षीरिति । तमृषिं शोकः प्राप्नोत् । स ऋषिरनेन सूक्तेनाग्निं स्तुत्वा शोकमपागमयत् । तथाच ताण्डकम्—दीर्घजिह्वी वा इदꣳ रक्षो यज्ञहा यज्ञानवलिहत्यचरत् । तामिन्द्रः कयाचन मायया हन्तुं नाशंसत । अथ ह सुमित्रः कुत्सः कल्याण आस । तमब्रवीद्—इमामच्छा ब्रूष्वेति । तामच्छाब्रूत । सनमब्रवीत्—नहैतन्न शुश्रुव प्रियमिव तु मे हृदयस्येति । तामज्ञापयत् । ताꣳ सꣳस्कृतेऽहताम्...सुमित्रः सन् क्रूरमकरित्येनं वागभ्यवदत् । ताꣳ शुगार्च्छत् स तपोऽतप्यत । स एतत् सौमित्रमपश्यत्, तेन शुचमपाहत । [१३।६।९-१० ] इति ।

स्कन्दस्वामिनोक्तम्—अत्र छन्दोगब्राह्मणाधीतमितिहासं व्याचक्षते । कुत्सश्च लुशश्चेन्द्रं व्यह्वयेताम् । स इन्द्रः कुत्समुपावर्तत । तꣳ शतेन वार्ध्रीभिरबध्नात् । [ तं लुशोऽभ्यवदत्—प्र मुच्यस्व परि कुत्सादिहा गहि । किन्नु त्वावान् बद्ध आसाता इति । ताः संछिद्य प्राद्रवत् । ताण्ड्य० ९।२।२२ ] इति । स इन्द्रातिक्रमजेन पापेनाभिभूतमात्मानं मन्यमानस्तदपनोदार्थमग्निमुवाच—अप नः शोशुचदिति ।

हे अग्ने, त्वं नः अस्माकम् अघम् अनिष्टम् अप शोशुचत् सुदूरं दन्दह्यमानः । शोचतेर्यङ्लुगन्ताच्छतरि रूपम् । नाभ्यस्ताच्छतुरिति नुमभावः । अभ्यस्तानामादिरित्याद्युदात्तत्वम् । नः अस्मभ्यं रयिम् धनम् आ शुशुग्धि भृशं सन्दीपय देदीप्यमानं धनरत्नजातं देहीत्यर्थः । शोचतिर्ज्वलतिकर्मा । लोटः सेर्हिः । बहुलं छन्दसीति शपः श्लुः हुझल्भ्यो हेर्धिरिति हेर्धिरादेशः । चोः कुरिति कुत्वम् । आमन्त्रितं पूर्वमविद्यमानवदित्यग्न इत्यामन्त्रणस्याविद्यमानवत्त्वात्पादादौ स्थितत्वात् शशुग्धि इत्यत्र निघाताभावः । प्रत्ययस्वरः । बहुलं छन्दसीति शपः श्लुः । भूयस्त्वार्थोऽभ्यासः । तथाच यास्कः—अभ्यासे हि भूयांसमर्थं मन्यन्ते यथाहो दर्शनीयाहो दर्शनीयेति । इति । हे अग्ने भवानस्माकमघमपशोशुचत् सुदूरं दन्दह्यताम् इति बहवः । अत्र शोचतेर्यङ्लुकि लेटि रूपम् । किञ्च हेऽग्न इत्यादि पूर्ववत् । अस्मिन् पक्षे चादिलोपे विभाषेति प्रथमा तिङ्विभक्तिर्न निहन्यते ।

---

# पुस्तकविक्रेतुः प्रकटनपत्रिका

[ The Statesman, February 23, 1886 ]

१। अस्माकं पुस्तकानां मूल्यं गुटिकापात इव (as a lottery) स्वल्पम्।

२। गाथिकेव पुस्तकानि मनोज्ञानि।

३। पत्राणि करिचर्मेव कठिनानि।

४। क्रेतारो यथा नदीबाष्पपोतसंस्थाभिः प्रश्रयेणोपचर्यन्ते तथैवास्माभिर्विनयेनानुवृत्यन्ते।

५। पतिं यथा प्रिया पत्नी यत्नेनोपचरति तथैव यत्नेन पुस्तकानि गुच्छे बध्यन्ते।

---

# पुस्तक-परिचयः

**रामायणम्।** वङ्गभाषामयं कृत्तिवास-विरचितम्। श्रीहरेकृष्णमुखोपाध्याय-साहित्यरत्न-सम्पादितम्। डक्टर सुनीतिकुमारचट्टोपाध्यायस्य भूमिका-संवलितम्। मूल्यं रूपकनवकमात्रम्। साहित्यसंसद्। ३२ए आपार सार्कुलार रोड, कलिकाता-९।

कृत्तिवासविरचितं रामायणं काशीरामदाससंग्रथितं महाभारतं चोभयमेव वङ्गभाषामयं कियतश्चित् कालात्पूर्वमपि वङ्गेषु प्रतिभवनं प्रत्यापणं प्रतिक्षेत्रं सभक्तिकं पठ्यते स्म। यद्यपि पुस्तकद्वयमिदं सर्वथा न मूलानुसारि तथापि परमोपादेयं परमोपदेशकं च। विद्वत्प्रवरेण श्रीहरेकृष्णमुखोपाध्यायमहोदयेन सम्पादितमिदं कृत्तिवासरामायणमवश्यमेव पठनीयं वङ्गभाषाविद्भिः सयत्नं रक्षणीयं च ग्रन्थागारेषु पाठशालासु च। अत्रत्याः पाठाः प्रायेण समीचीनाः, परिशिष्टे सन्निविष्टाः शब्दार्थाश्च पाठे सहायकाः। विपश्चिद्वर्याणां सुनीतिकुमारचट्टोपाध्यायमहोदयानां सुलिखितायां भूमिकायां विविधदेशभाषागतानि रामायणानि पर्यालोचितानि। यद्यपि बहुशो मुद्रितं रामायणं वङ्गेषु तथापि प्रकृतं पुस्तकं श्रेष्ठग्रन्थेष्वन्यतमम्। त्वरन्तां वङ्गलिपिभाषाभिज्ञा वाचकमहोदया अस्य संग्रहणाय।

**Slavery in India** by Amal Kumar Chattopadhyay, M. A. Rajavaidya Ayurvedic Works, 172 Bowbazar Street, Calcutta-12. Pages 158. Ordinary edition—Rs. 6/- De Luxe edition—Rs. 10/-

ग्रन्थेऽस्मिंस्तरुणेनाप्यभिज्ञेन ग्रन्थकृता भारतवर्षगतदासप्रथाया विस्तृतमालोचनं विहितम्। प्राचीनतमकालादारभ्य विंशशताब्दीं यावद् आलोचनमत्र वर्तते। त्रुट्यादिसद्भावेऽपि सर्वत्रात्र ग्रन्थकृतो यत्नश्च परिश्रमश्च विद्वत्ता च स्फुटीभवन्ति। प्रणेतुरुद्यमः प्रशस्यः। वयं ग्रन्थस्यास्य बहुलप्रचारं कामयामहे।

---

Vol. IV (about 400 pages)—29 storiettes, hymns from the Rigveda with commentary, छात्री versus छात्रा, पतत्र versus पत्र, Goethe's maxims (original German with Sanskrit translation), Saratchandra's Niṣkṛti, on Pāṇini's क्, महाभाष्य, विश्रम versus विश्राम, सेवका versus सेविका, अन्योन्य, 11 humorous skits. Rs. 10/-.

Vol. V (about 400 pages) 16 storiettes, 4 long stories, 12 poems, humorous skits, discussions on परःशत, भ्रातृव्य, सूनृता, आग्नेदाऽस्नात्स्यविहृरणे, on the Anubandhas, on grammatical gender, Sanskrit equivalent of "horse-power", Tagore's poems, Language as fossil history, on Sāyaṇa's Bhāṣya. **The Śivasūtras and the Sanskrit Alphabet**, Patañjali's Mahābhāṣya, Hymns from the Avesta, etc., etc. Rs. 10/-

Vol. VI (about 400 pages) 5 storiettes, 2 long stories, 1 Bhāṇa, Derivations of अश्वतर and पुत्र, आनोभद्रीयसूक्त with various commentaries, explanation of the Madhusūkta, Kālidāsa and Bhavabhūti, Mahābhāṣya (pp. 33-136), Rasamañjarī, etc., etc. Rs. 10/-

Vol. VII (about 400 pages) **Technical Terms and Technique of Sanskrit Grammar—Samāsa, Kāraka and Vibhakti.** Kālidāsa and Bhavabhūti (5 instalments). Was Pāṇini a Communist? Kālidāsa and Shakespeare. Greek Proverbs (64 pages). On तरप् and तमप्. On सूनृत and भ्रातृव्य. Meaning of शफोरु, 9 storiettes, 3 long stories, मृगया in Sanskrit Drama, etc., etc. 10/-.

Vol. VIII (about 200 pages) Short stories, long stories, humorous skits, महाभाष्यरत्नमञ्जूषा. Meanings of Sanskrit proper names. Sanskrit stanzas and their parallels from European languages. Sanskrit equivalent of bread. Notes and Queries. Tagore's short story. On देवानांप्रियः. On the derivation of कार्मुक, On Abhinavagupta. **On Śārṅgarava and Śāradvata.** Tagore's Urvashi. Common Errors. **So-called Solecisms of Kālidāsa.** Rs. 3/8/-.

Vol. IX (nearly 300 pages). **So-called Solecisms of Kālidāsa.** Literary Parallels. Common Errors. Technical Terms of the Mugdhabodha. Tagore's story and poems. Contradiction in Terms. On the correct derivation of प्रवीण, सिकता etc. वाग्मी vs. वाग्ग्मी. बिभीषण versus विभीषण. On फ, ढ, ख, छ, घ in Pāṇini. A new stanza from Vyāḍi's Saṁgraha. Meaning of रद विलेखने. सतीर्थ्य versus सतीथ. The Anubandhas ऱ, क, प, उ, घ in Pāṇini, **The Technical Terms—Upasarga, Nipata, Karmapravacaniya, Gati, etc. Apurva in Mimamsa.** In Defence of the Padapāṭha. On ऊकालोऽज्झ्रस्वदीर्घप्लुतः. On वामदेव्यं साम. रेफ versus रकार. Rs 6/-

Printed and published by Sri Visvanath Chatterjee, M.A. from 8 Bhupendra Bose Avenue, Calcutta-4. Printed at the Gupta Press, 37/7 Baniatola Lane, Calcutta-9.

चन्द्रशेखर चन्द्रशेखर चन्द्रशेखर पाहि माम् ।
चन्द्रशेखर चन्द्रशेखर चन्द्रशेखर रक्ष माम् ॥

श्रीशिवः शरणम्

पञ्चदश-वर्षे ] July, 1961 [ एकादशी संख्या

# मञ्जूषा

सम्पादकः—श्रीक्षितीशचन्द्र-चट्टोपाध्यायः

## सूचिः



## अप्पाशास्त्रिणां पत्राणि

येषां सविधे राशिवडेकरमहोदयस्य पत्राणि वर्तन्ते ते कृपया मञ्जूषायां प्रकाशनार्थं तेषां प्रतिलिपिप्रेषणेनानुगृह्णन्तु नः।

*Office :* 8, Bhupendra Bose Avenue, Calcutta—4.
Minimum Annual Subscription : Rupees Six only.
Foreign—Twelve shillings.
Single copy : One Rupee.

Registered No. C. 3278

# मञ्जूषाया नियमावली

मञ्जूषाया वार्षिकं मूल्यमवरतो रूपकषट्कम्। आश्विन (September)-मासतो वर्षारम्भः। ग्राहकैर्वर्षस्य प्रथमसंख्यात एव ग्रहीतव्यम्।

२। प्रतिसौरमासं दशमदिने (आङ्ग्लमासस्य चतुर्विंशे दिवसे) 8, Bhupendra Bose Avenue, Calcutta 4 इत्यतो मञ्जूषा प्रकाश्यते। मासस्य प्रारम्भे न लभ्यते चेदस्मभ्यं निवेदनीयमन्यथा पुनः प्रेरणं न सम्भवेत्।

३। मञ्जूषायास्तावद् भागत्रितयं वर्तते। तत्र प्रथमे भागे देवभाषां प्रविविक्षूणां कृते सरलाः श्लोका आभाणका आख्यानानि नाटकानि च सन्निवेश्यन्ते। द्वितीये भागे दार्शनिका निबन्धा व्याकरणालङ्कारादीनां विमर्शः पाठविचारो जिज्ञासा मीमांसा च प्रकाश्यन्ते। तृतीये भागे सानुवादाः पारसीकानां गाथाः साङ्गलानुवादं निरुक्तं च प्रकाश्यन्ते।



श्रीविश्वनाथ-चट्टोपाध्यायः।

Phone :—55-4049 ८, भूपेन्द्र वसु आभेन्यु, कलिकाता ४

शरणं तरुणेन्दुशेखरः शरणं मे गिरिराजकन्यका ।
शरणं पुनरेव तावुभौ शरणं नान्यदुपैमि दैवतम् ॥

# मञ्जूषा

July, 1961. | १८८३-शकीयश्रावणस्य १५शा-वर्षस्यैकादशी संख्या | Vol. XV No. 11

## आभाणकमाला

१। Love me, love my dog.

इयं खलु स्नेहस्य शैली यत् तत्परिग्रहेऽपि तद्वत्पक्षपातः। पूर्णसरस्वती।

Latin. Qui me amat, amat et canem meum.

यो मयि स्निह्यति स मम शुनकेऽपि स्निह्यति।

२। One soweth and another reapeth.

अन्यो बीजं वपति, अन्यः सस्यं कृन्तति।

खलः करोति दुर्वृत्तं नूनं फलति साधुषु।

३। Greek. Outheis philos hōi polloi philoi.

He that has friends has no friend.

यस्य मित्राणि बहूनि सन्ति तस्य मित्रं नास्ति।

---

## रवीन्द्रनाथस्य ग्रन्थे संस्कृतोद्धृतिः

अभिनवप्रकाशिते रवीन्द्रनाथस्य "विचित्रा" ग्रन्थे १८८पृष्ठे दृश्यते—

धर्म एव हतो हन्ति धर्मो रक्षति रक्षितः।
तस्मात् धर्मो न हन्तव्यो मा नो धर्मो हतो वधीत्॥

इति। अत्र तृतीये चरणे तस्माद् धर्म इति पठनीयम्।

२१६ पृष्ठे दृश्यते—येनाहं नामृता स्याम् किमहं तेन कुर्याम् इति। अत्रापि येनाहं नामृता स्यां किमहं तेन कुर्यामिति पठनीयम्।

२२९ पृष्ठे दृश्यते—

सुरम्यमासाद्य तु चित्रकूटं नदीञ्च तां माल्यवतीं सुतीर्थां।
ननन्द हृष्टो मृगपक्षिजुष्टां जहौ च दुःखं पुरविप्रवासात्॥

इति। अत्रापि द्वितीये चरणे सुतीर्थाम् इति पठनीयम्।

३२७ पृष्ठे दृश्यते—

अधर्मेणैधते तावत् ततो भद्राणि पश्यति।
ततः सपत्नान् जयति समूलस्तु विनश्यति॥ इति।

अत्रापि सपत्नाञ्जयति इति पाठः।

---

## धर्मप्रवृत्तिः

[ श्रीवासुदेव-नागेशशास्त्रि-औदुम्बरकरः ]

उक्तमेव पूर्वं यथा वैदिकोऽयं धर्म आचार-व्यवहार-प्रायश्चित्तभेदेन त्रिप्रकारक इति। तत्र धर्मानुष्ठाने शरीरस्यैव द्वारत्वादाद्यसाधनत्वाच्च तच्छुद्धिरत्यन्तमपेक्ष्यते। शरीरशुद्धय एव तावज्जातकर्मादयः संस्काराः प्रभवन्ति। संस्कारश्च यादृशः शरीरसम्प्रदायः स्यात्तादृशो भवति। शरीरसम्प्रदायः पुनर्जातितोऽवगन्तव्यः। धर्मशास्त्रेषु चत्वारो वर्णा ब्राह्मणक्षत्रियवैश्यशूद्राः, म्लेच्छश्चेति प्रतिपाद्य समाजस्य मूलतः पञ्चविधत्वं व्यवस्थापितम्। एते च वर्णादयः स्वाधिकारानुसारमर्हन्ति धार्मिकं संस्कारम्। तत्र पूर्वे त्रयो द्विजा इत्याख्यायन्ते। तेषां मौञ्जीबन्धनसंस्कारोत्तरं वैदिककर्मस्वधिकारः। शूद्रस्य पौराणिकेषु, म्लेच्छस्य च द्रव्यसमर्पणादिद्वारा देवतापूजनादिष्वधिकारः प्रसज्यते। एषां शारीरमानसपावित्र्यापादनाय ये धर्माः प्रतिपादितास्त एवाचारप्रायश्चित्तयोरन्तर्भवन्ति। लोकेषु राज्यादिव्यवहारनीतिप्रतिष्ठार्थं व्यवहार इति।

तत्रैवं समनुष्ठातव्यमिति यो विधिः स आचार इत्यभिधीयते। आचाराननुष्ठानजन्यदोषपरिहारार्थं समनुष्ठातव्यो विधिः प्रायश्चित्तमिति। आचारः पुनरयं नित्यो नैमित्तिकः काम्यश्चेति त्रिविधः। नित्यश्च सन्ध्यावन्दनवैश्वदेवादिः, नैमित्तिको ग्रहणादिनिमित्तकस्नानादिः, काम्यश्च तत्तत्कामनया समनुष्ठीयमानः पुत्रकामेष्टिप्रभृतिः। अयं च पुनरपि द्वेधा सामान्यो विशेषश्चेति। तत्र सर्वमानवानभिव्याप्य वर्तमाना धर्माः सामान्यधर्माः सत्याहिंसादयः। सन्ध्यादयस्तु विशेषधर्माः। सामान्यधर्माश्च सङ्क्षेपतो यथा याज्ञवल्क्यस्मृतौ—

"अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः ।
दानं दया दमः क्षान्तिः सर्वेषां धर्मसाधनम् ॥" इति ।

तत्राहिंसा नाम हिंसाया अभावः । इह खलु जगति जीवान्तरहिंसयैव प्राणी जीवति । यानि चात्र जगति शरीराणि जीवानां सन्दृश्यन्ते तानि चतुर्विधानि । जरायुजानि चाण्डजानि च स्वेदजानि चोद्भिज्जानि चेति भेदात् । तत्र जरायुर्नाम गर्भवेष्टनं तदुद्भवानि मनुष्यचतुष्पदादीनाम् । अण्डजानि पक्षिणाम् । स्वेदजानि कृमिकीटानाम् । उद्भिज्जानि नामोद्भेदं विधाय जायमानानि वृक्षादीनां शरीराणि । वनस्पतयश्चेमे सजीवा एवेति प्रत्यक्षमेवेदं सर्वेषाम् । जलादिलाभेन चैते वर्धन्ते तदलाभे च क्षीयन्त इति । प्राणिशास्त्रेष्वपि सुदर्शमिदं जीवनलाभादिकमेतेषाम् । ओषधिवनस्पतिवृक्षानुपवर्ण्य मनुश्चाह—

"तमसा बहुरूपेण वेष्टिताः कर्महेतुना ।
अन्तःसंज्ञा भवन्त्येते सुखदुःखसमन्विताः ॥" इति ।

एवं पूर्वपातकविशेषाद् वृक्षादिशरीरं प्राप्नोति जीव इत्यर्थः । वनस्पतीनां हिंसा च विधीयत एव सर्वैः । तया विना हि न शक्नुमो जीवितुम् । केचिन्मनुष्यास्तदितरप्राणिनश्च मत्स्यादिप्राणिनोऽपि भक्षयन्ति । अतश्च स्वेतरजीवानेवोपजीवन्ति सर्वेऽपि जीवा इति स्पष्टीभवति । एतदेवाभिप्रेत्य मनुराह—'जीवो जीवस्य जीवनम्' इति । एवं च पूर्णत्वेन हिंसामपसार्य जीवनमेवाशक्यम् । तथाप्यहिंसा नाम यावच्छक्यं प्राणिनामवधः । वेदोक्ता यागीयपश्वादिहिंसा त्वहिंसैव । वेदोपदिष्टत्वात् । हिंसा कर्तव्या, तथा च जीवितव्यमिति नैव विधिः । तथापि हिंसा कर्तव्या चेच्छास्त्रनिषिद्धा न कर्तव्या, तदितरा तु कर्तव्या । उपायान्तराभावाज्जीवनस्य । 'न हिंस्यात्सर्वभूतानि' इति शास्त्रस्याप्येतदेव तात्पर्यम् । आवश्यकहिंसाजन्यदोषपरिहारार्थं च वैश्वदेवादिकृत्यं विहितमेव शास्त्रेण ।

शौचं च स्वच्छता । इन्द्रियाणां निग्रहो दमनम् । संयम इति यावत् । क्षान्तिश्च क्षमापरपर्याया सहनशीलता । एत एव धर्मा लोकेषु सामान्यतया नीतिः, मानवता, इत्यादिशब्दैरुच्यन्ते । एतेषामेव चाभावान्मानवानां परस्परं भीतिरुत्पद्यते । एतेषामेव चाभावो निदानं सामान्यतो मानवानामधोगतेरिति सुज्ञेयमिदम् । परमेश्वर-प्रीतिं सांसारिकस्वास्थ्यं चाकाङ्क्षद्भिः सुतरां परिपालनीया एते सामान्यधर्माः ।

विशेषाचाराश्च वर्णाश्रमसापेक्षाः । त्रैवर्णिका मातुः सकाशाज्जाता उपनयनविधिना पुनरपि संस्कृता 'द्विजाताः' द्विजा भवन्ति । तदुत्तरं च तेषां वैदिकेषु कर्मस्वधिकारः । तदर्थं च तैरात्मीयं द्विजत्वं संरक्षणीयं भवति । तेन हि विना सर्वेषामपि वैदिकधर्माणा-

मनुष्ठानायोग्यत्वात्प्रलय एव धर्मकर्मणां प्रसज्येत। अत एवोक्तं श्रीमच्छङ्कराचार्यचरणैः—'ब्राह्मणत्वस्यैव रक्षणेन रक्षितः स्याद्वैदिको धर्मस्तदधीनत्वाद्वर्णाश्रमभेदानाम्' इति। ब्राह्मण्यरक्षार्थमेव च तावद् 'आह्निका'परपर्याय आचार आवश्यकः। आह्निकेषु कर्मसु च सन्ध्यावन्दनं सर्वाण्यप्यतिशेते। तेन हि विरहितः कस्मिन्नप्यन्यकर्मणि नाधिकारं प्राप्नोति। तथाह्युक्तम्—'सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु' इति। अत एव च 'शुचिर्वाऽप्यशुचिर्वाऽपि सन्ध्याकर्म समारभेत्' इति च। सन्ध्यावन्दनस्य ब्राह्मण्यप्रतिष्ठापकत्वमेवाभिप्रेत्य मनुराह—

"न तिष्ठति तु यः पूर्वां नोपास्ते यश्च पश्चिमाम्।
स शूद्रवद् बहिष्कार्यः सर्वस्माद् द्विजकर्मणः॥" २।१०३॥

पूर्वां च पश्चिमां चेति सन्ध्यामित्यस्य विशेषणे। अपि च—

"सावित्रीमात्रसारोऽपि वरं विप्रः सुयन्त्रितः।
नायन्त्रितस्त्रिवेदोऽपि सर्वाशी सर्वविक्रयी॥" मनु० २।११२॥

अत एव च सन्ध्यावन्दनानुष्ठातृत्वमेव सर्वेषां द्विजानां सामान्यलक्षणम्। एतद्विहीनास्तु द्विजबन्धवः पतितापरपर्यायाः। आचारविहीनत्वमेव पातित्यप्रयोजकम्।

ब्रह्मचर्ये वर्तमानेनाग्निकार्यं कर्तव्यमेव। तदकरणे प्रत्यवायश्रवणात्। अतोऽग्निकार्यं ब्रह्मचारिणामसाधारणं लक्षणम्।

गृहस्थैश्चावर्जनीयहिंसाप्रयोज्यदोषनिवृत्तये वैश्वदेवः कर्तव्यः। तदकरणे तेषां प्रत्यवायश्रवणात्। तथा हि मनुः —

"पञ्च सूना गृहस्थस्य चुल्ली पेषण्युपस्करः।
कण्डनी चोदकुम्भश्च बध्यते यास्तु वाहयन्॥" ३।६८

एतद्दोषनिवारणाश्च पञ्च यज्ञा उक्तास्तैत्तिरीयारण्यके। ते च—

'देवयज्ञः पितृयज्ञो भूतयज्ञो मनुष्ययज्ञो ब्रह्मयज्ञ' इति।

एतेषां च नित्यत्वमाह मनुः—

"पञ्चैतान् यो महायज्ञान्न हापयति शक्तितः।
स गृहेऽपि वसन्नित्यं सूनादोषैर्न लिप्यते॥" ३।७१

"अघं स केवलं भुङ्क्ते यः पचत्यात्मकारणात्।
यज्ञशिष्टाशनं ह्येतत्सतामन्नं विधीयते॥" ३।११८

"वैश्वदेवं हि नामैतत्सायं प्रातर्विधीयते।" ३।१८७

अत एव च द्विजस्य सन्ध्यावन्दनमिव गृहस्थस्य वैश्वदेवो नित्यः।

एवमादयोऽमी आचारा वैदिककर्मण्यधिकारजनकाः पूर्णवेदफलप्रदायिनश्च। तथाहि।

"आचाराद्विच्युतो विप्रो न वेदफलमश्नुते ।
आचारेण तु संयुक्तः संपूर्णफलभाग्भवेत् ॥
एवमाचारतो दृष्ट्वा धर्मस्य मुनयो गतिम् ।
सर्वस्य तपसो मूलमाचारं जगृहुः परम् ॥" मनु० ३।१०९-१०

यत् किमपि हि धार्मिकं कर्म चिकीर्षतो नरस्य शुद्धता परमावश्यिका । तया हि विना कर्मणः सदोषत्वेन निष्फलत्वात्प्रत्यवायजनकत्वाच्च । कर्मणां पूर्णफले च शुद्धिः कारणम् । तदुक्तं श्रीमति देवीभागवते—

"देशकालक्रियाद्रव्यकर्तॄणां शुद्धता यदि ।
मन्त्राणां च तदा पूर्णं कर्मणां फलमश्नुते ॥" ४।४।४५

इदानीं च बहुधा समनुष्ठितकर्मणां निष्फलत्वस्य शुद्धिराहित्यमेव निदानं नान्यत् ।

सर्वेष्वप्येतेषु कर्मसु समनुष्ठीयमानेषु भगवति भक्तिरावश्यिका । तया विना हि कर्तुरशुद्धत्वमेव । तदुक्तं देवीभागवते—

"भावदुष्टस्तथा तीर्थे कोटिस्नातो न शुध्यति ॥" ४।८।३९

तीर्थस्नानं च सर्वकर्मणामुपलक्षणम् । याज्ञवल्क्योऽप्याह—

"इज्याचारदमाहिंसादानस्वाध्यायकर्मणाम् ।
अयं तु परमो धर्मो यद्योगेनात्मदर्शनम् ॥" ३।८

भगवत्साक्षात्कार एव परमो धर्मः । भगवत्साक्षात्कारसिद्धिश्च स्वधर्मानुष्ठानेनैव सम्पद्यते । तदुक्तं भगवता—

"यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ॥" १८।४६

एवं च सर्वविधश्रेयःसाधनत्वाद्धर्मस्य लोकेषु स्थैर्यसम्पादनार्थं तद्रक्षणार्थं च परमेश्वरेण शासनकर्ता राजा सृष्टः । तेन हि सर्वासां प्रजानां दुष्टेभ्यो रक्षणं कर्तव्यम् । धर्मक्षपयितॄणां च दण्डो विधातव्यः । तदुक्तं मनुना—

"रक्षार्थमस्य सर्वस्य राजानमसृजत्प्रभुः ।" ७।३
"स्वे स्वे धर्मे निविष्टानां यथावदनुपूर्वशः ।
वर्णानामाश्रमाणां च राजा सृष्टोऽभिरक्षिता ॥" ७।३५

धार्मिकाणां संरक्षणमाधर्मिकाणां च दण्ड इत्येवमेव राज्ञः प्रधानः कल्पः । एतदेवाभिप्रेत्य राजधर्मप्रस्तावे याज्ञवल्क्योऽप्याह—( अः १ )

"ये राष्ट्राधिकृतास्तेषां चारैर्ज्ञात्वा विचेष्टितम् ।
साधून्सम्पालयेद्राजा विपरीतांस्तु घातयेत् ॥ ३३८॥

उत्कोचजीविनो द्रव्यहीनान्कृत्वा प्रवासयेत् ।
सम्मानदानसत्कारैः श्रोत्रियान्वासयेत्सदा ॥३३९॥
कुलानि जातीः श्रेणीश्च गणाञ्जनपदानपि ।
स्वधर्मचलितान्राजा विनीय स्थापयेत्पथि ॥"३६७॥

सम्प्रति पुनरेतत्सर्वमपि कालेयकालमाहात्म्याद्विपरीतमेव सन्दृश्यते ।

धर्मपरिपालनमेव तावद्राजकीयानां व्यवहाराणां लक्ष्यमपेक्षितमिति तु तात्पर्यम् । धर्मेण विना हि सर्वेषामपि व्यवहाराणां सदोषत्वेनानीतिप्रयोजकत्वमेव स्यात् । अत एव हि श्रीमत्पण्डितराजद्राविडश्रीराजेश्वरशास्त्रिगुरुचरणानां घण्टाघोषः—'सुनीतिर्धर्मं विना नैव प्रवर्तते' इति । अत एव च गुरुण्डोत्तरं भारते धार्मिकमेव शासनं प्रवर्ततामित्यभिप्रेत्य भारतीयजानपदमहासभायाः (Indian National Congress) आन्दोलनस्य धर्ममूलकत्वमेवावश्यकमिति प्रतिपादयामासुर्विद्यावाचस्पतिश्रीमदप्पाशास्त्रिणः । यथा—"न चैवं साम्प्रतिकानां स्वदेशीयान्दोलनादीनां परित्याग एवास्माभिरभिप्रेयत इति भ्रमितव्यम् । वयं हि स्वदेशीयान्दोलनादीनां दृढमूलतामभिलष्यन्तः सनातनधर्मस्यैव च तत्र प्रभुत्वमवधारयन्तस्तदनुसारित्वमेवैतेषां वाञ्छामः" इति । सूनृतवादिनी, ख० ७, अं० ४९ ॥

( एषां च धर्मपीठमुद्दिश्य ये विचारास्त एते सूनृतवादिन्यामवलोकयितव्याः पिपठिषुभिः प्रथमखण्डे ११-१२ सङ्ख्ययोः । )

भारतीयधर्मप्रतिपादितं वर्णचतुष्टयं लौकिकदृष्ट्याऽपि तावदुपकारकमेव । तथा हि । ज्ञानप्रधानत्वान्मानवानां शाश्वती ज्ञानोपासनाऽवश्यिका । तदर्थं ब्राह्मणाः । समाजस्य रक्षणमावश्यकम् । अतस्तदर्थं क्षत्रियाः । अन्नधान्यादिसम्पत्तिः पुनर्योगक्षेमाय सर्वेषामपेक्षितेति तत्सम्पादनाय वैश्याः । कार्याणि पुनरेतेषां निरन्तरं सम्पादयितव्यानीति तदर्थं शूद्राः । एवं च सर्वेषामप्येतेषां वर्णानां द्रढीयसी समपेक्षिताऽऽवश्यकता । सर्वेषामेव पुनरेतेषां वर्णानां यथाधिकारं धर्मानुष्ठानेन निरतिशयसुखो मोक्ष एव लक्ष्यम् । यानेव वयमिदानीं समुन्नतान्मन्यामहे तेष्वपि पाश्चात्त्येषु सात्त्विकविचारशीलाः प्राचां भारतीयानां समाजस्वास्थ्यैकमूलकं धर्मशास्त्रादिग्रथनमवलोक्य विस्मयातिशयमावहन्ति ।

धर्मश्चायं परमेश्वरप्रभवत्वात्परमेश्वरस्य च नित्यत्वात्सनातन इत्युच्यते । सनातनो नाम नित्य एव । एतद्धर्ममूलवेदविमर्शादेव सृष्टिकर्त्रा पञ्च महाभूतानि सर्वेऽपि प्राणिनश्च समुत्पादितानि । प्राणिनां च सुख-दुःखहेतुत्वेन धर्माधर्मौ व्यवस्थापितौ । तदुक्तं मानवधर्मशास्त्रे—

'सर्वेषां तु स नामानि कर्माणि च पृथक् पृथक्।
वेदशब्देभ्य एवादौ पृथक्संस्थाश्च निर्ममे ॥ १।२१
कर्मणां च विवेकार्थं धर्माधर्मौ व्यवेचयत् ॥ १।२६

इति। "धर्मस्य प्रभुरच्युतः" इति च विष्णुसहस्रनामसु। एवं च धर्मस्यास्य सृष्टिप्रारम्भकालीनत्वं स्फुटीभवति। नव्या अपि धर्ममेनं प्राचीनमेव ब्रुवते। वेदवाङ्मयं ह्यतीव प्राचीनमिति। अतिप्राचीनस्यास्य धर्मस्यानृतस्रोतोऽद्यावधि सम्प्रदायपद्धत्या प्रवहदास्ते। भारतवर्षीयनृपैश्च तस्य संरक्षणं विहितम्।

सूर्यचन्द्रवंशोयास्तु क्षत्रिया राजानो महाभारतीयसमरं यावदासन्नेवेति स्पष्टमेतद्विज्ञायेत पौराणिकेतिहासमभ्यस्तवद्भिः। अतस्तैः कर्तव्यबुद्धया परिपालितो धर्मोऽपि तदवधि प्रकर्षेण समुल्लसन्नासीत्। भारतीययुद्धे भारतवर्षस्य समृद्धसौभाग्यवैभवस्य विध्वंसः सञ्जातः। तदुत्तरं चात्र सौभाग्येन साकं धर्मस्यापि नीचपथप्रवृत्तिः समारब्धा। धर्मप्रद्वेषिणः पुष्कला एव स्वीयमतमनुसृत्य प्रवर्तयन्तो नव्यं नव्यं पन्थानं नवीनधर्मस्य प्रवर्तकत्वेन विरेजिरे। राज्ञामपि धर्मप्रवृत्तिः क्रमशो नष्टा। तैर्दत्तहस्ताश्च विभिन्नाः पन्थानो धर्मसदृशा अभवन्। एवं च धर्मस्यास्य क्षणशः कणशश्च लोपः प्रवृत्तः। अतश्च धर्मरक्षायै कृतावताराः श्रीमच्छङ्कराचार्यादयः प्रतिवादिनो विजित्य पुनरपि धर्मप्रतिष्ठां चक्रुः। आचार्यैश्च धर्मसंस्थापनार्थं चतसृषु दिक्षु धर्मपीठानि स्थापितानि। प्रत्येकस्य पीठस्य कियान् धर्मशासनप्रदेश इत्यपि व्यवस्थापितम्। पीठाधीशाः सम्भाषणीया धर्मनिर्णयश्च तेषां मुखेनैव कारयितव्य इति प्रस्थापितो दण्डकः। इयं किल परम्परा स्वातन्त्र्यप्राप्तिं यावदासीदेव। यद्यपि गुरुण्डानां काले सर्वेष्वपि विषयेषु नव्यताशालित्वमागतं तथाऽपि तैर्भारतीयानां धर्मविषयकं स्वातन्त्र्यं नैवापहृतम्। प्राप्तस्वातन्त्र्ये तु भारते तदपहृतं दृश्यते। तथा हि। 'हिन्दुकोड बिल'संज्ञकस्य कस्यापि नियमसञ्चयस्य प्रमाणीकरणेन प्राचीनाः सर्वेऽपि धर्मशास्त्रग्रन्था निष्फलत्वं प्रापिताः। सम्प्रदायमनुसृत्य प्रवर्तमानास्तु दण्ड्याः सञ्जाताः। प्रातःस्मरणीयचरणारविन्दा महात्मानस्तु कारावासव्यतां गमिताः। यत्र तत्र मन्दिरादीनां पावित्र्यं शासननियमैः समुत्क्षिप्तम्। एवं च स्वतन्त्रदशायामपीदानीं पारतन्त्र्यनिर्विशेषमेव शिक्षणं प्रदाय संस्कारहीनत्वमेव सम्यगनुष्ठाप्यते बालानाम्। तिरोहितः सत्यवादः। क्वापि विलीनो विनयः। दूरमुत्पतिता श्रद्धा। तथापि केऽपि मुष्टिमेया एव तावत्सौभाग्यमहिम्ना भारतवर्षस्य सोढ़ापि दुःसहानि दुःखानि नैव मात्रयाऽपि परित्यक्तुमिच्छन्ति प्राचां सम्मतां मर्यादाम्। तदेतत्पुण्यफलं पूर्वेषां धर्मजीविनां तपसाम्।

ये चाचार्यचरणाः पीठान्यलमकुर्वन्, तैः किल स्वाधिकृतप्रदेशेषु मुहुर्मुहुः सञ्चारं विधाय जागृतिमापादिता प्रजानां मनःसु धार्मिकी भावना। यदर्थमेव श्रीमदाचार्यप्रतिमूर्तीनामासीदावश्यकत्वं समनुष्ठितं किल तत्तत्तैस्तैः पीठाधिपतिभिः पूर्वं येनेदानीं को नाम धर्मः, का च तस्यावश्यकता, कथं च नामायमुपासितव्य इत्याद्यधिगन्तुं प्रभवामः। (क्रमशः)

# पिता-पुत्र-गर्दभ-कथा

आदाय पुत्रं वयसा नवीनं कश्चित्प्रवीणो नगरं यियासुः।
हट्टस्य मार्गं सरलं गृहीत्वा गृहात्प्रतस्थे सह गर्दभेन ॥१॥
तान् वीक्ष्य कश्चित्पथिको जगाद, "भो वृद्ध, मूर्खः प्रतिभासि मे त्वम्।
स्थितेऽपि यत्त्वं सबले खरेऽस्मिन् मार्गं पदाभ्यां ससुतः प्रयासि ॥२॥
श्रुत्वा वचस्तत्स खरस्य पृष्ठे संस्थाप्य पुत्रं चलितोऽस्य पार्श्वे।
गतो न यावत्कतिचित्पदानि सुतं समाहूय जगाद चान्यः ॥३॥
"पद्भ्यां प्रयान्तं पितरं प्रवृद्धं दृष्ट्वापि किं न त्रपसे युवा त्वम्।
अहो हि कालस्य कलेः प्रभावो येनात्र यूनां विपरीतरीतिः" ॥४॥
ततः स वृद्धः खरपृष्ठतस्तं सुतं वतार्य स्वयमारुरोह।
गच्छन्तमेवं प्रविलोक्य तं तु काश्चित्तरुण्यो व्यथिताः प्रचख्युः ॥५॥
"पितापि पुत्रं प्रति विप्रतीपो यतोऽसि धिक् त्वां करुणाविहीनम्।
मातास्ति नूनं भवने न यूनस्तस्मात्सुतेऽस्मिन् विगतादरस्त्वम्" ॥६॥
वृद्धो विमूढो वचनेन तेन पुत्रं समारोपयदाशु पश्चात्।
खरोऽपि भारद्वयमेकसंस्थं वहन् प्रयातो मृदुमन्दगत्या ॥७॥
तथाविधांस्तानवलोक्य कश्चिद् दयार्द्रचित्तः पुरुषो जगाद।
"भो भोः कथं निर्घृणकर्मणा त्वं मूकं पशुं स्वं प्रणिहंसि, मूढ" ॥८॥
ततोऽवतीर्य द्वयमेव पृष्ठात् खरस्य पादांस्तृणबन्धनेन।
बद्ध्वैकदण्डे तमुवाह कष्टात् कुर्वन्तमुग्रं विकटं विरावम् ॥९॥
आबालवृद्धं पुरुषाः स्त्रियश्च तद्वीक्ष्य हास्यं जहसुः समुच्चैः।
बाला युवानः करतालिकाद्यैर्मार्गं कियन्तंचन नु प्रयाताः ॥१०॥
गन्तव्यमार्गे स्थितमेकसेतुं यावत्तितीर्षू समुपस्थितौ तौ।
खरोऽपि तावत्त्रुटितस्वबन्धो निम्नस्थनद्याः सलिले पपात ॥११॥
तस्याः खरस्रोतसि तं चिराय लयं गतं वीक्ष्य खरं स वृद्धः।
धिक्कृत्य भाग्यं स्वधियं तथा च चक्रन्द सेतूपरि सन्निविष्टः ॥१२॥
कश्चित्सुबुद्धिः सहयात्रिकोऽथ विज्ञातवृत्तस्तमुवाच वृद्धम्।
यः सर्वतुष्ट्यै विदधाति यत्नं कस्यापि तोषं न स वै विधत्ते ॥१३॥
वेदा विभिन्नाः स्मृतयोऽपि भिन्ना नास्ते मुनिर्यस्य मतं न भिन्नम्।
एषैव चित्रा गतिरत्र लोके क्षुद्रेऽस्ति कर्मण्यपि नैकमत्यम् ॥१४॥
तस्मान्न कुर्यात्परबुद्धिनीतः कदापि कार्यं सुफलं यदीच्छेत्।
स्वयैव बुद्ध्या सुविचिन्त्य कृत्यं सदा विधेयं सुधिया जनेन" ॥१५॥

## कुम्भकर्णे भकारोऽस्ति

### An Hopelessness

आङ्गलसम्पादिते Sunday Statesman पत्रे (March 5, 1961, p. iv, col. 4) A Ballad of Love पुस्तकस्य समालोचने दृष्टम्—But there is an hopelessness about "A Ballad of Love" इत्यादि।

historian : an historian } : : hopelessness : $x$
historical : an historical }

$\therefore$ $x$ = an hopelessness !

---

## ईषण्मात्र ! कणक !

'रविवारेर युगान्तर"पत्रे (५६ मार्च १९६१) "रवीन्द्रनाथ ओ सेकालेर लेखकगण" प्रबन्धे दृष्टम्—ईषण्मात्र इङ्गिते इति।

षट् एव : षण्मात्रम् : : ईषदेव : $x$

$\therefore$ $x$ = ईषण्मात्रम् !!!

तत्रैव दृष्टं "कणिका कणककणिकार न्याय ज्योतिर्मयी"ति।

रणरणकशब्दे मूर्धन्यणद्वितयं वर्ततेऽत एव कणककणिकाशब्देऽपि मूर्धन्य-णकारद्वयेन भवितव्यम् !!!

---

## अधिकन्तु न दोषाय

Statesman पत्रे (March 18, 1961, पृः ५, स्तः ४) दृष्टम्—Then one or two members *would* leisurely *walked* into the room इति।

---

## उश्चारणम् !!!

"रविवासरीय आनन्दबाजारपत्रिका"याम् (Sunday, March 5, 1961) Agatha Christie महोदयायाः कथाया अनुवादे पुनः पुनर्दृष्टम्—"पयरट्" इति। Poirot शब्दस्य यथार्थमुच्चारणम् पोआरो इति। बहुभिर्वृत्तान्तपत्रपाठकैः Reuter रिउटार इत्युच्चार्यते। शुद्धमुच्चारणं रयटार् इति।

तस्या एव कथाया अन्ते जिमिं सम्बोध्योक्तम्—"मनामी" इति। Mon ami इत्यस्योच्चारणम्—"मनामि" इति। Mon amie इत्यस्योच्चारणम्—"मनामी" इति। न जानीमः किमिति ग्रन्थकारेण जिमिः स्त्रीत्वमापादितः।

---

# द्रविडविद्रावणम्

[ आशुतोषशर्मा विश्वासो वेदशास्त्री ]

अयि वाचकमहाभागाः !

नैवं प्रेक्षावद्भिः भवद्भिः प्रमदितव्यं प्रबन्धपाठात् पूर्वमेव यदहं काजागामसम्प्रदाय-प्रतिपक्षीयो भारताद् द्राविडविद्रावणव्रतं कृतवानस्मीति, परन्तु कैरपि पाश्चात्त्यपण्डित-प्रकाण्डैः संस्कृतशब्देषु यत् द्राविडप्रभवत्वं प्रोद्भाव्यते तदपाकर्त्तुं कृतप्रयत्नोऽस्मि। यत्सत्यं केचन संस्कृतगौरवासहिष्णवो भाषातत्त्वपरिशीलिनः पाण्डुरोगपरिक्लिष्टाः सर्वत्र पीतमिवास्थानेष्वपि द्रविडप्रभावमेव प्रकटयन्ति पुस्तकेषु। प्राज्ञाः, पश्यत तावत् "उलूखल"पदम्। उक्षतरणविश्वविद्यापीठप्राध्यापकैः T. Burrow महोदयैः "The Sanskrit Language" इत्यभिधाने ग्रन्थे "a list of the most important and certain of the Dravidian loans" (३८० पृष्ठे) इति प्रसङ्ग एव-मुपनिबध्यते—"ulūkhala' 'mortar' : Ta. ulakkai 'pestle', Ma. ulakka, Ka. olake 'id.', Te. rokali 'a large wooden pestle." इति। तत्रैवं पृच्छामि—'mortar' 'pestle' इति पदार्थयोरभेदो भेदो वेति। 'pestle' इति पदस्यार्थः पेषणसाधनं वस्तु ( मुसलम् ) इत्येव कोशेषु दृश्यते। एतच्च संस्कृतपिष-धातुप्रभवमेवेत्यपि पण्डितानामपरोक्षमेव। यद्येवं तर्हि व्युत्पत्तिविधौ महता डम्बरेण कन्नडतामिलतेलेगुतोलनेन दृष्टान्तदार्ष्टान्तिकवैषम्यवैरस्यमेव समापतितम्! द्राविडभाषाशब्दसारूप्यमात्रेणैव यद्येवंविधो विचारस्तर्हि बह्वीभिरार्य्यावर्त्त भाषाभिः किमपराद्धं, यत्र शब्दसारूप्यमर्थसारूप्यञ्चोभयमेवोपलभ्यते। तथाहि—वङ्ग उखल् ( उकारलोपेन ) 'खल्', असमीया—उखली, हि० उखली पूर्ववङ्ग—गाइल् उगाइल् ( खकारस्थाने गकारः ) अस० खालै, व० खालुइ ( तुल० माछेर खलइ ) मत्स्यकरशुल्कमित्यर्थः। 'धोवार खला' ( washing basin ) इत्यपि पूर्ववङ्गेषु प्रयुज्यते। एवं प्रायः सर्वत्रैवाद्याक्षरलोपेन पदमिदं प्रयुज्यमानं परिदृश्यते। किञ्च सन्दृश्यते निरुक्ते दैवतकाण्डे नवमाध्याये—"अथ यानि पृथिव्यायतनानि सत्त्वानि स्तुतिं लभन्ते तान्यतोऽनुक्रमिष्यामः" इति प्रतिज्ञाय 'उलूखल'-पदं व्याकृतम्। तत्र च "यच्चिद्धि त्वं गृहे गृहे उलूखलक युज्यसे। इह द्युमत्तमं वद जयतामिव दुन्दुभिः॥" इति ऋक्-संहितामन्त्रस्तथा—"उरुकरं वैतत्तदूलूखलमित्याचक्षते परोक्षेणेति ब्राह्मणम् इति च ब्राह्मणवचनमुदाहरणत्वेनोपन्यस्तम्। तथा—'अथातोऽष्टौ द्वन्द्वानि उलूखलमुसले इत्यपि तत्रैवाग्रे ( ९।३५।१ ) दृश्यते। तत्र संहिताब्राह्मणगताः शब्दाः द्राविड-भाषात एव प्राचीनकाले गृहीता इत्याग्रहश्चेत्, तत्र प्रमाणाभावः, वैदिकभाषात एव

द्राविडशब्दाः केचन नीता इत्यस्मिन् पक्षेऽपि बाधकप्रमाणाभावः। वस्तुतस्तु ग्रन्थकृता संस्कृतशब्देषु 'austro-asiatic' प्रभावप्रसङ्गे ( पृः ३७९ ) यदुपन्यस्तं निम्नोक्तं वचनं—"It is not possible to estimate how much of the Indo-Aryan vocabulary will eventually prove to be derived from this source"—अर्थात् अन्ततो भारतीयभाषागताः कियन्तः शब्दा एतन्मूलोद्भूतत्वेन निर्बाधप्रमाणप्रतिपन्नाः स्युस्तदाकलयितुमशक्यमिति, तद् द्रविडभाषामूलकत्वविचारेऽपि सममेव प्रयोज्यम्।

'शठ' इति पदनिर्वचनप्रसङ्गे "cf. Ka. coṭṭa, soṭṭa, 'crookedness', saṭi, seṭe, seḍ3, Te. coṭṭa" इत्यनुरूपशब्दा उदाहृता ग्रन्थकृता। परन्तु हिन्दीवङ्गभाषयोरपि 'चोट्टा' इति पदं विद्यमानं नैव नयनविषयतां नीतम्। तस्मादत्रापि तस्यैवंविधसिद्धान्तो भ्रमपक्षे निक्षेप्तव्यः।

'वलय' (bangle) शब्दविचारे Ta. vaḷai, Ka. baḷe; baḷasu 'to go round, encircle, compass' इति दृष्टान्ता द्रविडीया दर्शिताः। परन्तत्र 'वाला' पूर्ववङ्गप्रसिद्धानि 'वला' (to wrap, to roll up) वलन् (movement) इति पदानि नैव प्रेक्षितानि।

शवः (corpse)। अत्र Burrow महोदयेनैतल्लिख्यते—Ta. cā 'to die', cāvu 'death', Ka. 'sa' to die'; sāvu 'death' etc. इति। तत्रैवं जिज्ञास्यते—'शव'शब्द आर्यवंशजो न वेति। अस्योत्तरं यास्केनैव प्रदत्तम्—शवतिर्गतिकर्मा कम्बोजेष्वेव भाष्यते। विकारमस्यार्येषु भाषन्ते शव इति। (२।२) यस्य व्याख्या दुर्गाचार्यकृता—आर्येषु जनपदेषु अस्यैव शवतेर्विकारं भाषन्ते मृतकनामधेयभूते प्रेते प्रयुज्यते। तस्मादस्माभिरनिच्छद्भिरपि स्वीकरणीयं यच्छवशब्द आर्याणां विदित आसीदेव। महाभाष्येऽप्येतद्वचनं दृश्यते।

शूर्पः (३८६ पृः) 'a winnowing basket or fan'; Ka. tūru, tūruvike Tu. tūpu, tūpuni 'to winnow', Te. tūrpiḍi tūrpettu"—एवं ग्रन्थकृता द्राविड़पदानि दत्तानि। यद्यपि "कुला" इत्येतत्समानार्थं देश्यमेव पदमित्यभ्युपगम्यतेऽस्माभिस्तथापि प्रागुक्तोदाहरणेषु शब्दसादृश्यं कीदृशं दृश्यते वेति जिज्ञासा समुदेति। एतानि सर्वथा द्राविडजत्वमेवास्य शब्दस्य प्रमापयन्ति न वेति विज्ञा एव विवेचयन्तु। भारतीयमतेन 'शूर्प' इति वैदिकमेव पदम्। यास्ककृते निरुक्तेऽपि दृश्यते—"स्यं शूर्पं स्यतेः। शूर्पमशनपवनं श्र्णातेर्वा" स्यात्। यस्मादसौ गृहीत्वा विवाहे लाजानावपति तस्मात् स्याल (श्याल) इत्युच्यते। शूर्पमशनपवनं तेन ह्यशनं पूयते।

शृणातेः ( क्र्या० प० ) वा तद्धि शरमयं भवति। अद्यापि हिन्दुविवाहोत्सवे शूर्पेणैव कन्याया भ्राता लाजानग्नौ प्रक्षिपति।

मल्लिका (३८५ पृष्ठे ) 'Jasmine', Ta. mukai, Ma. mulla, Ka. molle, 'id'—इति दृश्यते। परन्तु वङ्गभाषायां मल्लिका संक्षपरूपेण 'मालि' इति लभ्यते यथा—"भूँइमालि, काठमालि, सन्ध्यामालि" इत्यादि। तर्हि केवलद्रविडत्वमेवेति वचनं साहसमात्रमाभाति।

बिल्व 'Aegle marmelos' Ta viḷā, viḷavu, veḷil, Ma. viḷā, Ka. veḷ.val, Te. velāga 'id'—इति ३८५ पृष्ठे वर्त्तते। परन्त्वार्यावर्त्त भाषासु 'बेल' इति पदं प्राचीनकालादेव प्रवर्त्तते तर्हि द्राविडप्रभूतमेवेति वचनं मिथ्याभिमान-ग्रहग्रस्तत्वस्यैव फलम्। यतः किलैतिहासिकानां मतेन शिवोऽनार्यदेवस्तस्मात् तत्प्रियफलमपि कदाचिदनार्य्य मेव स्याद्!

मुकुल 'bud' Ta. Ma. mukir 'a bud', Ta. mukai 'to bud', Ta. mokkul, Ka. mogul, moggu, mogge, Kui 'mogo' इति ३८५ पृष्ठे। सर्वमेतद् द्रविडत्वाविष्करणं नैव प्रमाणपदवीं प्राप्नोति। मउल् ( प्रा० ), बउल् बोल् ( तु० आमेर बोल् ) 'मुकलि 'to bud' ( असमीया ) from मुच्, इति पदानामार्य-भाषासु प्रयोगादिति शम्।

---

# Old Indo-Aryan words in New Indo-Aryan

[ *The Calcutta Review*, Jan. 1953 ]

DR. KSHITISH CHANDRA CHATTERJI, M.A., D.LITT.

*Chāttrī* versus *Chāttrā*

On the night of the last Republic Day Bengali ears were startled by the sound of 'chāttrā' coming from the aerial region. Accustomed as we have been from our childhood to the word 'chāttrī', 'chāttrā' came as a rude shock from the voice of a well-known authority on the Bengali language and set us furiously thinking as to whether we Bengalis are right in speaking and writing 'chāttrī' or our brethren in Bihar and U.P. in speaking and writing 'chāttrā.' Nobody would have bothered about the word a century ago, but since the number

of girl students is increasing by leaps and bounds every year, it is a matter of some moment to the educationist, no less than to the layman, to ascertain which is the correct word to denote a woman student—'chāttrī' or 'chāttrā'. As *chāttra* is a purely Sanskrit word, let us first of all try to find out the correct form according to the canons of Sanskrit grammar. Pāṇini derives *chāttra* from *chattra* with the secondary suffix *-ṇa*. Now if the suffix had been *-aṇ* instead of *-ṇa*, the feminine suffix would undoubtedly have been *-ī*. But since the suffix is *-ṇa* the appropriate feminine suffix would appear to be *-ā*, and not *-ī*. It may, however, be pointed out that Pāṇini enjoins *ṇa* instead of *aṇ* to prevent the application of the rule *aṇo dvyacaḥ* iv.i. 156 according to which the suffix *-phiñ* is added to disyllabic words formed with *aṇ* in the sense of 'descendant'. So in the sense of *chāttrasya apatyam pumān* (the male child of a *chāttra*) we should have *chāttri* and not *chāttrāyaṇi*. In fact Pāṇini himself uses the form *chāttri* in his rule *chāttryādayaḥ śālāyām* vi.2.86. On the other hand he has framed the rule *kārmas tācchīlye* vi.4.172 to show that the final *an* of the word *karman*, which is included in the *chattrādi* group, is to be elided before the suffix *-ṇa*, added according to *chattrādibhyo ṇaḥ* iv.4.62. Now since the suffix is *ṇa* and not *aṇ*, the *ṭi*-portion (the last vowel along with the final consonant, if any) would have been elided regularly according to *nas taddhite* vi.4.144, because the rule *an* vi.4.167 enjoins that before the suffix *aṇ* a stem ending in *an* remains intact, that is, does not drop its *ṭi*-portion, and the suffix here is *ṇa* and not *aṇ*. This clearly shows that according to Pāṇini there was the likelihood of this rule *an* applying here even though the suffix is *ṇa* and not *aṇ*, for otherwise why should Pāṇini go out of his way to frame the additional rule *kārmas tācchīlye*, when the ordinary rules were enough for the purpose? Therefore Patañjali, the final court of appeal on matters relating to Sanskrit grammar, observes that by framing the rule *kārmas tācchīlye*, when there was not the least necessity for doing so, the author indicates that the grammatical operations due to *aṇ* will take place

even though the suffix is *ṇa.* Then Patañjali asks what purpose is served by this indication and answers: forms like *caurī* and *tāpasī* are justified.[1] Thus according to Patañjali even though the suffix is *ṇa*, the feminine suffix will be -*ī* and not -*ā*. Kaiyaṭa[2] explains that it is clear from the statement of Patañjali that we should read *chattrādibyo'ṇ* instead of *chattrādibhyo ṇaḥ* for the sake of brevity, since no useful purpose is served by *ṇa*. Kaiyaṭa is wrong, for the suffix *ṇa* prevents the application of the rule *aṇo dvyacaḥ* and produces forms like *chāttri*. Nāgeśa [3] in his Uddyota rightly finds fault with the sweeping statement of Kaiyaṭa, but the ground adduced by him is not sound. He thinks the plural in Patanñjali's expression is significant and asserts that by the expression Patañjali means (i) the feminine suffix -*ī*, (ii) the patronymic suffix -*phiñ* and (iii) the elision of the *ṭi*-portion. He says a jñapaka (indicatory rule) leaves the field free for exceptions, so that we may have a form like *chāttrā* side by side with *caurī* and *tāpasī*. Probably Nāgeśa thought that since Patañjali mentioned *caurī* and *tāpasī* and was silent about the principal word *chāttra*, it might be concluded that *chāttra* would form its feminine with *ā*; but Patañjali does not mention *chāttrī* for the simple reason that it was not much used in the feminine.

Devanandin in his Jainendra Vyākaraṇa and Śākaṭāyana in his Śabdānuśāsana deliberately changed the suffix to *aṇ* for the sake of the feminine suffix -*ī*.

---

[1] कार्मस्ताच्छील्ये ६।४।१७२। किमर्थमिदमुच्यते ? नस्तद्धिते इत्येव सिद्धम्। न सिध्यति। अनणीति प्रकृतिभावः प्रसज्येत। अणीत्युच्यते, णश्चायम्॥ एवं तर्हि सिद्धे सति यन्निपातनं करोति तज् ज्ञापयत्याचार्यस्ताच्छीलिके णेऽणकृतानि भवन्तीति। किमेतस्य ज्ञापने प्रयोजनम् ? चौरी तापसीति। अणन्तादितीकारः सिद्धो भवति। महाभाष्यम्।

[2] एवं च छत्त्रादिभ्योऽण् इति लाघवाय कर्तव्यम् णवचने प्रयोजनाभावात्।

[3] भाष्ये अणन्तादितीकार इति। अणो द्व्यच इति फिञपि फलान्तरं बोध्यम्। अत एवोपक्रमभाष्येऽणकृतानि भवन्तीति बहुवचनप्रयोग इत्याहुः। एवं चेति। ज्ञापके हि ज्ञापकसिद्धस्यासार्वत्रिकत्वाच्छात्रेति सिध्यतीति चिन्त्यमिदमित्यन्ये।

Candra and his follower Bhoja strictly follow Pāṇini and have the suffix *-ṇa*. They include *caura* and *tāpasa* in the "gaurādi" list, but leave out *chāttra*, so that according to them the feminine of *chāttra* would appear to be *chāttrā*.

Hemacandra follows Patañjali, Devanandin and Śākaṭāyana and is the first grammarian to assert definitely that the feminine of *chāttra* is *chāttrī*.

The Saṁkṣiptasāra does not include *caura* and *tapas* in the *chattrādi* group, but enjoins the suffix *-ṭaṇ* for them (Taddhita 790). Becuase of the indicatory ṭ the feminine of *chāttra* would be *chāttrī* according to this school of grammar.

Padmanābhadatta in his Supadma Vyākaraṇa gives *chāttrā* as the feminine of *chāttra*, but in his Supadmavivaraṇa-pañcikā says that according to the school of Pāṇini the correct form is *chattrī*.[1]

The Harināmāmṛta prescribes a suffix with an indicatory *ṭa* so that the feminine would be formed with *-ī* and the form will be *chāttrī*.

Thus according to Patañjali, Jayāditya, Vāmana, Kaiyaṭa, Jinendrabuddhi, Haradatta, Śākaṭāyana, Kramadīśvara, Hemacandra, Bhaṭṭoji, Viṭṭhala, Jīvagosvāmin and others the form in the feminine would be *chāttrī*, while according to Candra(?) Bhoja(?), Padmanābhadatta, Rama Tarkavāgīśa and Nāgeśa the form is *chāttrā*. The latter evidently take their stand on the silence of the Bhāṣyakara regarding *chāttrī*. But it is not safe to proceed in this way, particularly when the earlier grammarians are unanimous in holding that the feminine suffix would be *-ī* and do not mention any exception. It is therefore clear that according to the most authoritative grammarians the correct form is *chāttrī* and not *chāttrā*.

The form *chāttrī* is also quite in keeping with the genius of the language. One instinctively feels that since the feminine of *pātra* is *pātrī* and not *pātrā*, the feminine of *chāttra* should also be *chāttrī* and not *chāttrā*. No doubt we have *yātrā* and *mātrā*, but these are abstract nouns and so do not come into the picture at all.

---

1. स्त्रियां छात्री चौरी तापसी ।

# प्रकरणे शकारः

[ श्रीशिवप्रसादभट्टाचार्यः ]

एकत्र नयविनयभूषणस्य कृतवेदिनो गोपालदारकस्यार्यकस्य राज्यप्राप्तिरपरत्र पूर्वतर-नृपतेः पालकस्य शिष्टप्रजापीडनपरस्य स्वकीयानूढश्यालेन दुर्वृत्तेन संस्थानकेन स्वामिभट्टारकादिपदलाञ्छनव्यञ्जनेनात्मानं भगवन्तं वासुदेवं मन्यमानेनादौ पौरवारयोषिन्मुख्याया-श्चारित्र्यमहिम्नाऽसमाया अभिसारप्रस्तावाभियोगः कवेरलीककुलाभिमाने प्रसक्तिं तस्य चाडम्बरव्यसनितां तस्मिन्पात्रे पुरःसरत्वेनावेदयति । तच्चानवरतमेव तस्यैव शकारस्य 'दलिद्दचालुदत्तके शहआलणादवे कडे हग्गे उण पलाशे भणिदे, किंशुके वि ण कडे' 'तं कधं हग्गो एवं मल्लकप्पमाणेहिं कुलेहिं जाते अकज्जं कलेमि' 'एवं वड्डके मल्लक-प्पमाणाह कुडे हग्गे जादे । लाअशशुले मम पिदा लाआ तादस्स होइ जामादा । लाअशिअले हग्गे ममावि वहिणीवदो लाआ ॥ इत्याकारैर्हीनजातेरपि कुलप्रकर्षं प्रायः सर्वेषु स्थलेषु 'किं कुलेनोपदिष्टेन शीलमेवात्र कारणमि'ति पात्रमुखात् कवेः प्रत्युत्तरमुपभोग्यं भवति । मल्लकाः खलु कौटिल्यादिपरिगणिताः स्वतन्त्रतन्त्रा योधगणा ये शौर्यगरिम्णा प्रथिता बभूवुः । शकारप्रसङ्गे तेषां निर्देशचर्चाऽ-स्माभिरन्यत्र* कृता । मृच्छटिकादौ वणिक्तन्त्रप्रधानायाः समाजस्थितेर्वार्ता वरीवर्ति । सौगतीये जातकसाहित्ये बृहत्कथाऽऽदौ प्रत्ने कथासाहित्ये चैवंविधैव व्यवस्थोपलभ्यते । मल्लकादिगणानामाधिपत्योदन्तोऽपि न तेनासामञ्जस्यं द्योतयतीति कुलगरिमख्यापनार्थं प्रवृत्तस्य मूर्खप्रायस्य शकारस्य मन्तव्यराशिः । कुलाश्रया प्रतिष्ठा विद्याविनयादिगुणग्राममूला वैश्यत्यलोकाभिमानस्याकिञ्चित्करत्वं सूचयितुं शकारस्य वैदग्ध्याभिमानिनो महाभारताद्याख्यानोद्देशव्यसनिनो वा तत्र तत्र विषयेऽत्युत्कटमज्ञानं तदाश्रयमपार्थव्यर्थाद्यालङ्कारिककृतलक्षणानां दूषणानां बाहुल्यमित्यवधेयम् । ए पूर्वतरकविसमुत्प्रेक्षितवणिक्चेष्टितादिवर्णन इवान्तरवाक्यान्तरे संलापभङ्ग्यामपि विप्लवं विदधद्हार्यैरासैः प्रसिद्धैर्नायकनायिकादिगुणैर्युक्तं प्रकुर्वत् प्रकरणमन्वर्थं सामाजिकमनो-विनोदस्थानमिति नात्र विप्रतिपत्तिः । एतच्च भणितिवैचित्र्यादाख्यानवस्तुनो विसदृशसम्मर्दादेव रसिकमनांस्यावर्जयतीति स्वकीयालोकः कुलदम्भप्रकाशस्तस्या-न्तरङ्गतयैव सुस्थितः । ( क्रमशः )

# विशेषतो द्रष्टव्यम्

मञ्जूषाया आषाढाङ्के सुमतिप्रार्थन-काव्ये चतुर्थे श्लोके 'विनिन्दुकाः' इति पठनीयम्, अष्टमे च 'सुविक्षणददा नृणां त्रिविधतापहीनाः' इति ।

---

* 'The word Mallaka in Mṛcchakaṭika' Journal Oriental Institute, Banda VIIAnm. 1903.

Vol. IV (about 400 pages)—29 storiettes, hymns from the Rigveda with commentary, छात्री versus छात्रा, पतत्र versus पत्र, Goethe's maxims (original German with Sanskrit translation), Saratchandra's Niṣkṛti, on Pāṇini's क्स, महाभाष्य, विश्रम versus विश्राम, सेवका versus सेविका, अन्योन्य, 11 humorous skits. Rs. 10/-.

Vol. V (about 400 pages) 16 storiettes, 4 long stories, 12 poems, humorous skits, discussions on परःशत, भ्रातृव्य, सूनृता, आङो दाऽनास्यविहरणे, on the Anubandhas, on grammatical gender, Sanskrit equivalent of "horse-power", Tagore's poems, Language as fossil history, on Sāyaṇa's Bhāṣya. **The Śivasūtras and the Sanskrit Alphabet**, Patañjali's Mahābhāṣya, Hymns from the Avesta, etc., etc. Rs. 10/-

Vol. VI (about 400 pages) 5 storiettes, 2 long stories, 1 Bhāṇa, Derivations of अश्वतर and पुत्र, आनोभद्रीयसूक्त with various commentaries, explanation of the Madhusūkta, Kālidāsa and Bhavabhūti, Mahābhāṣya (pp. 33-136), Rasamañjarī, etc., etc. Rs. 10/-

Vol. VII (about 400 pages) **Technical Terms and Technique of Sanskrit Grammar—Samāsa, Kāraka and Vibhakti.** Kālidāsa and Bhavabhūti (5 instalments). Was Pāṇini a Communist? Kālidāsa and Shakespeare. Greek Proverbs (64 pages). On तरप् and तमप्. On सूनृत and भ्रातृव्य. Meaning of शफोरू. 9 storiettes, 3 long stories, मृगया in Sanskrit Drama, etc., etc. 10/-.

Vol. VIII (about 200 pages) Short stories, long stories, humorous skits, महाभाष्यरत्नमञ्जूषा. Meanings of Sanskrit proper names. Sanskrit stanzas and their parallels from European languages. Sanskrit equivalent of bread. Notes and Queries. Tagore's short story. On देवानांप्रियः. On the derivation of कार्मुक, On Abhinavagupta. **On Śārṅgarava and Śāradvata.** Tagore's Urvashi. Common Errors. **So-called Solecisms of Kālidāsa.** Rs. 3/8/-.

Vol. IX (nearly 300 pages). **So-called Solecisms of Kālidāsa.** Literary Parallels. Common Errors. Technical Terms of the Mugdhabodha. Tagore's story and poems. Contradiction in Terms. On the correct derivation of प्रवीण, सिकता etc. वाग्मी vs. वाग्ग्मी. बिभीषण versus विभीषण. On फ, ढ, ख, छ, घ in Pāṇini. A new stanza from Vyāḍi's Saṁgraha. Meaning of रद विलेखने. सतीर्थ्य versus सतीथ. The Anubandhas र, क, प, उ, ष in Pāṇini, **The Technical Terms—Upasarga, Nipata, Karmapravacaniya, Gati, etc. Apurva in Mimamsa.** In Defence of the Padapāṭha. On ऊकालोऽज्झस्वदीर्घप्लुतः. On वामदेव्यं साम. रेफ versus रकार. Rs 6/-

MANJUSHA ( Sanskrit Monthly Magazine )
Registered I. ›. C 3278



Printed and published by Sri Visvanath Chatterjee, M.A. from Bhupendra Bose Avenue, Calcutta-4. Printed at the Gupta Press, 37/7 Baniatola Lane, Calcutta-9.

चन्द्रशेखर चन्द्रशेखर चन्द्रशेखर पाहि माम्।
चन्द्रशेखर चन्द्रशेखर चन्द्रशेखर रक्ष माम्॥

श्रीशिवः शरणम्

चतुर्दश-वर्षे ] June, 1960 [ दशमी संख्या

# मञ्जूषा

सम्पादकः—श्रीक्षितीशचन्द्र-चट्टोपाध्यायः

## Sri-Yavana-Haridasa

BY

**Dr. Jatindra Bimal Chaudhury**, Ph. D.

*Office* : 8, Bhupendra Bose Avenue, Calcutta—4.
Minimum Annual Subscription : Rupees Six only.
Foreign—Twelve shillings.
Single copy : One Rupee.

# मञ्जूषाया नियमावली

मञ्जूषाया वार्षिकं मूल्यमवरतो रूपकषट्कम् । आश्विन (September)-मासतो वर्षारम्भः । ग्राहकैर्वर्षस्य प्रथमसंख्यात एव ग्रहीतव्यम् ।

२। प्रतिसौरमासं दशमदिने (आङ्ग्लमासस्य चतुर्विंशे दिवसे) 8, Bhupendra Bose Avenue, Calcutta 4 इत्यतो मञ्जूषा प्रकाश्यते ।

३। मञ्जूषायास्तावद् भागत्रितयं वर्तते । तत्र प्रथमे भागे देवभाषां प्रविविक्षूणां कृते सरलाः श्लोका आभाणका आख्यानानि नाटकानि च सन्निवेश्यन्ते । द्वितीये भागे दार्शनिका निबन्धा व्याकरणालङ्कारादीनां विमर्शः पाठविचारो जिज्ञासा मीमांसा च प्रकाश्यन्ते । तृतीये भागे सानुवादाः पारसीकानां गाथाः साङ्गलानुवादं निरुक्तं च प्रकाश्यन्ते ।




**श्रीविश्वनाथ-चट्टोपाध्यायः ।**

Phone :—55-4049 ८, भूपेन्द्र वसु आभेन्यु, कलिकाता ४

महाप्रभु-हरिदासम्

डक्टर-श्रीयतीन्द्रविमल-चतुर्धुरीण-विरचितम्

# The Mahaprabhu-Haridasam

( A new Sanskrit drama on the life of Haridasa, one of the greatest Devotees of Sri Krishna Chaitanya Mahaprabhu of Bengal )

By

**Dr. JATINDRA BIMAL CHAUDHURI,**
Ph.D. ( London ), Kavyatirtha
Secretary, Government Sanskrit Siksha Parishat, West Bengal.
( Formerly, Principal, Govt. Sanskrit College, Calcutta ; Head of the Dept. of Sanskrit, Presidency College, Calcutta ; Lecturer, London University ).

*Foreword by*

**Dr. SATKARI MOOKHERJEE,** M. A. Ph. D.
Director, Nalanda Research Institute.

**Calcutta, 1960 (June)**

# Some other works of
# Dr. J. B. Chaudhuri

1. Contributions of Women to Sanskrit Literature
   in seven Volumes Rs. 70/-
2. Muslim Contribution to Sanskrit Literature
   in three Volumes. Vol. I : Rs. 5/- Vol. 2 : Rs. 6/- Vol. 3 : Rs. 12/-
3. Muslim Patronage to Sanskrit Learning
   Vol. I Rs. 8/-
4. Sanskrit Duta Kavya Samgraha
   in 8 Vols. Rs. 20/-
5. Sanskrit Historical Kavyas
   in six Vols. Rs. 50/-
6. Sanskrit Anthological Works
   (1) Rasika-Jivana Rs. 7/8/-. (2) Padyaveni Rs. 10/- (3) Padyamrita-tarangini Rs. 10/-. (4) Suktisundara Rs. 3/-. (5) Sabhyalankaraṇa Rs. 4/-
7. Sanskrit Songs
   of Dr. J. B. Chaudhuri, with Bengali translation by Dr. Roma Chaudhuri, Principal, Lady Brabourne College.
8. Position of Women in Vedic Ritual Rs. 12/-
9. Sanskrit dramas by Dr. J. B. Chaudhuri
   1. Bhakti-Visnupriyam Rs. 1-8-0
   2. Mahaprabhu-Haridasam Rs. 3-0-0
   3. Niskincana-Yasodharam Rs. 4-0-0
   4. Sakti-Saradam Rs. 3-0-0
   5. Priti-Vishnupriyam Rs. 2-8-0

etc. etc.

## CONTENTS



---

### Sankrit Text

# Foreword

I have great pleasure in introducing to the lovers of Sanskrit Learning a new Devotional Sanskrit Drama from the pen of my beloved pupil Dr. Jatindra Bimal Chaudhuri, Secretary to Govt. Sanskrit Siksha Parishat, West Bengal.

Dr. Chaudhuri's Sanskrit dramas have, indeed, come to stay and gained within a few years immense popularity throughout India and outside. Dr. Chaudhuri and his celebrated wife Dr. Roma Chaudhuri and their Prachya Vani Sanskrit Troupe have visited many parts of our vast country during the last few years, such as Delhi, Puri, Madras, Pondicherry, Bangalore, etc. and earned laurels by staging beautiful Sanskrit dramas, composed by Dr. Chaudhuri.

From a study of the dramas composed by Dr. Chaudhuri, and particularly, after witnessing the plays already staged, one at once feels that Dr. Chaudhuri is an ardent votary of the Mother Principle of India. Thus, he has composed Sanskrit dramas on the Lilasanginis or Holy Consorts of all the Yugavataras or Incarnations of God in different Yugas, Treta, Dvapara and Kali, viz. Sita, Radha, Yasodharā Gopa, Visnu-priya and Saradamani. His Dramas on Haridasa and Raghunath Das have also been very highly spoken of by all competent critics as well as numerous lovers of Sanskrit Learning in the country. Dr. Chaudhuri's new venture Mahimamaya-Bhāratam, a Sanskrit drama on the Irrigation Policy of India from Vedic times down to to-day, is not only striking but also of an abiding interest, adding as it does a fresh leaf to the History of Sanskrit Dramatic Literature.

What I admire most about Dr. Chaudhuri's Sanskrit dramas is the unparallelled beauty of his diction and Sanskrit Language—so simple, and at the same time, so

sweet. Even a School-boy with an average knowledge of his mother-tongue anywhere in India will understand thoroughly well not only the gist of these works but also almost everything in details.

Secondly, the verses. These beautiful gems aptly remind the reader often of the immortal poets of the past. The metres used cover a vast field. Long and short metres have been used with equal grace and facility and there is nowhere any trace of any forced composition throughout his works.

Thirdly, by his present attempts, Dr. Chaudhuri has widened the vista of Sanskrit Dramatic Literature. During the time of Lord Buddha and Lord Sri Krishna Caitanya Gauranga Mahaprabhu of Bengal, Asvaghosha, Rupa Goswamin and Kavi Karnapura Goswamin wrote Sanskrit dramas for propagation of Buddhist and Vaisnava Religion and Philosophy in particular, with a view to depicting the lives of the Founders of those schoolf amongst the masses. They have all now become matters so past history. In modern age, Dr. Chaudhuri is using his very facile pen for the propagation of Indian Religion and Philosophy through the Depictation of the lives of the Holy Mothers who were the real Shaktis of those Incarnations of God who very graciously came down on earth to deliver mankind from the clutches of Ignorance and Indolence.

Fourthly by common consent, Dr. Chaudhuri is an outstanding Research Scholar. This ability has found ample expression in his dramas as well. The materials for his dramas, particularly, Visnupriya and Yasodhara have been collected by Dr. Chaudhuri from rare sources, for which also grateful thanks of Lovers of Sanskrit Learning are due to him.

Mahaprabhu-Haridasam depicts both Mahāprabhu and Haridāsa in their loveliest colours, particularly, the latter. This characterisation will serve for a long time to come

as the Fountain Head of the eternal flow of Love and Devotion that represent the life of the celebrated Vaisnava Saint Haridasa.

I do hope that Dr. Chaudhuri will produce many more invaluable similar gems that will shine forth with eternal effulgence to the glory of Independent India.

Nalanda Research Institute,
Bihar 3. 6. 60.
**Satkari Mookherjee**

## Author's Note

With a feeling of great humility and gratitude to Sriman-Mahāprabhu and Mahājananī Viṣṇupriyā, I present the lovers of Sanskrit Learning with another new Sanskrit drama called Mahāprabhu-Haridāsam based on the life of Haridāsa, one of the greatest disciples of Sri Kṛṣṇacaitanya Mahāprabhu of Bengal. This drama was composed during the Holy Rathayatra Festival at Puri in 1958. The greatness of Haridāsa lies in his unflinching devotion to his Guru and the Bhakti-Premadharma for which he stood. He very boldly replied to the then Mulkpati of Bengal that he was wholly willing to embrace death rather than abandon the name of Hari :—

खण्ड खण्ड हय देह, यदि याय प्राण।
तबु आमि वदने ना छाड़ि हरिनाम ॥ ( चैतन्यभागवत )

He was a 'Nāmācārya' and used to recite the name of Hari, three hundred thousand times a day, not always slowly but often very loudly, in order that the whole living world including even plants and animals might be benefitted by it. Such was his majestic influence that even a courtesan named Lakṣahīrā became a nun within three days of her first visit to him. She was defeated in her own purpose and took to a religious life as a consequence (Caitaya-caritāmṛta, Antyalīlā, 3.9-8-163)[1].

Haridāsa was also very intimately connected with Srīla Advaita Prabhu aud they both were much older than Caitanya Mahāprabhu in age. According to Gaudīya Vaiṣṇava Theology, these two great Saints were mainly

1. Cf. याहार निकटे गेले पाप दूरे याय।
एमन दयाल प्रभु केवा कोथा पाय ॥
गङ्गार परश हैले पश्चाते पावन।
दर्शने पवित्र कर, ए तोमार गुण ॥

responsible for the advent of Lord Sri Kṛṣṇa Caitanya Mahāprabhu on earth.

Other close associates of Haridāsa were Sanātana and Rūpa, two of the well-known Ṣaḍvṛndāvana Gosvāmins. They used to live with Haridāsa Thakur whenever they came to Puri for having a Holy sight of the Mahāprabhu.

The joy of Haridāsa Prabhu knew no bounds when he was permitted by the Mahāprabhu to live at a cottage very near his residence because this would give him a unique opportunity to see the Mahāprabhu every day which he did.

Haridāsa courted a voluntary death. He appears to have taken this decision, in order that he might not outlive the Mahāprabhu. Owing to severe austerities, the Mahāprabhu was not then keeping at all well and consequently, Haridāsa wanted to leave his mortal coil earlier.

The Mahāprabhu was sorely grieved at the demise of Haridāsa Prabhu. He dug the grave ( Kabar ) for Haridāsa, spread sands over it and performed all last rites for him including the Mahotsava of Haridāsa, probably, on the same day, himself begging from all for the purpose.

Such is the holy character of Haridāsa and I have humbly attempted to give a pen-picture of this sublime life which has inspired Saints and Sages all throughout the ages.

We are extremely grateful to our revered Guru Prof. Dr. Kshitish Chandra Chatterjee for very kindly publishing the drama in his Journal of repute, the Manjūṣā. Just one year ago, in June, 1959, he also very kindly published another drama from my humble pen, viz. "Bhakti-Viṣṇupriyam" in this Journal. May he enjoy a very long and happy life !

Pracyavani Mandir
3, Federation Street
Calcutta-9
16. 6. 60.

Jatindra Bimal Chaudhuri

# Staging of Mahaprabhu-Haridasam

1. On 22nd June, 1958 at Jagannatha-vallabha Matha, Puri on the occasion of Rathayatra Utsav. Musical programme : Sri Gaurikedar Bhattacharya and Satyeswar Mookherji.

2. On 28.12.58 at Deshapran Hall, Contai, Midnapore, under the auspices of All India Bhakta Sammelan or Devotee's Conference. Musical programme: Sri Meghanath Basak and Sri Gaurikedar Bhattacharya.

3. On 10. 1. 59 on the occasion of the 16th. Foundation Day celebrations of the Prachya Vani Mandir at University Institute Hall, Calcutta. Musical programme: Sri Pankaj Kumar Mallick, Sm. Chhabi Banerji, Sri Bimal Bhushan, Sri Gaurikedar Bhattacharya and Sri Meghanath Basak.

4. On 24th. January, 1959, at Sanskrit Siksha Parishat Hall under the auspices of West Bengal Govt. Vangiya Sanskrit Siksha Parishat on the occasion of Sanskrit Debate Composition under the presidentship of Rai Sri Harendra Nath Chaudhuri, Education Minister. Musical programme: Sri Meghanath Basak and Sri Gaurikedar Bhattacharya.

5. 2nd May, 1959 at the Viswaroopa Theatre Hall on the occasion of Girish Natyotsav Sammelan. Musical programme: Sj. Pankaj Kumar Mullick, Sm. Chhabi Banerji, Sri Maghanath Basak, Sri Bimal Bhushan and Sri Gaurikedar Bhattacharya.

6. On the 14th October, 1959 at Rasikaranjanī Hall, Madras, under the auspices of Gaudiya Math, Madras, with Sri Visnuram Medhi in the chair. Musical programme: Sri Bimal Bhushan, Sri Prabhat Bhushan, Sri Manohar Chaitanya and Sri Sudhir Chatterji.

7. On the 19th. October, 1959 at Pondicherry Sri Aurobindo Ashram. Musical programme: Sri Bimal Bhushan, Sri Prabhat Bhushan, Swami Manohar Chaitanya and Sudhir Chatterji.

8. On 13. 12. 59. at Gobardanga College, 24 Parganahs, on the occasion af the College Foundation and Reunion of old and New Students. Musical programme: Sri Gaurikedar Bhattacharya.

9. On 14th February, 1960 under the auspices of Chinsurah Pandit Mahasammelan. Musical programme: Sri Gaurikedar Bhattacharya.

10. On 15th. February 1960 at College Hall under the auspices of Govt. Janata College and Basic Training College during Lokotsava. Musical programme: Sri Gaurikedar Bhattacharya.

# Summary of Mahaprabhu-Haridasam act by act

## Nandi

Obeisance to Haridāsa, that great devotee of Mahāprabhu, who recited the Name of Hari three hundred thousand times daily, and who, like Bhīṣma, embraced a voluntary death at a ripe old age.

## Prastavana

The Sūtradhāra (Stage-Manager) tells the Naṭī (the Chief Actress) as to how this Drama "Mahāprabhu-Haridāsam" is meant for serving a double purpose, viz., bringing to light the holy life of the great devotee Haridāsa ; and propagating Saukrit Language and Literature through the easily intelligible and enjoyable medium of a Sanskrit Drama.

## First Act

Place—Haridāsa's Hut in Benapole, near Vanagrāma (Bengal)

Time—Midnight.

Haridāsa in deep meditation, and Lakṣahīrā.

Envious of the great fame of Haridāsa, Rāmacandra Khān, the wealthy land-owner of Vanagrāma (Bengal) sends Lakṣahīrā, the famous beauty of his Court, to lead Haridāsa astray. Lakṣahīrā tries her best, three nights in succession, to lure him away from the path of austerity, but herself becomes converted through his divine influence. Haridāsa leaves the place and at his bidding, Lakṣahīrā stays behind to preach the holy name of Hari.

## Second Act : First Scene

Place—Court of Govardhana Dāsa, the richest land-owner of Sapta-grāma ( Bengal).

Time—Morning.

Govardhana Dāsa, Balarāma Ācārya, Gopāla Cakravartin, Haridāsa.

All are anxiously waiting for Haridāsa. When he at last arrives, he is joyfully welcomed by all.

Haridāsa beautifully explains to all present as to how the recitation of the holy name of Hari is meant not for bringing about **Mukti**, but only **Bhakti.**

A Paṇḍita asks Haridāsa as to why he recites the holy name of Hari aloud when the scriptural injunction is to repeat it mentally. Haridāsa explains it by pointing out that the mere hearing too of the holy name of Hari is enough to destroy all sins and that is why, he recites it aloud to benefit others also at the same time.

On this, Gopāla Cakravartin, being infuriated, goes to the length of insulting Haridāsa. But Haridāsa generously forgives him.

**Second Act: Second Scene.**

Place—Residence of Govardhana Dāsa. Time—Evening.
Govardhana Dāsa, his wife and daughter-in-law.

Upset at the asectic tendencies of her only son Raghunātha, Govardhana's wife implores her husband to take proper steps regarding the matter. Govardhana calls his very dear daughter-in-law and enquires of her as to the causes of Raghunātha's Vairāgya or aversion to wordly life. When Raghunātha's wife informs her father-in-law that this is due to her husband's very deep reverence for Haridāsa, she is taken to task by her mother-in-law for not disclosing this to her before. But a true Sahadharmiṇī of her husband, Raghunātha's wife tells her grief-stricken mother-in-law that there is nothing to be perturbed at this, as Vairāgya is, indeed, a great boon of God. Gratified at this spirtual outlook of his daughter-in-law, Govardhana Dāsa praised her whole-heartedly.

**Third Act: First Scene,.**
**(A Farce)**

Place—House of Dambhapati Bhaumika, the rich land-owner of village Phulia (Bengal). Time—Morning.
Dambhapati Bhaumika, Vākyavāgīśa Bhaṭṭācārya, Daṅkaṭaṅka.

Dambhapati Bhaumika is sarcastically discussing the noble feats of Haridāsa like emancipating Lakṣahīrā, getting the Śrāddha-Pātra of the great scholar Kamalākṣa Miśra, and so on,—with his 'yes man' Vākyavāgīśa Bhaṭṭācārya. Vākyavāgīśa, being a greedy man, at first refuses to listen to his master, unless he is promised a good feed. This being done, he joins his master in vilifying Haridāsa, by referring sarcastically to Haridāsa's wonderful feats in making a poisonous snake bow down to him, inducing Mahādevī to come down from Heaven and so on.

At that time, the snake-charmer Daṅkaṭaṅka comes and gives a display of "Kāliya-Damana" dance. Vākyavāgīśa, posing to be equal to Haridāsa, asks Daṅkaṭaṅka to let loose a poisonous snake in his direction. But as soon as the snake tries to strike at him, both Daṇkaṭaṇka and Dambhapati flee away in fright.

**Third Act : Second Scene**

Place—The bank of Ganga at Phulia (Bengal).

Time—Morning

Haridasa, Rahim, Karim (Constable).

At the order of Garai Kazi, ruler of Phulīā-Śāntipura, Rahim and Karim arrest Haridāsa, who laughs and cries, sings and dances, in a state of ecstasy.

**Third Act : Third Scene**

A jail scene

**Third Act : Fourth Scene**

Place—Court of Justice. Time—Noon.

Garāi Kāzi, Mulk Pati, Rahim, and Karim (Constables).

Haridāsa is convicted to be flogged to death at "Vaisa-Bazar" (Market Place).

**Third Act : Fifth Scene**

Place—"Vaisa-Bazar" (Market-Place). Time—Noon.

Rahim, Haridāsa, Bhakta-Cāraṇa-Kavi.

Though incessantly flogged, Haridāsa is not killed. Bhakta-Cāraṇa-Kavi (wandering Minstrel, comes and sings

to the effect that nothing on earth can ever kill a true Bhakta.

**Fourth Act : First Scene**

The Advent of Mahāprabhu in Nadia. Unaccountable joy of Advaitaprabhu and Haridāsa.

**Fourth Act : Second Scene**

Haridāsa in Kulīnagrāma, meets a villager who leads him to the house of Satyarāja. Haridāsa on nine kinds of devotion.

Place—Navadvīpa (Bengal.) Time—Morning.

Mahāprabhu, Haridāsa, Bhakta.

**Fifth Act : First Scene.**

The occasion is the holy "**Sata-prahariya-Bhava**" or "Boon-giving Ceremony" of Mahāprabhu.

On seeing the marks of flogging on the back of Mahaprabhu, Haridasa comes to realise the great truth that God Himself takes over all the injuries of His devotees, and falls into a swoon of ecstasy. When he recovers, Mahāprabhu tells him to ask for a boon from him. Haridāsa asks only this boon viz. that he may always like a humble street-dog eat the leavings of the devotees of God.

**Fifth Act : Second Scene.**

Place—Navadvīpa. Time—Morning.

Pathicārin, Nityānanda, Haridāsa, Jagāi (Jagannātha) Mādhāi Mādhava); and Mahāprābhu.

For propagating Mahāprabhu's **Prema-Dharma,** Haridāsa and Nityānanda sing the holy name of Hari in the streets of Navadvīpa at every nook and corner, from house to house.

Infuriated at this, the ferocious **Kotwals** Jagāi and Mādhāī, in a drunken state, attack Haridāsa and Nityānanda. To save Haridāsa's life, Nityananda sends him away, through a pretext, to Mahāprābhu and tries his best to pacify the two But Mādhāi, in a fit of rage, strikes Nityānanda with a piece of broken mouth from an

earthen pitcher; and blood gushes out of Nityananda's head. Exasperated at the piteous sight, Mahāprabhu is about to punish the ruffians when Nityānanda intervenes and begs Mahāprabhu's forgiveness on their behalf.

**Fifth Act : Third Scene.**

Haridāsa's acting in a play with Mahāprabhu.

**Fifth Act : Fourth Scene.**

Place—Public Road at Navadvīpa (Bengal).

Time—Afternoon.

Haridāsa, Advaita Prabhu, Mahāprabhu, Nityānanda, Bhaktas, Chand Kazi.

Violating the orders of Chand Kazi, Mahāprabhu, with his devotees, leads a huge Kīrtana-party to Chand Kazi's place and the Kazi himself become a devotee of Mahāprabhu.

**Fifth Act : Fifth Scene.**

Haridāsa bids farewell to Mother Śacī for leaving for Puri.

**Sixth Act : First Scene.**

Place—Gambhīra Mandira at Puri. Time—Morning.

Haridāsa, Bhaktas, Mahāprabhu.

Haridāsa prostrates himself in front of the Jagannātha Mandira, Puri. Mahāprabhu raises him up and embraces him in spite of his protests. Then, Mahāprabhu arranges for Haridāsa's stay at the Garden of Kāśī-Miśra, close to Gambhīrā Mandira, where he himself is staying. This makes Haridāsa very happy.

**Sixth Act : Second Scene.**

Place—Haridāsa's Cottage Time—Morning.

A friendly-quarrel between Sanātana and Haridāsa.

**Sixth Act : Third Scene.**

Place and time : Same as above.

Haridāsa's discourse with the Mahāprabhu on the way of release from bondage. Mahāprabhu instructs Sanātana through Haridāsa.

### Seventh Act : First Scene.

Time—Śuklā Trayodaśī of the month of Bhādra.
Place—Siddhavakula Āśram of Haridāsa.

Govinda informs Mahāprabhu about Haridāsa's disinclination to take even the little food he used to do and subsquent consent to take only a particle of the same.

Mahāprabhu pays him a visit immediately afterwards, when Haridāsa intimates to Him about his determination to court death the next day. Mahaprabhu's loving persuasion to the contrary fails.

### Seventh Act : Second Scene.

Place—Siddha-Vakulāśrama at Puri. Time—Morning.
Mahāprabhu, Haridāsa, Bhaktas.

Haridāsa embraces a voluntary death, holding on his chest the holy feet of Mahāprabhu.

### Seventh Act : Third Scene.

Place—Jagannātha Mandira at Puri. Time—Evening.
Mahāprabhu, Rāmānanda, Bhaktas.

After Haridāsa's demise, Mahāprabhu himself lovingly performs his obsequies; and even begs from others for meeting the expenses of the same. In a tear-choked voice, he tells all present that although Haridāsa is no more, yet there cannot be any separation between himself and Haridāsa. Moreover, Haridāsa will for ever remain immortal in the Universe, as his recitals of the holy name of Hari will be echoed and re-echoed eternally, in the sky and the air, on the mountain-top and under the sea; in cities and forests.

Bhaktā-Cāraṇa-Kavi fills up the air by his Harināma Saṃkirtana.

### Bharata-Vakyam

# श्रीश्रीमहाप्रभु-हरिदासम्

डक्टर-श्रीयतीन्द्रविमल-चतुर्धुरीण-विरचितम्

## नान्दी

प्रणमामि महाप्रभु श्रीचरणाश्रितं
भक्तशिरोमणि हरिदासनामाङ्कितम् ।
प्रतिमासं कोटीहरिनाम जपरतं
भीष्मसमिच्छामृत्युं देवस्तुतम् ॥१

यवनश्रीहरिदासो भक्तिधर्म समुल्लासो
विजयतां यावच्चन्द्रश्च दिवाकरः ।
भक्तवृन्द-वराश्रयो विश्वपुण्यसमुच्चयो
विकिरतु चाशिषो नो नौमि देवं तम् ॥२

सूत्रधारः—( नटीमुद्दिश्य ) आर्ये ! यदि प्रारब्धकार्यम् अवसितं, तदत्रागम्यताम् ।

नटी—आर्य ! इयमहम् अस्मि ।

सूत्रधारः—देवि ! अद्य खलु पश्चिमवङ्ग-सर्वकारीय-संस्कृतशिक्षा-परिषत्-कर्तृपक्षैः अनुरुद्धोऽस्मि महाप्रभोर्जीवनप्रियतर-शिष्य-श्रीहरिदास-ठक्कुरमहोदयस्य पूत-जीवनचरितमधिकृत्य किमपि नाटकं प्रयोजयितव्यम् इति। तदयं पश्चिमवङ्गीय-संस्कृत-शिक्षा-परिषदध्यक्षेण डक्टर-श्रीयतीन्द्र-विमल-चतुर्धुरीणेन विरचितं "श्रीश्रीमहाप्रभु-हरिदासम्" नाम नवीनं संस्कृत-नाटकं प्रयोक्ष्यामहे ।

नटी—देव ! कथं सत्सु बहुषु महात्मसु भक्तजनेषु, हरिदास एव वरणीयतमो मन्यते ?

